11-1
Duplicate

THE

PRINCESS OF WALES

SARASVATI BHAVANA TEXTS

No. 79

(PART III)

---

THE

# TAUTĀTITAMATATILAKA

(PART III)

GOVERNMENT SANSKRIT LIBRARY
BENARES.

Price Rs. 2-12-0]



THE

# PRINCESS OF WALES SARASVATI BHAVANA TEXTS SERIES

---

EDITED

BY

**Dr. MANGAL DEVA SHASTRI,**
M. A., D. Phil. (Oxon.),
PRINCIPAL,
GOVT. SANSKRIT COLLEGE, BENARES

---

No. 79

THE

# TAUTĀTITAMATATILAKA

(PART III)

---

Printed by
Rameshwar Pathak
at the Tara Printing Works, Benares City.
1944.



श्री भवदेवभट्टविरचितं

# तौतातितमततिलकम्

तृतीयाध्यायात्मकस्तृतीयो भागः

——:o:——

THE

# TAUTĀTITAMATATILAKA

by

BHAVADEVA BHAṬṬA

(PART III)

Edited

by

Mahāmahopādhyāya
Pt. A. CHINNASWAMI SASTRI,
Principal, College of Theology

and

Pt. PATTABHIRAMA SHASTRI,
Mīmāṁsā-Nyāya-Sāhityāchārya,
Prof. of Mimamsa,
Benares Hindu University,
Benares

1944

# FOREWORD

The Tautātitamatatilaka by Bhaṭṭa Bhavadeva, being published herewith for the first time as the Sarasvatī Bhavana Texts Series No. 79, is a most valuable addition to the Mīmāṁsā literature, available in printed form, and is sure to be highly welcomed by scholars interested in the subject. The edition is based on a single unique manuscript of the work, dated Saṁvat 1488, which I was fortunate enough to secure for the Government Sanskrit College library in 1937. Brief details of the Manuscript are as follows :—

The MS. consists of three parts, having separate pagination and respectively corresponding with the first three Adhyāyas of the Mīmāṁsā-sūtras of Jaimini.

The 2nd part (=Adhyāya) begins on fol. 1 b :— ओंनमो भगवते वासुदेवाय ॥ भावार्थाः कर्मशब्दास्तेभ्यः क्रिया प्रतीयेतैष ह्यर्थो विधीयते ।. On the top of the same page is written in different hands शंकरस्य and भट्टनीलकण्ठीयं and भट्टभानोः ।

It ends on fol. 65a :—इति वालवलभीभुजङ्गापरनाम्नो·······स्य कृतौ तौताःतितमततिलके द्वितीयोध्यायः समाप्तः ॥ शुभं ॥ संवत् १४८८ समये पौष सुदि ५ रविवासरे ॥ श्रीमत्काश्यां विश्वेश्वर-राजधान्यां ॥ श्रीः ॥ this is followed in another hand by :—श्रीरविशरणम् भट्टभानोः ।

1. It is a matter of regret that it is not possible to give here the details for the first part of the MS., which has been transferred to Naini Tal, for the time being, under Govt. orders.

The 3rd part ( = Adhyāya) begins on fol. 1 b :—श्रीगणेशाय नमः । अथातः शेषलक्षणम् ।.... It ends on fol. 91 a (not numbered) :—इति बाल....श्रीभुजंगापरनाम्नो भट्टभवदेवस्य कृतौ तौतातितमततिलके तृतीयाध्यायस्याष्टमः पादः समाप्तश्चायमध्यायो ग्रंथश्च । संवत् १४८८ वर्षे माघसुदि ५ रविवासरे (letters rather smudged) ॥ श्रीमत्काश्यां ॥ शुभं ॥ On the next page is written in three different hands : रघुनाथ and सिद्धेश्वरस्य and भट्टभानोः रविश्शरणं ।

It is worth noting that though there is no break in the pagination of the folios, the commentary is completely lacking for the 4th Pāda of Adhyāya III.

The other details of the MS. are : Size : 14·1″ × 3·9″ ; Lines 10 in a page, and letters 80 in a line ; Hand-writing, very fine and generally correct. The Manuscript seems to have been carefully read and corrected, specially for the first Adhyāya. In the next two Adhyāyas, letters are often smudged and there occur also lacunas.

The work is a sort of commentary on the Tantra-vārttika of Kumārila Bhaṭṭa, and is one of the three important commentaries on it, the other two being, the Ajitā of Paritoṣa Miśra and the Nyāya-sudhā of Bhaṭṭa Someśvara. The special importance of the work lies in its detailed and clear statement of the Adhikaraṇas, specially in the first Adhyāya, both according to the Bhaṭṭa School and the Prabhākara School. The name of the work is derived from the word Tutātita which is said to be another name of Kumārila.

The author of this important work, Bhavadeva Bhaṭṭa, was also known by the name of Bāla-

valabhībhujaṅga, as would appear from the various colophons of the work. The other points about the author, including his date, have been ably dealt with by the learned editors in their Introduction, pages 2-13.

We are fortunate in having as its editors the well-known Mīmāṁsaka, MM. Pt. A. Chinna Swami Shastri, Principal, College of Theology, Benares Hindu University, and his brilliant pupil, Pt. Pattabhirama Shastri, Mimamsacharya. The edition reflects great credit on both the Pandits for their scholarly work as well as hard labour in preparing this edition on the basis of a single manuscript in old Nāgari script. The two appendices, the first giving references for the various quotations found in the work, and the second giving variants from an incomplete manuscript of the same work belonging to the Madras Oriental Library, greatly add to the utility of the edition. For all this, the learned Editors deserve thanks of scholars interested in the subject.

Sarasvati Bhavan,
12th March, 1944.

M. D. SHASTRI,
PRINCIPAL,
Sanskrit College,
Benares.

श्रीः

# भूमिका

अथेदानीं 'तौताततिमततिलकस्य' तृतीयो भागः पाठकानां पुरः प्रकाशं नीयते। महदिदं प्रमोदस्थानमस्माकं यदतिविषमेऽप्यस्मिन् समये ग्रन्थरत्नमिदं प्रकाशं नीतमिति। पञ्चषेभ्यो मासेभ्यः पूर्वं ग्रन्थस्यास्य प्रकाशनमतिदुष्करमित्येवाहं निरचिनवम्, परन्तु प्राचीनग्रन्थसमुद्धरणदीक्षादीक्षितानां श्रीमतां राजकीयसंस्कृतमहाविद्यालये आध्यक्ष्यमावहतां Dr. श्रीमङ्गलदेवशास्त्रिमहाभागानां प्रशंसनीयेन यत्नेनैवेदं कार्यं निष्प्रत्यूहं सम्पन्नमिति प्रथमं शतशस्ते धन्यवादैस्समभिपूर्यन्ते।

## ग्रन्थपरिचयः

तौताततिमततिलकाभिधोऽयं ग्रन्थमणिः मीमांसादर्शने प्रधानतमं स्थानमर्हतीत्येव वक्तव्यम्। भट्टपादैर्विरचितं तन्त्रवार्तिकं प्राधान्येन व्याख्यातुं प्रवृत्तोऽयं ग्रन्थः स्वीयं कार्यं साधु सम्पादयामासेति न निवेदनीयं पाठकमहोदयेभ्यः। यद्यपि तन्त्रवार्तिकीयं प्रतीकमादाय न्यायसुधादिरिव न व्याख्याति, तथापि तत्तदधिकरणशरीरं शास्त्रीयमर्यादानुल्लङ्घनेन साङ्गं निरूप्य पूर्वपक्षस्य सिद्धान्तस्य चावसाने 'तदुक्तम्' 'तथा चोक्तम्' 'तथा चाचार्यः' इत्येवं वार्तिककारिकाः पङ्क्तीश्चोच्चावचं समुद्धृत्य स्वाभिहितान् विषयानुपोद्बलयति। एतद्ग्रन्थोपपादितमधिकरणं समग्रमधीत्य तन्त्रवार्तिके यदि तदवलोकयामस्तर्हि नूनं भट्टपादानां गभीर आशयस्साधु विदितो भवेदिति सुदृढमभिधातुं शक्यते।

साम्प्रतं तन्त्रवार्त्तिकस्य टीकात्रयं समुपलभ्यते—'अजिता' 'न्यायसुधा' 'तौताततिमततिलकञ्चे'ति। तत्राद्या 'परितोषमिश्रेण', द्वितीया 'भट्टसोमेश्वरेण', तृतीया भट्टभवदेवेन च विरचिताः। अजितामवलोक्यैव भट्टभवदेवः तस्या अपर्याप्ततां निश्चित्यैतद्ग्रन्थं विरचयामासेति स्वयमेव वक्ति ग्रन्थादौ—"अजिता नैव सुबोधा"

"न जानते तन्त्रटीकार्थम्" इत्यादि। न्यायसुधा च यद्यपि वार्तिकीयं प्रतीकमादाय सावतरणमतिगभीरया शैल्या व्याख्याति, तथापि तस्या अतिविस्तृतत्वात् प्रौढत्वेन व्याख्यासापेक्षत्वाच्चाध्येतारः कोमलमतयस्तत्र भृशं क्लिश्नन्ति। अतश्चाजितान्यायसुधापेक्षया प्रकृतस्य ग्रन्थस्य वार्तिकाशयाविष्करणे प्रथमं स्थानं परिकल्पनीयम्। अपरोऽपि विशेषः कश्चन जागर्त्यस्मिन् ग्रन्थरत्ने—यदुत प्रथमाध्यायपर्यन्तं प्रत्यधिकरणम्, तदुपरि चाग्रन्थपरिसमाप्ति यत्र यत्र सिद्धान्ते प्राभाकरा विप्रतिपद्यन्ते, तत्र तत्र तन्मतं साधु निरूप्य दूषयित्वा च वार्तिककारीयं सिद्धान्तं निरूपयतीति। अधिकरणेषु प्राभाकरमतपरिज्ञानं दुष्करमेवासीत्, तदनेन दूरीकृतमिति धन्योऽद्य मीमांसकसमाजः।

किञ्च खण्डदेवप्रभृतयो नवीना मीमांसकमूर्धन्याः क्वचिन्मण्डनाय क्वचिच्च खण्डनायैतद्ग्रन्थाभिहिता युक्तीस्समादाय स्वरचितान् ग्रन्थान् परिपोषयन्ति। तथाहि—अभ्यासाधिकरणपूर्वपक्षे खण्डदेवाचार्याः "समिधो यजति" इति प्रथमप्रयाजविधायकवाक्ये तत्प्रख्यन्यायेन समित्पदस्य नामधेयत्वाङ्गीकारेण यागविधायकत्वं स्वीकृत्य तत्रैव "तनूनपातं यजति" इत्यादिवाक्यैः तनूनपादादिदेवता विधीयन्त इति प्रथमं पूर्वपक्षयित्वा, येनैव न्यायेन समित्पदस्य नामधेयत्वं सिध्यति, तेनैव तनूनपादादिशब्दानामपि तत्सिध्येदिति विनिगमनाविरहात् क्वचिदपि देवताविधायकत्वं न सम्भवेदित्यस्वरसं मनसि निधाय, उपांशुयाजानुवादेन विद्वद्वाक्यविहितकर्मानुवादेन वा पञ्चस्वपि प्रयाजवाक्येषु देवताविधिरिति तौताततितमततिलकाभिहितरीत्यैव पूर्वपक्षमुपसमाहार्षुः। एवं बहुषु स्थलेषु 'अत्र भवदेवः' 'भवदेवस्तु' 'अस्तु वा भवदेवोक्त एव पक्षः' इत्येवमेतद्ग्रन्थाभिहितान् विषयान् परिगृह्य स्वीयं ग्रन्थं समुपबृंहयन्ति खण्डदेवप्रभृतयो मीमांसकाग्रेसराः। अतोऽयं ग्रन्थमणिर्मीमांसादर्शने मुख्यतम इति स्वीकर्तव्यम्।

## ग्रन्थकारपरिचयः

अत्युत्तमस्यास्य ग्रन्थरत्नस्य रचयिता भट्टश्रीभवदेवः। कोऽयं भवदेवः? कं देशं जन्मनायमलञ्चकार? कास्य योग्यता?

को वास्य कालः ? कानि ग्रन्थरत्नान्ययं न्यभान्त्सीत् ? इति विचार्यमाणे—भवदेवमित्रेण केनचन 'वाचस्पति'[1] संज्ञकेन पण्डितप्रवरेण भुवनेश्वरस्थानन्तवासुदेवमन्दिरे शिलायां लिखितात्प्रशस्तिपत्रादेवमस्य वृत्तान्तस्समधिगम्यते—वङ्गेषु नैकविधैः श्रोत्रियैर्ब्रह्मनिष्ठैस्सामवेदान्तर्गतकौथुमशाखावलम्बिभिस्सावर्णगोत्रतिलकैरध्युषिते राढाया अलङ्कारभूते 'सिद्धल'[2] इत्याख्ययाद्यापि प्रथिते ग्रामे 'गोवर्धन' संज्ञकाद् द्विजवरात् वन्द्यघटीकुलप्रसूतायां[3] 'साङ्गोकायाम्' सर्वलक्षणसंयुतस्समुदभूदयं श्रीभवदेवः । बाल्य एव वयसि गोवर्धनोऽस्य पिता स्वकुलपरम्परागतं सामवेदं साङ्गमध्याप्य शास्त्राण्यध्येतुमेनं कस्याञ्चन वलभ्यां प्रवेशयामास । तत्रायमधीयानोऽल्पीयस्येव काले पूर्वोत्तरमीमांसयोः, धर्मशास्त्रे, ज्यौतिषे, आयुर्वेदास्त्रवेदार्थशास्त्रप्रभृतिषु चानुपमं पाण्डित्यं सम्पाद्य 'हरिवर्मदेवस्य' राज्यसभायां प्रधानामात्यपदमध्यतिष्ठत् । तत्समयेऽयं राढायां श्रान्तपथिकप्राणाशयप्रीणनं कञ्चनानल्पं जलाशयं निर्माय, तस्यैव परिसरे महान्तं प्रासादञ्च विधाय तत्र नारायणस्यानन्तस्य, नृसिंहस्य च मूर्तीः प्रतिष्ठाप्योद्यानरत्नमप्येकं नन्दनोपमं निर्मम इति । तथा चेयं प्रशस्तिः—

"ॐ नमो भगवते वासुदेवाय
गाढोपगूढकमलाकुचकुम्भपत्र-
मुद्राङ्कितेन वपुषा परिरिप्समानः ।
मा लुप्यतामभिनवा वनमालिकेति
वाग्देवतोपहसितोऽस्तु हरिः श्रियै वः ॥ १ ॥

---

१. वाचस्पतिरयं वङ्गदेशेषु 'घटक' शब्दवाच्यब्राह्मणेष्वन्तर्गत आसीदिति प्रतीयते । तत्र 'घटक' शब्दवाच्यैर्ब्राह्मणैर्निर्णीतयोरेव वधूवरयोः परस्परमुद्वाहसम्बन्धः क्रियत इति चिरन्तनी प्रथा ।

२. ग्रामोऽयं वङ्गेषु गङ्गाया दक्षिणदिग्भागे, हुग्ली (Hugli) नद्याः पश्चिमदिग्भागे च वर्तते ।

३. वङ्गेषु 'भट्टनारायण' वंशस्य वन्द्यघटीति संज्ञा । एतद्वंशोद्भवा एव 'वन्द्योपाध्याया' इति व्यपदिश्यन्ते वङ्गेषु ।

बाल्यात्प्रभृत्यहरहर्यदुपासितासि वाग्देवते तदधुना फलतु प्रसीद ।
वक्तास्मि भट्टभवदेवकुलप्रशस्तिसूक्ताक्षराणि रसनाग्रमधिश्रयेथाः॥२॥

सावर्णस्य मुनेर्महीयसि कुले ये जज्ञिरे श्रोत्रियाः
तेषां शासनभूमयोऽजनि गृहं ग्रामाः शतं सन्तु ते ।
आर्यावर्तभुवां विभूषणमिह ख्यातस्तु सर्वाग्रिमो
ग्रामस्सिद्धल एव केवलमलङ्कारोऽस्ति राढाश्रियः ॥ ३ ॥

सत्पल्लवः स्थितिमयो दृढबद्धमूलः
शाखाग्रलग्नमुखरद्विजशीलितश्रीः ।
न ग्रन्थिलो न कुटिलः सरलस्सुपर्वा
सर्वोन्नतस्सुखमिह प्रससार वंशः ॥ ४ ॥

तद्वंशोत्तंसमणिः (कलावदातोऽपि) तापनप्रतिमः ।
भव इव विद्यातत्त्वप्रभवः प्रबभूव भवदेवः ॥ ५ ॥

अग्रजानुजयोर्मध्ये महादेवाट्टहासयोः ।
स जज्ञे यज्ञपुरुषो विरिञ्चिहरयोरिव ॥ ६ ॥

स शासनं गौडनृपादवाप श्रीहस्तिनीभिट्टमहीष्टभूमिः ।
अष्टौ सुतानष्टमहेशमूर्तिप्रख्यान् विजज्ञेऽथ रथाङ्गमुख्यान् ॥ ७ ॥

रथाङ्गादत्यङ्गः समजनि जनानन्दजननः
शशीव क्षीरोदादविकलकलाकेलिनिलयः ।
स्फुरत्प्रज्ञाज्योतिः स्फुरित इति नाम्ना दिशि दिशि
प्रकाशोऽभूत्सौम्यग्रह इव बुधस्तस्य तनयः ॥ ८ ॥

तस्मादभूदभिजनाभ्युदयैकबीजमव्याजपौरुषमहातरुमूलकन्दः ।
श्री आदिदेव इति देव इवादिमूर्तिर्मर्त्यात्मना भुवनमेतदलङ्करिष्णुः॥९॥

यो वङ्गराजराज्यश्रीविश्रामसचिवः शुचिः ।
महामन्त्री महापात्रमवन्ध्यः सन्धिविग्रही ॥ १० ॥

स देवकीगर्भभवं भुवः स्थितौ समर्थमुच्चैःपदलब्धपौरुषम् ।
सरस्वतीजानिमजीजनत्सुतं जगत्सु गोवर्धनमच्युतोपमम् ॥ ११ ॥

वीरस्थलीषु च सभासु च तीर्थिकानां
दोर्लीलया च कलया च वचस्वितायाः ।

यो वर्धयन् वसुमतीञ्च सरस्वतीञ्च
द्वेधा व्यधत्त निजनामपदं सदर्थम् ॥ १२ ॥
वन्द्यां वन्द्यघटीयस्य ब्रह्मणः प्रयतां सुताम् ।
साङ्गोकामङ्गनारत्नं पत्नीं स परिणीतवान् ॥ १३ ॥

तस्यां स्वप्नविधानबोधितनिजोत्पादस्स देवो हरि-
र्जातः श्री भवदेवमूर्तिरमुतः क्ष्मामण्डलीकश्यपात् ।
यत्पाणिप्रणयिद्वयं जलजयोरालक्षितं लक्ष्मणा
यस्यान्तर्निहितोऽस्ति कौस्तुभ इति ज्ञातं प्रकाशोदयात् ॥ १४ ॥

लक्ष्मीं दक्षिणदोष्णि मन्त्रविभवे विश्वम्भरामण्डलं
जिह्वाग्रे च सरस्वतीं रिपुतनौ नागान्तकं पत्रिणम् ।
चक्रं पादतले निवेशितवता दिव्यं तदाद्यं वपुः
निह्नोतुं निजचिह्नमेतदमुना नूनं विपर्यासितम् ॥ १५ ॥

यन्मन्त्रशक्तिसचिवः सुचिरं चकार
राज्यं स धर्मविजयी हरिवर्मदेवः।
तन्नन्दने चलति यस्य च दण्डनीति-
वर्त्मानुगा बहलकल्पलतेव लक्ष्मीः ॥ १६ ॥

सत्पात्रस्य महाशयस्य कमलाधारस्य यस्य क्षमां
बिभ्राणस्य गुणाम्बुधेरकलितस्यान्तर्नदीनात्मनः ।
मर्यादामहिमप्रसादशुचितागाम्भीर्यधैर्यस्थिति-
प्रायः प्रायश एव वाक्पथमतिक्रान्तास्स्वदन्ते गुणाः ॥ १७ ॥

महागौरीकीर्तिः स्फुरदसिकराला भुजलता
रणक्रीडा चण्डी रिपुरुधिरचर्चा रणभुवः ।
महालक्ष्मीमूर्तिः प्रकृतिललितास्ता गिर इति
प्रपञ्चः शक्तीनां यमिह परमेशं प्रथयति ॥ १८ ॥

यद्ब्राह्मतेजसि बलीयसि मन्दवीर्यः खद्योतपोतकरणिं तरणिस्तनोति ।
उच्चैरुदञ्चति यदीययशश्शरीरे जातस्तुषारशिखरी ननु जानुदघ्नः॥१९॥

ब्रह्माद्वैतविदामुदाहरणभूरुद्भूतविद्याद्भुत-
स्रष्टा भट्टगिरां गभीरिमगुणप्रत्यक्षदृश्वा कविः ।
बौद्धाम्भोनिधिकुम्भसम्भवमुनिः पाषण्डवैतण्डिक-
प्रज्ञाखण्डनपण्डितोऽयमवनौ सर्वज्ञलीलायते ॥ २० ॥

सिद्धान्ततन्त्रगणितार्णवपारदृश्वा विश्वाद्भुतप्रसविता फलसंहितासु ।
कर्ता स्वयं प्रथयिता च नवीनहोराशास्त्रस्य यः स्फुटमभूदपरो वराहः॥

यो धर्मशास्त्रपदवीषु जरन्निबन्धानन्धीचकार रचितोचितसत्प्रबन्धः ।
शुल्याख्यया विशदयन्मुनिधर्मगाथः स्मार्तक्रियाविषयसंशयमुन्ममार्ज॥

मीमांसायामुपायस्स खलु विरचितो येन भट्टोक्तनीत्या
यत्र न्यायास्सहस्रं रविकिरणसमा न क्षमन्ते तमांसि ।
किं भूम्ना सीम्नि साम्नां सकलकविकलास्वागमेष्वर्थशास्त्रे-
ष्वायुर्वेदास्त्रवेदप्रभृतिषु कृतधीरद्वितीयोऽयमेव ॥ २३ ॥

यस्य खलु बालवलभीभुजङ्ग इति नाम नादृतं केन ।
मीमांसयापि सपुलकमाकर्णितवर्णितोद्गीतम् ॥ २४ ॥

दंष्ट्रालदुष्टभुजगव्रणमोहरात्रिप्रत्यूषतूर्यनिनदैरिव मन्त्रवर्णैः ।
यो जीवयन् जगदशेषमभूदपूर्वमृत्युञ्जयो गरलकेलिषु नीलकण्ठः॥२५॥

राढायामजलासु जाङ्गलपथग्रामोपकण्ठस्थली-
सीमासु श्रममग्नपान्थपरिषत्प्राणाशयप्रीणनः ।
येनाकारि जलाशयः परिसरस्नाताभिजाताङ्गना-
वक्त्राब्जप्रतिबिम्बमुग्धमधुपीशून्याब्जिनीकाननः ॥ २६ ॥

तेनायं भगवान् भवार्णवसमुत्ताराय नारायणः
शैलस्सेतुरिव प्रसाधितधरापीठः प्रतिष्ठापितः ।
यः प्राचीवदनेन्दुनीलतिलको लीलावतंसोत्पलो
भूमेर्भूतलपारिजातविटपी सङ्कल्पसिद्धिप्रदः ॥ २७ ॥

तेन प्रासाद एष त्रिपुरहरगिरिस्पर्धया वर्धितश्रीः
श्रीमान् श्रीवत्सलक्ष्मा हरिरिव विहितो विष्फुरच्चक्रचिह्नः ।
जित्वा यो वैजयन्तं वियति वितनुते वैजयन्तीविलासान्
कैलासे नाभिलाषं कलयति गिरिशो यस्य संलक्ष्य लक्ष्मीम्॥२८॥

न्यवीविशद्वेश्मनि तत्र विष्णोः सनिर्भरं गर्भगृहान्तरेषु ।
नारायणानन्तनृसिंहमूर्तीर्विधातृवक्त्रेष्विव वेदविद्याः ॥ २९ ॥

एतस्मै हरिमेधसे वसुमतीविश्रान्तविद्याधरी-
विभ्रान्ति दधतिः(?) शतं स हि ददौ सारङ्गशावीदृशः ।
दग्धस्योग्रदृशा दृशैव दिशतिः ? कामस्य सञ्जीवनं
काराः कामिजनस्य सङ्गमगृहं सङ्गीतकेलिश्रियाम् ॥ ३० ॥

प्रासादाग्रे स खलु जगतः पुण्यपण्यैकवीथिं
चक्रे वापीं मरकतमणिस्वच्छसुच्छायतोयाम् ।
मध्ये वारि प्रतिकृतिमिषाद्दर्शयन्तीव तादृग्
विष्णोर्धामाद्भुतमहिकुलस्याधिकं या चकास्ति ॥ ३१ ॥

व्यधित विबुधधाम्नः सीम्नि संसारसारं
स खलु निखिलनेत्रानन्दनिःष्यन्दपात्रम् ।
त्रिभुवनजयखिन्नानङ्गविश्रामधाम
प्रथितरतिविभावस्थानमुद्यानरत्नम् ॥ ३२ ॥

तस्यैव प्रियसुहृदा द्विजाग्रिमेण
श्रीवाचस्पतिकविना कृता प्रशस्तिः ।
आकल्पं शुचि सुरधाममूर्तिकीर्ति-
रध्यास्तां जघनमियं सुवर्णकाञ्ची ॥ ३३ ॥

प्रशस्तिरियं बालवलभीभुजङ्गापरनाम्नो भट्टश्रीभवस्य" ।

प्रशस्तिपत्रादस्माद्भवदेवस्य पवित्रतमः कश्चन वंशवृत्तः[1], अनन्यादृशः पाण्डित्यप्रकर्षश्च स्फुटमवगम्यते । मीमांसादर्शनेन साकमस्य धर्मशास्त्रेऽपि वैदुष्यमतितरामासीदिति गम्यते । राढा-

---

१.



स्वद्यापि एतद्विरचितस्यैव धर्मनिबन्धस्य विवाहादिस्मार्तपद्धति-ग्रन्थस्य च प्रचारः। तत्रत्यास्सामवेदिनस्सर्वेऽपि भवदेवपद्धति-मेवावलम्ब्याद्यापि स्मार्तकर्माण्याचरन्ति। ज्यौतिषशास्त्रेऽप्यस्या-नल्पं पाण्डित्यमासीदिति प्रशस्तितो ज्ञायते। एवमयं सर्वपथीनेन पाण्डित्यप्रकर्षेण समेतो वङ्गेषु प्रथितयशा अवर्तत। अस्य 'बाल-वलभीभुजङ्गः' इत्यपरं नाम। नाम्नोऽस्य किं प्रवृत्तिनिमित्तमिति स्पष्टं न ज्ञायते। तौतातितमततिलकस्य मङ्गलप्रस्तावे—

मामध्ययनदशायामुवाच वाचं दर्शि (?) स्वप्ने।
बालवलभीभुजङ्गापरनामा त्वमसि भवदेव॥

इत्युपलभ्यमानेन पद्येनाध्ययनसमयेऽयं संज्ञामिमामवापेत्येता-वन्मात्रं प्रतीयते। एतत्संज्ञाविषये जनश्रुतिरपि काचनैवं वर्तते—गोवर्धनोऽस्य पिता बाल्ये वयस्येनमध्येतुं यदा कस्याञ्चन वलभ्यां प्रावेशयत्, तदा तत्रायमधीयानोऽतिसौक्ष्म्याद्बुद्धेः मुखरत्वाच्च निखिलानामपि तत्रत्यानां बालानां भयप्रदत्वेन तत्रत्यैः 'बालवलभी-भुजङ्ग' इति व्यपदिष्ट इति। जनश्रुतिरियं निर्मूलेत्यभ्यूहितुं न शक्यते। ध्वन्यालोकलोचनकारा अभिनवगुप्तपादा[1] अप्येवमेव बालवलभीभुजङ्ग इति संज्ञां भट्टतौतसकाशादध्ययनसमये पूर्वोक्त-कारणादेवाभजन्तेति काव्यप्रकाशटीकायां बालबोधिन्यामुपलभ्यते[2]। अत इदमपि कारणमेतन्नामप्राप्तौ भवितुमर्हतीति वयमाकलयामः।

## अनेन विरचिता ग्रन्थाः

भवदेवेन तौतातितमततिलकेन साकं 'प्रायश्चित्तनिरूपणम्'[3] 'कर्मानुष्ठानपद्धतिः'[4] ( 'दशकर्मपद्धतिः' or 'दशकर्मदीपिका' इत्यपि नामान्तरम् ) 'नवीनहोराशास्त्रम्' इति च ग्रन्था निरमीयन्त।

---

१. Abhinavagupta's date 1013. A. D. (See Dhvanyālōka's introduction, P. 15, Chowkhamba ed.)

२. See Kāvyaprakāśa with Bālabōdhinī, P. 95, Poona ed.

३. 'मन्वादिस्मृतिमालोच्य सुविविच्य यथाक्रमम्।
क्रियते भवदेवेन प्रायश्चित्तनिरूपणम्॥ इत्यादिमः श्लोकः।

४. गृह्यसूत्रार्थमालोच्य छन्दोगानामियं क्रमात्।
कृता श्रीभवदेवेन कर्मानुष्ठानपद्धतिः॥ इत्यादिमः श्लोकः।

अमीषु सर्वेष्वपि पुस्तकेषु[1] बालवलभीभुजङ्ग इति नाम तत्तत्प्रकरणावसाने उल्लिखितमुपलभ्यते। अतश्च प्रकृतभवदेवेनैवामी ग्रन्था विरचिता इति निश्चेतव्यं भवति। अत एव 'सम्बन्धविवेक' इति कश्चन ग्रन्थः[2] भवदेवरचितत्वेनोपलभ्यमानोऽपि तत्रैतन्नामान्तरस्यानुपलभ्यमानत्वेन अनेनैव भवदेवेन रचित इति सन्देह एव।

## ग्रन्थकर्तुस्समयः

भवदेवस्य समये पर्यालोच्यमाने तौताततिमततिलके ग्रन्थान्तरे वा स्वीयस्समयः स्पष्टमनेन नोल्लिखितः। तौताततिमततिलके तत्र[3] तत्र प्रभाकरान्तेवासिनं शालिकनाथं नाम्ना निर्दिशति—'तदुक्तं[4] शालिकेन' 'यदुक्तं[5] शालिकेन' इत्यादि। एवमजिताकारं श्रीपरितोषमिश्रमपि कीर्तयति—'एतदेवाजिताकृता स्वीकृतम्' इति। शालिकनाथश्च ख्रिस्तीयाष्टमशतकस्य मध्यकालेऽवर्तत इत्यस्मत्पूज्यपादैर्गुरुचरणैः महामहोपाध्यायैः पण्डितसार्वभौमैः श्रीचिन्नस्वामिशास्त्रिपादैः 'भट्टकुमरिलाः प्रभाकरमिश्राश्च' इति शीर्षके लेखे सप्रमाणं निरणायि[6]। अतस्ततः परस्मिन् काले भवदेव आसीदित्यभ्युपगन्तव्यम्। एवं भवदेवः स्वकृतप्रायश्चित्तप्रकरणे याज्ञवल्क्यस्मृतेष्टीकाया बालक्रीडायाः कर्तारं श्रीविश्वरूपं बालोकमतखण्डनावसरे निर्दिशति—"बालोकेन यदुक्तं तद्धेयमेव" "यदपि बालोकेन लिखितम् तदपि सर्वसंहितास्वदृष्टत्वात् विश्वरूपश्रीकरादिभिश्चालिखितत्वाद्धेयमेव" इति।

---

१. E. g., श्री बालवलभीभुजङ्गभूषाभिमतविपक्षप्रतिवैनतेयपाषण्डखण्डननागरिकोक्तवाचस्पतिशरणकेलिनीलकण्ठभट्टश्रीभवदेवविरचिता छन्दोगानां विवाहादिकर्मानुष्ठानपद्धतिः समाप्ता।

इति सान्धिविग्रहिकश्रीबालवलभीभुजङ्गापरनाम्नो भट्टश्रीभवदेवकृतौ प्रायश्चित्तप्रकरणेऽगम्यागमनपरिच्छेदः।

२. इति भवदेवभट्टकृतस्सम्बन्धविवेकस्समाप्तः।

३. Tautā, P. 312.

४. *Ibid.* P. 11.

५. *Ibid.* P. 316.

६. See J.A.S.B. Vol. VIII., P. 336.

विश्वरूपश्च खिस्तीयनवमशतके[1] (800-825 A. D.) अवर्तत। अतो भवदेवो विश्वरूपादप्यर्वाचीनः। अनिरुद्धभट्टः स्वकृतकर्मोपदेशिनीपद्धतौ भवदेवं स्मरति[2]। अनिरुद्धभट्टश्च बल्लालसेनदेवस्य गुरुरिति बल्लालसेन एव स्वकृतदानसागरस्य मङ्गलप्रस्तावे ब्रवीति। दानसागरश्च बल्लालसेनदेवेन द्वादशशताब्द्यास्तृतीयांशे रचित इति तद्ग्रन्थत एव स्पष्टमवगम्यते। बल्लालसेनः 'प्रायश्चित्तसागरम्' 'आचारसागरम्' 'दानसागरञ्च' समग्रं विरचय्य 'अद्भुतसागरं' रचयितुं यदारेभे तदा तस्मिन्नसमाप्त एव स्वीयं सुतं लक्ष्मणसेनं साम्राज्यरक्षायां नियुज्य प्रारब्धमद्भुतसागरं समापयितुं तमाज्ञापयित्वा स्वयं भार्यया सह गङ्गायाः परिसरे कालधर्ममुपयातः। अनन्तरं लक्ष्मणसेनः स्वकुलगुरोरनिरुद्धभट्टस्य, ब्राह्मणसर्वस्व-मीमांसाशास्त्रसर्वस्वादीनां ग्रन्थानां रचयितुः स्वराज्ये धर्माध्यक्षपदमधितिष्ठतो हलायुधस्य च साहाय्येन तं ग्रन्थं परिसमापितवानिति ज्ञायते। अत एव लक्ष्मणसेनो वक्ति—

'शाके नवाष्टखेन्द्वाब्द आरेभेऽद्भुतसागरम्।

(1089 S'aka, 1166 A.D.)

गौडेन्द्रकुञ्जरालानस्तम्भबाहुर्महीपतिः॥

ग्रन्थेऽस्मिन्नसमाप्त एव तनये साम्राज्यलक्ष्मीं मुदा
दीक्षापर्वणि दक्षिणं निजकृतेर्निष्पत्तिमस्थापयत्।
नानादानतिलाम्बुसंवलनभं सूर्यात्मजासङ्गमं
गङ्गायां विरचय्य निर्जरपुरं भार्यानुयातो गतः॥

---

१. See P. 263 of the History of Dharmasāstra by P. V. Kane.

२. See India Office Library Catalogue, P. 475.

३. निखिलभूपचक्रतिलकश्रीमद्बल्लालसेनदेवेन।
पूर्णे शशिनवदशमिते दानसागरो रचितः॥ इति।

(1091 Śaka = 1168 A.D.)

४. बाल्ये ख्यापितराजपण्डितपदः श्वेतांशुबिम्बोज्ज्वल-
च्छत्रोत्सिक्तमहामहत्तनुपदं दत्वा नवे यौवने।
यस्मै यौवनशेषयोग्यमखिलक्ष्मापालनारायणः
श्रीमान् लक्ष्मणसेनदेवनृपतिर्धर्माधिकारं ददौ॥

ब्राह्मणसर्वस्वम्, श्लो. १२.

श्रीमल्लक्ष्मणसेनभूपतिरतिश्लाघ्यो यदुद्योगतो
निष्पन्नोऽद्भुतसागरः कृतिरसौ बल्लालभूमीभुजः।
ख्यातः केवलमर्णवः सगरजस्तातस्य तत्पूरण-
प्रावीण्येन भगीरथेन भुवनेष्वद्यापि विद्योतते ॥ इति।

अतोऽनिरुद्धभट्टेन बल्लालसेनदेवापेक्षया प्राचीनेन भाव्यम्। तथा सति खिस्तीयद्वादशशताब्द्यां (1140-1168 A. D. समये) अनिरुद्धभट्टोऽवर्तत इति स्वीकर्तव्यम्।

किञ्चानिरुद्धः स्वग्रन्थे कृत्यकल्पतरुमपि लक्ष्मीधरभट्टविरचितं निर्दिशति—'इति कल्पतरुकामधेन्वादिसङ्ग्रहाकृष्टे महोपाध्यायेनानिरुद्धभट्टेन विरचिते शुद्धिप्रकरणेऽन्त्येष्टिविधिः' इति। कृत्यकल्पतरुकारो लक्ष्मीधरभट्टः खिस्तात् परं (1110 A. D.) समयवर्तिनो गोविन्दचन्द्रमहीपतेः प्रधानामात्य आसीदिति कृत्यकल्पतरोर्दानकाण्डस्य भूमिकायां श्रीमद्भिस्सनातनधर्मरक्षादीक्षितैरर्थशास्त्रेतिहासविदग्रेसरैर्विद्यावाचस्पतिभिः K. V. रङ्गस्वाम्यार्यमहोदयैः सयुक्ति सप्रमाणञ्च प्रत्यपादि। अतोऽनिरुद्धभट्टस्य समयः द्वादशशताब्द्या द्वितीयांऽश इत्यायातम्। ततश्चास्माकं भवदेवः खिस्तात् परमेकादशशताब्द्याम् अथवा द्वादशशताब्द्याः प्रथमेंऽशेऽवर्तत इत्यभ्युपगन्तव्यम्।

किञ्च भवदेवस्य पितामहः श्रीआदिदेवः वङ्गदेशाधिपतेर्ज्योतीवर्मणो राज्ये साचिव्यमकरोत्। ज्योतीवर्मा च दशमशताब्द्या अन्ते एकादशशताब्द्या आदौ चासीदिति गौडराजमालातः प्रतीयते। भवदेवजनको गोवर्धनोऽपि ज्योतीवर्मणस्तनयस्य हरिवर्मदेवस्य यौवराज्यावसरेऽमात्य आसीत्। गोवर्धनात्परं श्रीभवदेवः हरिवर्मदेवेन तत्स्थाने नियुक्त इत्यपीतिहासतः प्रतीमः। वाचस्पतिकृतप्रशस्तिपत्रादपि भवदेवो हरिवर्मदेवस्य साचिव्यमकरोदिति स्पष्टं ज्ञायत एव। अतश्च भवदेव एकादशशताब्द्यास्तृतीयेंऽशे द्वादशशताब्द्याः प्रथमांशे चावर्तत इत्यनुमातव्यम्। एवं निर्णयेऽपरमपि

१. See India Office Library Catalogue, P. 475.

२. See P. 40, Krityakalpataru, Vol. 5, Baroda ed.

३. See गौडराजमाला P. 59, Varendra Research Society, Bengal.

कारणमत्राभ्यूहितुं शक्यते—यदुत पार्थसारथिमिश्रः शास्त्रदीपिकादिनिर्माता स्वकृतग्रन्थेषु भवदेवेन सह सत्यपि मतवैषम्ये क्वापि तं न निर्दिशति, भवदेवोऽपि स्वकृतग्रन्थेषु कुत्रापि पार्थसारथिमिश्रं नोल्लिखति मण्डनाय खण्डनाय वा। प्रभाकरमतानुवर्तिनोः शालिकनाथभवनाथयोर्मतखण्डनविषयीभूतेषु स्थलेषु विषयैक्ये सत्यपि भिन्ना एव युक्तयः प्रतिपाद्यन्ते उभाभ्यामपि। तत्र च कारणम्—उभयोस्समसमयवर्तित्वमेव। पार्थसारथिमिश्रस्य समयः खिस्तात् परमेकादशशताब्दीमारभ्य द्वादशशताब्द्याः प्रथमपादपर्यन्तं भवेदिति सप्रमाणं निर्णीतं ब्रह्मश्रीरामस्वामिशास्त्रिमहोदयैस्स्वसम्पादितन्यायरत्नमालाया भूमिकायाम्। भवदेवस्यापि प्रायस्स एव समय इति पूर्वाभिहितैः प्रमाणैर्ज्ञायत एव।

किञ्च—अभिनवगुप्ताचार्या लोचनाद्यनेकग्रन्थनिर्मातारः भवदेवस्य सतीर्थ्या इति काचन जनश्रुतिः। भट्टतौतसकाशादभिनवगुप्ताचार्या नाट्य-वेदतत्त्वार्थश्चाध्यगीषत। तदनन्तरं तस्मादेव गुरोर्भवदेवोऽपि तौतातितमतं वेदतत्त्वार्थश्चाध्यगीष्ट। अभिनवगुप्ताचार्याश्च खिस्तात् परं (1013 A.D.) समयेऽवर्तन्त इत्यस्माभिर्ध्वन्यालोकभूमिकायां प्रत्यपादि। अत इमौ द्वावपि सतीर्थ्यौ भवेतामित्यभ्यूहितुं शक्यते। सति चैवं भुवनेश्वरमन्दिरस्थप्रशस्तिकर्तारं वाचस्पतिं भामत्यादिनिर्माता प्रसिद्धवाचस्पतिमिश्र इति मत्वा ततः प्राचीनोऽयं भवदेव इति कश्चिदनुमिनोति। सर्वतन्त्रस्वतन्त्राः श्रीवाचस्पतिमिश्रा दशमशताब्द्या अन्ते वर्तमाना भवदेवप्रशस्तिमरचन् इति कथनं कथं

---

१. भवनाथोऽयं नयविवेकादिनिर्माता।

२. See Tautātitamatatilaka, PP. 10, 235 etc. Śāstradīpikā, P. 16. (N.S. ed.) and Nyāyaratnamālā, PP. 65, 295 etc., Baroda ed.

३. See Nyāyaratnamāla, PP. 17-20, Baroda ed.

४. 'सद्विप्रतोतवदनोदितनाट्यवेदतत्त्वार्थमर्थिजनवाञ्छितसिद्धिहेतोः' इति प्रमाणमत्र बोध्यम्।

५. 'न्यायसूचीनिबन्धोऽसावकारि सुधियां मुदे।
श्रीवाचस्पतिमिश्रेण वस्वङ्कवसुवत्सरे'॥

(898 Saka = 976 A.D.)

सङ्गच्छतामिति सुचिरं पर्यालोचयतो मे मनसि कारणं न प्रस्फुरति। अतश्च प्रशस्तिकर्ता वाचस्पतिः प्रसिद्धवाचस्पतिमिश्रेभ्योऽन्य एवेत्यलमतिपल्लवितेन।

## प्रणतयः

एतद्ग्रन्थसंशोधनावसरे तत्र तत्र समुन्मिषितान् सन्देहसन्दोहान् अशुद्धीश्च दूरीकृत्य मामनुगृहीतवद्भ्यः, सत्यपि कार्यबाहुल्ये तदविगणय्यैतद्ग्रन्थस्थविषयवाक्यानामुद्धृतवाक्यानाञ्च स्थलान्युपदिष्टवद्भ्यः पूज्यपादेभ्योऽस्मद्गुरुवर्येभ्यः महामहोपाध्याय पण्डितसार्वभौम श्रीचिन्नस्वामिशास्त्रिचरणेभ्यः अन्यत्किमपि कर्तुमनीशानस्तेषां चरणाम्बुजयोः कोटिशः प्रणतीस्समर्पये।

## धन्यवादाः

भूमिकायामत्र निवेशितं प्रशस्तिपत्रं मत्सुहृद्वर्यैः न्यायाचार्यश्रीज्योतिःस्वरूपानन्दैः सम्प्रार्थितेन साम्प्रतं जगन्नाथ (पुरी) क्षेत्रनिवासिना वीरेन्द्रनाथराय (Builder and contractor to the Govt. of Orissa) महोदयेन भुवनेश्वरमन्दिरस्थशिलातस्स्वयं लिखित्वा सदयं मह्यं प्रेषितमित्यत उभयेऽपि शतशो धन्यवादैस्समभिपूर्यन्ते। एतद्ग्रन्थसंशोधनावसरे मातृकावलोकने सूचीनिर्माणे चात्यन्तमुपकृतवते साम्प्रतं काशिकराजकीयसरस्वतीभवने साधूलालरिसर्चविभागे वर्तमानाय साहित्यशिरोमणये पं० रामनाथदीक्षिताय हार्दिकान् धन्यवादान् वितरामि।

## प्रार्थना

एतादृशानामत्युच्चमानां प्राचीनानां ग्रन्थरत्नानां प्रकाशने पाठ्यत्वेन निर्धारणे चातितरां दत्तचित्तानुत्साहमूर्तीन् संस्कृतसाहित्यजीवातून् Dr. श्रीमङ्गलदेवशास्त्रिमहोदयान् भूयोऽपि धन्यवादशतैरभिपूरयन् पुनरप्येतादृशानां ग्रन्थानां प्रकाशने मां प्रवर्तयेयुरिति तान् सम्प्रार्थ्य विरमामि।

वाराणसी
२०-१०-४२

विद्वज्जनवशंवदः
पि. एन्. पट्टाभिरामशास्त्री

# तौताततमततिलकगतानामधिकरणानां सूची


प्रथमाध्यायस्य द्वितीयः पादः

| | |
|---|---|
| मङ्गलाचरणम् | १ |
| १ अर्थवादाधिकरणम् | १ |
| प्रभाकरमतम् | ३ |
| भाट्टमतम् | १४ |
| २ विधिवन्निगदाधिकरणम् | २६ |
| प्रभाकरमतम् | २६ |
| भाट्टमतम् | २८ |
| ३ हेतुवन्निगदाधिकरणम् | ३५ |
| प्रभाकरमतम् | ,, |
| भाट्टमतम् | ३६ |
| ४ मन्त्राधिकरणम् | ४१ |
| प्रभाकरमतम् | ,, |
| भाट्टमतम् | ४४ |

तृतीयः पादः

| | |
|---|---|
| १ स्मृत्यधिकरणम् | ५३ |
| प्रभाकरमतम् | ,, |
| भाट्टमतम् | ५७ |
| २ विरोधाधिकरणम् | ६२ |
| प्रभाकरमतम् | ,, |
| भाट्टमतम् | ६५ |
| ३ दृष्टमूलकस्मृत्यप्रामाण्याधिकरणम् | ६७ |
| भाष्यकारमतम् | ,, |
| वार्तिककारमतम् | ,, |
| ४ शिष्टाकोपाधिकरणम् | ७६ |
| प्रभाकरमतम् | ,, |
| भाष्यकारमतम् | ७७ |
| वार्तिककारमतम् | ८० |
| बौद्धग्रन्थानामप्रामाण्यनिरूपणम् | ८१ |
| ५ यवचराहाधिकरणम् | ९० |
| प्रभाकरमतम् | ,, |
| भाष्यकारमतम् | ९२ |
| वार्तिककारमतम् | ९४ |
| ६ वार्तिककारमतेन पीलवधिकरणम् | ९६ |
| ७ वार्तिककारमतेन स्मृत्याचारयोर्बलाबलनि० | ९८ |
| ८ त्रिवृच्चर्वश्ववालाधि० | १०२ |
| ९ पिकनेमाधिकरणम् | १०८ |
| प्रभाकरमतम् | १०८ |
| भाट्टमतम् | ११० |
| १० कल्पसूत्राधिकरणम् | ११४ |
| प्रभाकरमतम् | ,, |
| भाट्टमतम् | ११५ |
| ११ होलाकाधिकरणम् | ११९ |
| प्रभाकरमतम् | ,, |
| भाट्टमतम् | १२० |
| १२ व्याकरणाधिकरणम् | १२४ |
| प्रभाकरमतम् | ,, |
| भाट्टमतम् | १२५ |
| १३ लोकवेदाधिकरणम् | १३१ |
| प्रभाकरमतम् | ,, |
| भाट्टमतम् | १३२ |

१४ आकृत्यधिकरणम् १३४
प्रभाकरमतम् १३५
भाट्टमतम् १३८

चतुर्थः पादः

१ नामधेयप्रामाण्याधि० १४५
प्रभाकरमतम् "
भाट्टमतम् १४७
२ उद्भिदधिकरणम् १४९
३ चित्राधिकरणम् १५४
प्रभाकरमतम् "
भाट्टमतम् "
४ तत्प्रख्याधिकरणम् १६५
५ तद्व्यपदेशाधिकरणम् १७१
६ वाजपेयाधिकरणम् १७४
७ आग्नेयाधिकरणम् १७८
प्रभाकरमतम् १७९
भाट्टमतम् "
८ बर्हिराज्याधिकरणम् १८२
प्रभाकरमतम् "
भाट्टमतम् "
९ प्रोक्षण्यधिकरणम् १८५
१० निर्मन्थ्याधिकरणम् १८८
११ वैश्वदेवाधिकरणम् १९०
प्रभाकरमतम् "
भाट्टमतम् १९१
१२ वैश्वानराधिकरणम् १९५
प्रभाकरमतम् "
भाट्टमतम् १९६
१३ तत्सिद्ध्यधिकरणम् २०१
प्रभाकरमतम् २०२
भाट्टमतम् २०३
१४ जात्यधिकरणम् २०५
१५ सारूप्याधिकरणम् २०६
१६ प्रशंसाधिकरणम् "
१७ भूमाधिकरणम् २०८
१८ लिङ्गसमवायाधिकरणम् २०९
१९ वाक्यशेषाधिकरणम् २१२
प्रभाकरतम् "
भाट्टमतम् २१३
२० सामर्थ्याधिकरणम् २१५
प्रभाकरमतम् २१६
भाट्टमतम् "

द्वितीयाध्यायस्य प्रथमः पादः

१ प्रतिपदाधिकरणम् २१९
२ भावार्थाधिकरणम् २२५
३ अपूर्वाधिकरणम् २३०
प्रभाकरमतम् २३२
भाट्टमतम् २३९
४ तानिद्वैधाधिकरणम् २४४
५ सम्मार्गाधिकरणम् २५१
६ स्तुतशस्त्राधिकरणम् २७१
७ विधिमन्त्राधिकरणम् २७६
८ मन्त्रलक्षणाधिकरणम् २८१
९ ब्राह्मणलक्षणाधिकरणम् २८३
१० ऊहाद्यमन्त्रताधिकरणम् २८४
११ ऋग्लक्षणाधिकरणम् २८९
१२ सामलक्षणाधिकरणम् २९०
१३ यजुर्लक्षणाधिकरणम् २९२
१४ निगदाधिकरणम् २९३
१५ अर्थैकत्वाधिकरणम् २९६
१६ वाक्यभेदाधिकरणम् २९८
१७ अनुषङ्गाधिकरणम् ३०२

१८ व्यवायाधिकरणम् ३०८

द्वितीयः पादः

१ शब्दान्तराधिकरणम् ३१०
प्रभाकरमतम् "
वार्तिककारमतम् ३१४
२ अभ्यासाधिकरणम् ३१८
३ पौर्णमास्यधिकरणम् ३२५
४ उपांशुयाजाधिकरणम् ३३९
५ आघाराग्निहोत्राधिकरणम् ३४९
६ पशुसोमाधिकरणम् ३५७
७ संख्याधिकरणम् ३७५
८ संज्ञाधिकरणम् ३८०
९ गुणाधिकरणम् ३८३
१० इन्द्रियकामाधिकरणम् ३९०
११ रेवत्यधिकरणम् ३९६
१२ सौभराधिकरणम् ४०५

तृतीयः पादः

१ रथन्तराधिकरणम् ४११
२ आवेष्ट्यधिकरणम् ४१७
३ आधानाधिकरणम् ४२२
४ दाक्षायणयज्ञाधिकरणम् ४२७
५ ईषालम्भाधिकरणम् ४३१
६ वत्सालम्भाधिकरणम् ४३६
७ चरूपधानाधिकरणम् ४३९
८ पात्नीवताधिकरणम् ४४२
९ अंश्वदाभ्याधिकरणम् ४४५
१० चयनाधिकरणम् ४४९
११ प्रकरणान्तराधिकरणम् ४५४
प्रभाकरमतम् ४५५
वार्तिककारमतम् ४५७
१२ फलसंस्कार्याधिकरणम् ४६२
१३ प्रकरणान्तरप्रत्युदाहरणाधिकरणम् ४४६
१४ आग्नेयस्तुत्यर्थताधि० ४६८

चतुर्थः पादः

१ यावज्जीवाधिकरणम् ४७१
२ शाखान्तराधिकरणम् ४७८

अथ तृतीयाध्यायस्य प्रथमः पादः

१ प्रतिज्ञाधिकरणम् ४८३
२ शेषलक्षणाधिकरणम् ४८५
३ बादर्यधिकरणम् ४९०
४ तेषामर्थाधिकरणम् ४९४
५ स्फ्यकपालाधिकरणम् ५००
६ अरुणाधिकरणम् ५०३
७ ग्रहैकत्वाधिकरणम् ५१८
८ चमसाधिकरणम् ५२७
९ आनर्थक्यतदङ्गाधिकरणम् ५३०
१० अभिक्रमणाधिकरणम् ५३५
भाष्यकारमतम् "
वार्तिककारमतम् ५३६
११ उपवीताधिकरणम् ५४२
१२ वारणाधिकरणम् ५४७
१३ वार्त्रघ्न्यधिकरणम् ५६३
१४ हस्तावनेजनाधिकरणम् ५६६
१५ चतुर्धाकरणाधिकरणम् ५६९

द्वितीयः पादः

१ लिङ्गाधिकरणम् ५७२
२ ऐन्द्र्यधिकरणम् ५७६
३ हविष्कृदाह्वानाधिकरणम् ५७९
४ वाग्विसर्गाधिकरणम् ५८३
५ सूक्तवाकाधिकरणम् ५८५
६ विभज्यविनियोगाधि० ५८९

७ लिङ्गक्रमसमाख्यानाधि० ५६४
८ आग्नेय्यधिकरणम् ५६६
९ भक्षाधिकरणम् ६०१
१० मन्द्राभिभूत्यधिकरणम् ६०४
११ इन्द्रपीताधिकरणम् ६०६
१२ पुनरभ्युन्नीताधिकरणम् ६०९
१३ पात्नीवताधिकरणम् ६१२
१४ त्वष्ट्रधिकरणम् ६१४
१५ त्रिंशदधिकरणम् ६१६
१६ अनुवषट्काराधिकरणम् ६१८
१७ अनैन्द्राणाममन्त्रकभक्षणाधिकरणम् ६२०
१८ ऐन्द्राग्नभक्षस्यामन्त्रकत्वाधिकरणम् ६२१
१९ भक्षमन्त्रस्य गायत्र्यन्यच्छन्दस्केऽपि विनियोगाधि० ६२३
२० इन्द्रपीताधिकरणशेषः ६२५

तृतीयः पादः

१ उपक्रमाधिकरणम् ६२८
२ गुणमुख्यव्यतिक्रमाधि० ६३४
३ ज्योतिष्टोमस्य याजुर्वैदिकताधिकरणम् ६३९
४ प्रकरणाधिकरणम् ६४३
५ क्रमाधिकरणम् ६४६
६ समाख्याधिकरणम् ६४९
७ बलाबलाधिकरणम् ६५१
८ अहीनाधिकरणम् ६६२
९ प्रतिपदधिकरणम् ६६५
१० जाघन्यधिकरणम् ६६९
११ सन्तर्दनाधिकरणम् ६७३
१२ प्रवर्ग्याधिकरणम् ६७७
१३ पैषणाधिकरणम् ६८२
१४ पैषणस्य चरुविनियोगाधि० ६८३
१५ पैषणस्यैकदैवत्ये निवेशा० ६८५

पञ्चमः पादः

१ उपांशुयाजे शेषकार्याभावाधिकरणम् ६८९
२ साकंप्रस्थायीये शेषकार्याभावाधिकरणम् ६९२
३ सौत्रामण्यां शेषकार्याभा० ६९४
४ सर्वपृष्ठेष्ट्यधिकरणम् ६९६
५ ऐन्द्रवायवे द्विर्भक्षाधि० ६९८
६ सोमे शेषभक्षाधिकरणम् ७००
७ सब्रह्मण्योद्गातृभक्षाधि० ७०३
८ ग्रावस्तुतस्सोमभक्षाधि० ७०६
९ वषट्कर्तुः प्रथमभक्षाधि० ७०८
१० होमाभिषवयोर्भक्षनिमित्तत्वाधिकरणम् ७१०
११ भक्षणनिमित्तसमुच्चयाधि० ७१२
१२ एकपात्रे होतुः प्रथमभक्षा० ७१६
१३ अनुज्ञापूर्वकंभक्षणाधि० ७१७
१४ वैदिकमन्त्रेणानुज्ञापना० ७१८
१५ वैदिकमन्त्रेणानुज्ञादाना० ७१९
१६ एकपात्राणामनुज्ञाप्यभक्षणाधिकरणम् ७२०
१७ स्वयंयष्टुर्भक्षणाधि० ७२१
१८ फलचमसाधिकरणम् ७२३
१९ अनुप्रसर्प्यधिकरणम ७२७

षष्ठः पादः

१ अनारभ्याधीतानां प्रकृतिगामिताधिकरणम् ७३१

२ अनारभ्याधीतस्यापि विकृतिगामिताधि० ७३४
३ नैमित्तकस्याप्यदृश्यादेः प्रकृत्यर्थत्वाधि० ७३७
४ पवमानेष्ट्यधिकरणम् ७४१
५ आधानस्य प्रकृतिविकृत्यर्थत्वाधिकरणम् ७४४
६ पवमानेष्ट्यनतिदेशाधि० ७४७
७ पशुधर्माणामग्नीषोमीयार्थत्वाधिकरणम् ७४९
८ शाखाहरणादीनामुभयदोहाधिकरणम् ७५६
९ ग्रहधर्माणां सवनत्रयार्थताधिकरणम् ७५८
१० रशनाधर्मसाधारण्याधि० ७६०
११ ग्रहधर्माणामंश्वदाभ्यर्थताधिकरणम् ७६३
१२ चित्रिण्यधिकरणम् ७६४
१३ अभिषवादीनामसमानविधानाधिकरणम् ७६६
१४ मुख्यप्रतिनिध्योस्सामानविध्याधिकरणम् ७६८
१५ प्रतिनिधौ मुख्यधर्मानुष्ठानाधिकरणम् ७७१
१६ संस्थाधिकरणम् ७७२


सप्तमः पादः


१ वेदिबर्हिरधिकरणम् ७७९
२ यजमानधर्माणां प्रधानार्थताधिकरणम् ७८२
३ सौमिकवेदेरङ्गप्रधानार्थताधिकरणम् ७८४
४ दीक्षादक्षिणयोः प्रधानार्थताधिकरणम् ७८८
५ यूपावटदेशलक्षणाधि० ७९०
६ हविर्धानस्य सामिधेन्यनङ्गताधिकरणम् ७९३
७ यजमानभिन्नकर्त्रन्तरसद्भावाधिकरणम् ७९५
८ ऋत्विक्संख्यानियमाधि० ७९८
९ चमसाध्वर्युभेदाधि० ८०१
१० चमसाध्वर्यूणां बहुत्वाधि० ८०३
११ चमसाध्वर्यूणामियत्ताधि० ८०४
१२ शमितुरपृथक्त्वाधिकरणम् ८०५
१३ उपगातॄणामपृथक्त्वाधि० ८०७
१४ सोमविक्रेतुः पृथक्त्वाधि० ८०८
१५ सर्वेषामृत्विक्छब्दावाच्यताधिकरणम् ८०९
१६ ऋत्विङ्नियमाधिकरणम् ८११
१७ यजमानसप्तदशत्वाधि० ८१३
१८ ऋत्विजां नियतपदार्थकर्तृत्वाधिकरणम् ८१५
१९ अग्नीनां सर्वार्थत्वाधि० ८१८
२० विशेषसमाख्यया सामान्यसमाख्याबाधाधि० ८१९
२१ प्रैषानुवचनस्य मैत्रावरुणकर्तृताधिकरणम् ८२१
२२ चमसहोमेष्वध्वर्युकर्तृत्वाधिकरणम् ८२३
२३ श्येनादेरनेककर्तृत्वाधि० ८२५


अष्टमः पादः


१ दक्षिणादानस्य स्वामिकर्तृत्वाधिकरणम् ८२७

२ वपनादीनां याजमानता० ८३०
३ तपसो याजमानताधि० ८३२
४ हिरण्यमालित्वाद्यधि० ८३४
५ गुणकामानां याजमानत्वाधिकरणम् ८३७
६ प्रोत्साहनमन्त्राणां याजमानताधिकरणम् ८५६
७ द्व्याम्नातानामुभयार्थता० ८४०
८ अभिज्ञावाचनाधिकरणम् ८४२
९ द्वादशद्वन्द्वानामाध्वर्यवत्वाधिकरणम् ८४४
१० होतुः करणमन्त्रानुष्ठातृत्वाधिकरणम् ८४६
११ प्रैषप्रैषार्थयोर्भिन्नकर्तृकत्वाधिकरणम् ८४९
१२ प्रैषस्याध्वर्यवत्वाधि० ८५१
१३ करणमन्त्रफलस्य याजमानताधिकरणम् ८५४
१४ धर्माणां प्राकृतकार्यार्थत्वा. ८५७
१५ लवणस्यासर्वार्थत्वाधि० ८६०
१६ शेषनिधानाधिकरणम् ८६१
१७ उपांशुत्वस्य प्रधानार्थत्वाधिकरणम्. ८६२
१८ द्रुतिनवनीताज्याधि० ८६४
१९ श्येनाङ्गानां द्रुतिनवनीताज्याधिकरणम् ८६६
२० सवनीयहविषां मांसमयत्वाधिकरणम् ८६७

इति तौतातितमततिलकगतानामधिकरणानां सूची समाप्ता ॥

श्रीः

श्रीभवदेवनिर्मितं

# तौतातितमततिलकम्

## तत्र तृतीयाध्यायस्य प्रथमः पादः

### अथ प्रथमं प्रतिज्ञाधिकरणम्

**अथातः शेषलक्षणम् ॥ ३. १. १. ॥**

( विषयसङ्गती )

नानाकर्मलक्षणं वृत्तम् । अनन्तरं शेषलक्षणं वर्णयिष्यामः—कः शेषः ? केन हेतुना शेषः ? कथञ्च विनियुज्यते ? इति । श्रुत्यादीनि च विनियोगे कारणानि वक्ष्यन्ते । तेषाञ्च बलवदबलवत्ता । एतत्तात्पर्येणान्यदप्युपोद्घातादिना । अत्र वृत्तवर्त्तिष्यमाणकीर्त्तनादध्याययोर्हेतुहेतुमद्भावलक्षणः सम्बन्धो दर्शितः । तत्र प्रभाकरेण नानाकर्मलक्षणं वृत्तमिति नानाशास्त्रलक्षणं वृत्तम् । अतस्तद्धेतुकं शेषलक्षणं वर्त्तयिष्याम इति व्याख्यातम् । तदयुक्तम्; शास्त्रभेदस्य लक्षणार्थत्वस्य द्वितीयाध्याय एव निराकृतत्वात् । न च कर्मभेदशब्देन शास्त्रभेदोऽभिधीयते । न च शास्त्रभेदस्य वक्ष्यमाणं शेषशेषिलक्षणं प्रति हेतुत्वमप्यस्ति । अत्र ययोर्हि

शेषशेषिभावः प्रतिपाद्यस्तयोरेव भेदो हेतुतयाऽभिधीयत इत्युचितम् । तथाच भाष्यम्—'नानाकर्मलक्षणं वृत्तम्' इति । अतो यत्किञ्चिदेतदिति यथावार्त्तिकमेव वर्णनीयम् । तेनायमर्थः—अथ कर्मभेदलक्षणानन्तरं कर्मभेदलक्षणहेतुकं शेषशेषिलक्षणं प्रतिपाद्यत इति । यतो विज्ञातभेदानां खलु पदार्थानां गुणप्रधानभूतशेषशेषित्वं प्रतिपत्तुं शक्यते । तत्र यद्यपि प्रयोगक्रमाधिकारलक्षणानामपि भेदलक्षणापेक्षत्वं विद्यत एव, तथापि तेषां शेषलक्षणापेक्षत्वाच्छेषलक्षणस्य च भेदलक्षणमात्राधीनत्वाद्भेदलक्षणानन्तरं शेषलक्षणमेवारभ्यत इति । तदुक्तम्—

भेदानन्तरवक्तव्यं शेषलक्षणमेव तु ।
प्रयोजकक्रमादीनां शेषत्वाधीनचिन्तनात् ॥ इति ।

( तं. वा., पृ. ६४८ )

न च वाच्यम्—शेषशेषिणोरुभयोरपि प्रतिपाद्यत्वादुभयोरेव लक्षणमुचितम् । प्राधान्याच्छेषिण एव वा । शेषमात्रलक्षणन्तु कुत इति । नियतश्रुत्यादीनि विनियोगविधेर्व्यापारस्तृतीयाध्यायविषयः । अनेनेदं साध्यमिति विनियोजकस्य व्यापारः, अत्र चेदं साध्यमिति न प्रमेयम् । अन्यतः सिद्धस्यानुवादात् । अनेनेति विधीयते । तेन श्रुत्यादिसहायस्य विनियोगविधेः शेषविषयत्वाच्छेषिणस्तु शेषलक्षणादेवार्थसिद्धत्वाच्छेषलक्षणमेवैतदिति ।

तदुक्तम्—

श्रुत्यादिभिः प्रमाणैस्तु शेषत्वस्यैव निर्णयः ।
शेषी तद्विषयत्वेन लक्ष्यते नान्तरीयकः ॥ इति ।

(तं. वा., पृ. ६५२)

इति प्रथमं प्रतिज्ञाधिकरणम् ॥ १ ॥

अथ द्वितीयं शेषलक्षणाधिकरणम्

( पूर्वपक्षः )

तत्र कः शेष इत्याकाङ्क्षायामुपकारकत्वलक्षणमेव शेषत्वं पूर्वपक्षी बादरिर्मन्यते। अयञ्च तस्याभिसन्धिः—न तावदविनाभावलक्षणं शेषत्वम्, अविनाभूतयोरपि रूपस्पर्शयोर्लोके वेदे चाग्नेयोपांशुयाजयोः शेषशेषित्वव्यभिचारात् । तदुक्तम्—

न युक्तमेव शेषत्वमविनाभावलक्षणम् ।
व्यभिचाराद्यथा हीदमशेषेष्वपि दृश्यते ॥ इति ।

( तं. वा., पृ. ६५४. )

नापि प्रयोज्यत्वम्, विनापि प्रयोज्यत्वेन पुरोडाशकपालादेस्तुषोपवापादौ शेषत्वदर्शनात् । सत्यपि प्रयोज्यत्वे नैमित्तिकानां निमित्तं प्रति शेषत्वाभावात् । तदुक्तम्—

पुरोडाशकपालं हि न च तावत्प्रयुज्यते ।
सिद्धेस्तुषोपवापेन शेषस्तत्तस्य चेष्यते ॥

तथा होमाः प्रयुज्यन्ते भेदनस्कन्दनादिभिः ।
निमित्तैर्न च तेष्वेषां होमानां शेषता मता ॥ इति ।

( तं. वा., पृ. ६५५ )

न चाधिक्यमेव शेषत्वं—यस्मिन् विहिते यदतिरिक्तं विधीयते तदधिकं तस्य शेष इति । प्रधानस्याङ्गविध्युत्तरकालं विधानेनाधिक्येऽपि शेषत्वव्यभिचारात् । तदुक्तम्—

व्यभिचार्यतिरेकोऽपि प्रधानेष्वपि दर्शनात् ।
तान्यपीहातिरिच्यन्ते शेषत्वेऽधिकशेषवत् ॥ इति ।

(तं. वा., पृ. ६५५)

न च विध्यन्तत्वमेव शेषत्वम्, विध्यन्तत्वञ्च यस्मिन्विहिते यत्कथम्भावाकाङ्क्षायां परस्ताद्विधीयमानं सम्बध्यते, तदुच्यते । उपक्रमोपसंहारमध्यविहितानामपि कथम्भावाकांक्षया सम्बन्धदर्शनेन व्यभिचारात् । तदुक्तम्—

उपक्रमोपसंहारमध्याम्नातेषु शेषताम् ।
विचित्रामुपलभ्यैतन्नेष्यते शेषलक्षणम् ॥ इति ।

(तं. वा., पृ. ६५५)

नापि पारार्थ्यमेव शेषत्वम्, अनिरूपणात् । तथाहि—यद्यन्योद्देशप्रवृत्तकृतिसमवायित्वं पारार्थ्यम्, तदावघातादीनामचेतनत्वेन कृतिसमवायाभावादशेषत्वप्रसङ्गः । अथान्योद्देशप्रवृत्तकृतिसाध्यत्वम्, तर्हि कर्त्तुस्तदभावात्कर्म प्रत्यशेषत्वप्रसङ्गः ।

अथोभयसाधारणं परोद्देशप्रवृत्तकृतिसम्बन्धित्वमात्रम्, तर्हि देशकालयोस्तदभावादशेषत्वम्। तस्माल्लोकवेदसाधारणमनन्यार्थस्य पदार्थस्यान्योपकारकत्वमेव शेषत्वमिति। न चैवं सति गोदोहनस्य क्रतूपकारकतया क्रतुशेषत्वं, फलार्थत्वेनानन्यार्थत्वाभावात्। नापि स्वार्थानुष्ठितानां प्रयाजादीनां प्रसङ्गेन पुरोडाशयागोपकारकत्वात्पुरोडाशयागशेषत्वमेव। नापि पश्वर्थत्वेनैव, अनन्यार्थत्वाभावात्। अत एवाधानाध्ययनधनार्जनादीनामपि न क्रतूपकारकतया क्रतुशेषत्वम्। यथाक्रममाहवनीयज्ञानधनप्राप्त्यर्थत्वेनानन्यार्थत्वाभावात्। न चैवं सति कपालानां पुरोडाशार्थत्वेन न तुषोपवापशेषत्वमिति वाच्यम्। यतः पच्यमानपुरोडाशाधारत्वेन कपालानां पुरोडाशार्थत्वम्। न च तेन रूपेण तुषोपवापार्थत्वमिति। अत्राप्यनन्यार्थत्वेनैव रूपेण तुषोपवापोपकारकत्वमिति न तस्यापि शेषत्वमनुपपन्नम्। न च मशकार्थो धूम इत्यादिषूपकारिष्वपि शेषत्वादर्शनान्नोपकारकत्वं शेषत्वमिति वाच्यम्। यतो नात्र शेषत्वं प्रतीयते, किन्तर्हि? निवृत्तिवचनो ह्ययमर्थशब्दः। तदुक्तं जयादित्येन—"मशकार्थो धूमो मशकनिवृत्त्यर्थः" इति। अतोऽत्र शेषत्वाभावान्नानुपपत्तिः। किञ्च तादर्थ्यमपि विचार्यमाणं नोपकारकत्वादन्यत्प्रतीयते। तेनोपकारत्वमेव शेषत्वम्।

तदुक्तम्—

तादर्थ्यमपि नैवान्यदुपकारात्प्रतीयते ।
तेनोपकार एवैको विज्ञेयं शेषलक्षणम् ॥ इति ।

(तं. वा., पृ. ६५६.)

एवं प्राप्तेऽभिधीयते—

शेषः परार्थत्वात् ॥ ३. १. २. ॥

( सिद्धान्तः )

अयमभिप्रायः—भवेदेवं यदि पारार्थ्यातिरिक्तमुपकारकत्वलक्षणं शेषत्वमुपपद्यते । तथाहि—किमिदमनन्यार्थस्यान्योपकारजनकत्वम् ? न तावदनुकूलवेदनाय यत्किञ्चित्करत्वम् । "व्रीहीनवहन्ति" इत्यत्राचेतनानां व्रीह्यादीनामनुकूलवेदनाभावात्तान् प्रत्यवघातादीनामशेषत्वप्रसङ्गात्, अशेषस्यापि स्वामिनो गर्भदासं प्रति शेषत्वप्रसङ्गाच्च । अथानन्यार्थस्यापेक्षितकिञ्चित्करत्वमात्रम्, तर्हि "परिधौ पशुं नियुञ्जीत" इत्यत्राग्निपरिधानार्थस्वरूपेणैव शब्दोपनीतस्य परिधेः पशुनियोजनशेषत्वं गतम् । किन्तर्हि ? परार्थत्वम् । न चैवं सति 'शेषः परार्थत्वात्' इति साध्याविशिष्टो हेतुरिति वाच्यम् । 'कः शेषः ? केन हेतुना शेषः ?' इति शेषशब्दाभिधेये हेतुप्रश्ने परार्थत्वस्यार्थस्वरूपस्य हेतुत्वविरोधात् । तेन कः शेषः केन हेतुना शेष इत्युभयप्रश्नोत्तरपरश्चैतत्सूत्रम् । द्वयमेकेन सूत्रेण

श्रुत्यर्थाभ्यां निरूप्यत इति द्रष्टव्यम् । न च तन्निरूपयितुं न शक्यते, परोद्देशप्रवृत्तकृत्यनुकूलत्वमेव सकलशेषसाधारणम् । तत्राचेतनानां तावद्द्रव्यगुणसंस्काराणामन्योद्देशप्रवृत्तकृत्यनुकूलत्वं स्पष्टमेव । एवं देशकालयोरपि । तत्र देशस्य तावच्छास्त्रबोधित-साधनत्वानुष्ठेयपदार्थाधारत्वेन कृत्यनुकूलत्वम् । तथा कालस्यापि शास्त्रावबोधितसाधनानुष्ठानावच्छेदकत्वेनैव कृत्यनुकूलत्वं सुव्यक्त-मेव । न हि पौर्णमासीकालविहितः प्रयोगः पौर्णमासीकालानव-च्छिन्नोऽनुष्ठितः फलसाधनं भवति । तथा कर्मफलपुरुषेष्वपि । कर्मणस्तावत्फलोद्देशप्रवृत्तकृत्यनुकूलत्वं फलभावनाकरणत्वेनैव सुव्यक्तम् । तथा फलस्यापि पुरुषभेदोद्देशप्रवृत्तकृत्यनुकूलत्वं भोग्यत्वेनैव स्फुटम् । तथा पुरुषस्यापि कर्मोद्देशप्रवृत्तकृत्यनुकूलत्वं कर्तृत्वादेव सिद्धम् । तेनान्योद्देशप्रवृत्तकृत्यनुकूलत्वमेव शेषत्वम् । एवं गर्भदासस्यापि स्वाम्युद्देशप्रवृत्तकृत्यनुकूलत्वमेव शेषत्वम् ।

न चैवं स्वामिनोऽपि गर्भदासोद्देशप्रवृत्तभरणादिकृत्यनुकूल-त्वाच्छेषत्वप्रसङ्ग इति वाच्यम् । यतो न हि स्वामिनो गर्भदास-भरणं गर्भदासमुद्दिश्य प्रवर्त्तते । किन्तर्हि ? अनेन भृत्येन मदीयं किञ्चित्करणीयमित्यात्मानमेवोद्दिश्य । तेन तत्रापि स्वाम्युद्देशप्र-वृत्तकृत्यनुकूलत्वाद्गर्भदासस्यैव शेषत्वम् । न च वाच्यम्—चेतनो हि गर्भदासश्चेतनत्वादात्मोद्देशेनैव सर्वत्र प्रवर्तते, तेन गर्भदास-

स्यात्मोद्देशप्रवृत्तस्वामिमर्दनादिकृतौ स्वामिनोऽनुकूलत्वात्स्वामिन एव शेषत्वम्, न गर्भदासस्येति। यतो नित्यमनपेक्षितः स्वयोगक्षेमः। स्वाम्युद्देशप्रवृत्तिर्हि गर्भदास इत्युच्यते। क्रयणादिभिस्तस्यै भूतरूपस्यैवोपादानात्। एतच्च शेषत्वमुपकारकापकारकसाधारणमेव। मशकार्थो धूम इत्यत्राप्यपकारार्थत्वेन मशकोद्देशप्रवृत्तायां कृतावुत्पाद्यते न धूमस्यानुकूलत्वात्। अतः सर्वत्रोपकारकत्वातिरिक्तं श्रुत्यादिप्रमाणमेयं पारार्थ्यमेव शेषत्वमिति सिद्धम्।

प्रयोजनम्—उत्तराधिकरणनिबन्धनमेव।

सूत्रन्तु—परार्थत्वादेवावघातादिः शेष इति वाच्यम्, न कारणान्तरादिति॥

इति द्वितीयं शेषलक्षणाधिकरणम्॥ १॥

अथ तृतीयं बादर्यधिकरणम्

द्रव्यगुणसंस्कारेषु बादरिः॥ ३. १. ३.॥

( सङ्गतिः )

बादरिराचार्यो द्रव्यगुणसंस्कारेष्वेव शेषशब्द इति मेने, न यागफलपुरुषेषु। इदानीं पूर्वाधिकरणपूर्वोत्तरपक्षयोः प्रयोजनमत्र निरूप्यते।

( पूर्वपक्षः )

अयमत्र बादरेः पूर्वपक्षिणोऽभिसन्धिः—यद्युपकारकत्वमेव शेषत्वम्, तदा द्रव्यगुणसंस्कारेष्वेवोपकारकत्वदर्शनाच्छेषत्वं नान्यत्र । द्रव्यस्य तावत्पूर्वसिद्धस्य स्वभावत एवोत्पादकत्वेन कर्मोपकारकत्वम् । एवं गुणस्याप्यरुणादेः कर्मसाधनीभूतद्रव्यावच्छेदकत्वेन स्वभावादेव कर्मोपकारकत्वम् । तथा संस्कारस्याप्यवघातादेः पुरोडाशनिर्वर्त्तकतया यागसाधनत्वेन चोदितानां व्रीह्यादीनामपेक्षितवैतुष्यनिष्पादनेन व्रीह्यादिद्रव्योपकारकत्वम् । एतच्च सर्वं प्रमाणान्तरसिद्धमेव । न च यागस्य फलं प्रत्युपकारकत्वं प्रमाणान्तरेण प्रतीयते, यागानन्तरं फलनिष्पत्तेरदर्शनात् । नापि शब्दादवगम्यते, सर्वाख्यातेषु साध्यत्वेनैव धात्वर्थस्यावगमात् । श्रुत्यादीन्यपि द्रव्यगुणसंस्काराणामेवोपकारकत्वे प्रमाणम्, श्रुत्यादीनां तेष्वेव दर्शनात् । तथाहि—काष्ठैः पचेदिति तृतीयाश्रुतिर्यथा शक्नुयादित्युपबन्धात्पाकापेक्षितज्वलनोपकारकारित्वे काष्ठानां प्रमाणं भवति ।

ननु भावार्थाधिकरणे विधिमेयमेव धात्वर्थस्य फलकरणत्वं व्युत्पादितम् । अतः कथमत्र धात्वर्थस्य फलानुपकारकत्वम् ? उच्यते—स हि मेने, प्रवर्त्तनात्मको हि विधिः स्वमहिम्ना परं प्रवर्त्तयत्येव । न चात्र धातुसम्बन्धिनी करणत्वप्रतिपादिका तृतीया

सम्भवति, धातोरप्रातिपदिकत्वात् । न च स्वर्गकामश्रुतिरेव साध्यत्वेन स्वर्गं प्रतिपादयन्ती धात्वर्थस्य करणत्वमाक्षिपतीति वाच्यम् । साध्याकाङ्क्षाया अभावेन स्वर्गस्य साध्यत्वेनाप्रतीतेः । न च कर्मिसम्बन्धादेव साध्यत्वम्, 'ब्राह्मणं हन्तुकामः प्राजापत्यं चरेत्' इत्यत्र व्यभिचारात् । तेन कर्मणः फलोपकारकत्वे प्रमाणाभावान्न तच्छेषत्वम् । एतेनैव फलस्यापि पुरुषोपभोग्यत्वेन पुरुषशेषत्वं निराकृतम्, पुरुषानुष्ठितकर्मसाध्यत्वाभावात् । पुरुषस्य तु कर्म प्रति द्रव्यत्वाच्छेषत्वमिष्यत एव । शेषित्वन्तु फलाभावादेवास्य न सम्भवति । अतो न कर्मफलपुरुषाणां शेषशेषित्वेन त्रैरूप्यम्, किन्तु द्रव्यगुणसंस्कारेष्वेव शेषत्वम् । अतो न पलसाधनतया यागानुष्ठानमिति बादरिः । तच्च पूर्वाधिकरणपूर्वपक्षप्रयोजनमिति । एवं प्राप्तेऽभिधीयते—

कर्माण्यपि जैमिनिः फलार्थत्वात् ॥ ३. १. ४. ॥

( सिद्धान्तः )

अयमभिप्रायः—भवेदेवं यदि विधिरफले कर्मणि पुरुषं प्रवर्त्तयितुमुत्सहते । तथाहि—चेतनप्रवर्त्तनात्मको विधिः । चेतनस्य प्रेक्षापूर्विका प्रवृत्तिरभिमते तत्साधने च भवति । न हि दुःखस्वरूपं कर्म सिध्यत्विति कश्चित्प्रवर्तते । तत्र यद्यपि फले तत्साधने च

प्रवृत्तिर्न भिद्यते, किन्तु येयमुद्दिष्टफलसाधने प्रवृत्तिः सैव फले प्रवृत्तिः, तथापि लिप्साधिकरणन्यायेन फलप्रवृत्तेस्स्वरससिद्धत्वादप्रवृत्तप्रवर्त्तनात्मको विधिः कर्मणि प्रवर्त्तयन् फलसाधनभाववोधनपुरस्सरमेव प्रवर्त्तयति । तेन येयमुद्दिष्टफलार्था प्रवृत्तिः, सा नान्तरीयकतया यदेतत्साधनषियत्वं तस्य करणसम्बन्धः फलार्थेत्वमेतत्कर्मणो बोधयतीति कर्मणः फलशेषत्वम् । यदा च विधिः कर्मणः फलार्थत्वं बोधयति, तदा किन्तत्फलमित्याकाङ्क्षायां स्वर्गकामपदं स्वर्गमेव फलरूपं पुरुषोपभोग्यं साध्यतया समर्पयति । न हि स्वोपभोग्यफलमन्तरेण विधिश्चेतनं प्रवर्त्तयितुं शक्नोति । तदुक्तमाचार्येण—

अपेक्षितत्वाद्भाव्यस्य कामशब्दा हि तत्पराः ।
विशेषणप्रधानत्वं दण्डीत्यादिषु दर्शितम् ॥ इति ।

अतः फलस्यापि पुरुषशेषत्वं विधिसम्मतमेव । तदुक्तम्— 'फलञ्च पुरुषार्थत्वात्' ( जै. सू., ३. १. ५. ) इति । पुरुषस्य तन्निष्पादकतया कर्मशेषत्वं निर्विवादमेव । तदुक्तम्—'पुरुषश्च कर्मार्थत्वात्' जै. सू., (३. १. ६.) इति । तेन कर्मफलपुरुषाणां परस्परं शेषशेषित्वम् । द्रव्यगुणसंस्काराणान्तु शेषत्वमेव । फलसाधनत्वेनैव यागानुष्ठानमिति जैमिनिमतं पूर्वाधिकरणसिद्धान्तप्रयोजनमिति ॥

इति तृतीयं बादर्यधिकरणम् ॥ ३ ॥

## अथ चतुर्थं तेषामर्थाधिकरणम्

### तेषामर्थेन सम्बन्धः ॥ ३. १. ७. ॥

( विषयसंशयसङ्गतयः )

स्तो दर्शपूर्णमासौ—"दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इति। तत्र श्रूयन्ते धर्माः—निर्वपणम्, प्रोक्षणम्, अवहननमिति च औषधधर्माः, उत्पवनविलापनग्रहणासादनादयो च आज्यधर्माः, तथा शाखाहरणम्, गवां प्रस्थापनमित्येवमादयो ये सान्नाय्यधर्माः, तेषु सन्देहः—किं सर्वे औषध आज्ये सान्नाय्ये च कर्तव्याः ? उत ये यत्र क्रियमाणा अर्थवन्तस्ते तत्र कर्तव्याः ? इति। कः शेषः ? केन हेतुना शेषः ? इति प्रथमाधिकरणे विचार्य तद्विचारप्रयोजनीभूतानाञ्च विषयव्यवस्थितिं द्वितीयाधिकरणेन प्रतिपाद्येदानीञ्च कथञ्च विनियुज्यत इत्ययमर्थो विचार्यते। अस्मिन् पादे श्रुतिसहायविधिप्रमाणके विनियोगे प्रतिपाद्ये समानपदोपादानविधिप्रत्यासत्त्यावघातादिसंस्काराणामेव तावत्प्रथमं विनियोगः प्रतिपाद्यते।

तत्र प्रथमं सिद्धान्तेनोपक्रमते। तेषाम्—अवघातप्रोक्षणादीनां संस्काराणामर्थेन सम्बन्धः, ये यत्र क्रियमाणाः शास्त्रेणैव प्रयोजनवन्तो विज्ञायन्ते। तदयमर्थः—व्रीह्यादिशब्दैर्हि स्वाभि-

धेयजात्येकार्थसमवेतमेवावान्तरापूर्वसाधनत्वं लक्षितम् । तदर्थत्वेनैवावघातादयो ज्ञायमाना नापूर्वान्तरसाधनसान्नाय्यार्था भवितुमर्हन्ति । एवं विलापनशाखाहरणादयोऽपि द्रष्टव्या इति नान्योन्यं सङ्करो धर्माणामिति । एवं सिद्धान्तेनोपक्रम्य पूर्वपक्षोऽभिधीयते—

विहितस्तु सर्वधर्मः स्यात् संयोगतोऽविशेषात् प्रकरणाविशेषाच्च ॥ ३. १. ८. ॥

सूत्रत्रयस्यापि भाष्ये येषामन्योन्यसंविरोधः सम्भवति, यथा—विलापनोत्पवनशाखाहरणप्रस्तवनादयः संस्कारास्तेऽप्यविशेषेणोदाहृताः, तथापि येषामेवान्योन्यसङ्करः सम्भवति त एवात्रोदाहरणमिति मन्तव्यम् ।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षिणोऽभिसन्धिः—न तावदवान्तरापूर्वसाधनलक्षणया धर्माणां विनियोगः सम्भवति, येन व्यवस्था भवेत् । न लक्षणा, प्रमाणाभावात् । तथाहि—यदपूर्वगृहीताः खल्ववघातादयो धर्मास्तदपूर्वीय एव व्रीह्यादौ तदपूर्वसाधनत्वलक्षणया विधातव्याः । परमापूर्वेणैव हि फलसमत्वेन प्रधानतया प्रकरणेन प्रथमं गृहीता नावान्तरापूर्वेण, तस्याफलत्वेनाप्रधानत्वात् । तेन परमापूर्वसम्बन्धपुरस्सरत्वाद्धर्माणां तत्साधनपदार्थसम्बन्ध

एव वक्तव्यः । परमापूर्वसम्बन्धेन च सर्वेषामेवाज्यौषधसान्नाय्यादीनामविशिष्टत्वादव्यवस्थितत्वमेव धर्माणाम् ।

ननु नावघातादेः परमापूर्वार्थत्वम्, किन्तु वाक्यबलेनान्तरङ्गलक्षणया वाङ्नियमन्यायेनावान्तरापूर्वार्थत्वमेव । अतः कथं धर्माणामव्यवस्थेति । उच्यते—स्यादेवं यदि व्रीह्यादेरपि दीक्षणीयाया इवापूर्वसम्बन्धः स्वतो भवेत्, किन्तु यागसम्बन्धद्वारा परम्परया वक्तव्यः । तत्रैकस्यैव यागस्य वाक्यद्वयेऽपूर्वद्वयमवगतम् । "आग्नेयेन यजेत" इत्यत्रावान्तरापूर्वम्, "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इत्यत्र परमापूर्वम् । ततः परमापूर्वस्याप्रवृत्तत्वात्फलवत्वम् । तेन च प्रयोजनवत्वात्तस्यैव व्रीहिशब्दात्प्रथममुपस्थितेः परमापूर्वसाधनलक्षणयैवावघातादिविधानादव्यवस्थैव धर्माणामिति ।

न चैवं सत्येकस्यैवावघातादेः कथं व्रीहियवयोर्दृष्टार्थत्वमाज्यसान्नाय्ययोश्चादृष्टार्थत्वमिति वाच्यम् । विनियोगोत्तरकालं कल्पनीयत्वात्प्रयोजनस्य । अतो विनियोगबलेन दृष्टार्थत्वं स्वीक्रियमाणं न दोषाय । न च सामान्यतः परमापूर्वग्रहणमन्तरेणैव व्रीह्यादीनां कार्यान्तरविनियुक्तत्वादवान्तरापूर्वसाधनलक्षणयैवावघातादिसम्बन्ध इति वाच्यम् । "सुवर्णं भार्यम्" इत्यत्र सुवर्णस्याप्यपूर्वसाधनलक्षणाप्रसङ्गात् । "सुवर्णं हस्ते

भवति, अथ गृह्णाति" इत्यादिवाक्यैः सुवर्णस्यापि क्रतौ कार्यान्तरे विनियोगदर्शनात् । अथ तत्र भरणस्याप्यपूर्वसम्बन्धानवगमादनपूर्वीयस्य च सुवर्णमन्त्रैः सम्बन्धाविरोधान्न लक्षणेति । तदत्राप्यवघातस्य परमापूर्वग्रहणे सति स्वरूपसम्बन्धाविरोधान्नावान्तरापूर्वसाधनलक्षणाप्रमाणमस्ति । तेनावश्यमग्रतोऽपूर्वसम्बन्धो वक्तव्यः । स च प्रकरणात्प्रधानापूर्वसम्बन्ध एवेति ।

नन्वेकापूर्वप्रयुक्तत्वेऽपि धर्मव्यवस्था दृश्यते । यथा "बृहत्पृष्ठं भवति, रथन्तरं पृष्ठं भवति" इति पृष्ठस्यैकस्तोत्रापूर्वगृहीतत्वेऽपि बृहद्रथन्तरैस्तद्धर्माणाञ्च "बृहति प्रस्तूयमाने चक्षुर्निमीलयेत्" "रथन्तरे प्रस्तूयमाने समुद्रं मनसा ध्यायेत्" इति व्यवस्थिता एव चक्षुर्निमीलनसमुद्रमनोध्यानादयो धर्माः श्रूयन्ते अनुष्ठीयन्ते च । तत्र यथा बृहद्रथन्तरयोश्चित्रत्वशूरत्वगुणकीर्त्तनव्यापारभेदमाश्रित्यैकापूर्वसाधनत्वेऽपि धर्माणां व्यवस्था । तथात्र व्रीह्याज्यसान्नाय्यादीनां भेदेन धर्मव्यवस्था भविष्यति । नैवम् ; न वयमेकापूर्वगृहीतयोर्बृहद्रथन्तरव्यापारभेदाद्धर्मव्यवस्थां ब्रूमः, किन्तु बृहद्रथन्तराभ्यां पृष्ठाख्यस्तोत्रद्वारेण विलक्षणमेवापूर्वद्वयं जन्यते । न चापूर्ववैलक्षण्य एव प्रमाणं नास्तीति वाच्यम् । स्तोत्रं हि पृष्ठम् । स्तुतिश्च यथा चित्रत्वकीर्त्तनेन तथा शूरत्वकीर्त्तनेन । तेनात्र विलक्षणस्तुतिसाध्यमपूर्वं कल्प्यमानं विलक्षणमेव कल्प्यते ।

न चैवं सति विलक्षणकार्यत्वात्समुच्चयः। "बृहद्वा पृष्ठं भवति रथन्तरं वा" इति स्तुतिसाधनद्वारेण विलक्षणस्तुत्योरपि विकल्पस्य वाचनिकत्वात्। न च वाचनिक एवायं विकल्पो न भवतीति वाच्यम्। बृहद्रथन्तराधिकरणे वार्त्तिककारपादैर्वाचनिकस्यैव सिद्धान्तहेतुत्वेनोक्तत्वात्। तेन तत्र भिन्नपृष्ठप्रयुक्ता धर्मव्यवस्था। अत्र तु परमापूर्वप्रयुक्तत्वादवघातादिधर्माणां परमापूर्वसाधनत्वस्य सर्वेषामाज्यौषधसन्नाय्यादीनामविशिष्टत्वात्सर्वे धर्माः सर्वत्र कर्त्तव्या इति। एवं प्राप्तेऽभिधीयते—

अर्थलोपादकर्म स्यात्॥ ३. १. १०॥

(सिद्धान्तः)

अयमभिप्रायः—भवेदेवं यदि परमापूर्वप्रयुक्ता धर्मा भवेयुः, किन्त्ववान्तरापूर्वप्रयुक्ता ह्येते। तथाहि—आग्नेयापूर्वीयपुरोडाशप्रकृतित्वेन व्रीहयो विहिताः। तेषान्तावदाग्नेयापूर्वीयत्वं व्यवस्थितमेव। तत्सन्निधौ चावघातप्रोक्षणादयो द्वितीयाश्रुतिप्रतिपादितव्रीहिसंस्काररूपाः श्रूयन्ते। संस्कारश्च भूतभाव्युपयोगसम्बन्धिद्रव्यविषयः। तेन व्रीहिस्वरूपेऽवघातप्रोक्षणादयः संस्कारा असम्बध्यमाना व्रीहीणां भाव्युपयोगिनि स्वरूपे सम्बध्यमाना आग्नेयापूर्वीयपुरोडाशप्रकृतिद्रव्यत्वेनान्तरङ्गलक्षणाबलेन व्रीहि-

शब्दोपस्थाने सम्बद्ध्यन्ते । तदयमर्थो भवति—आग्नेयापूर्वीय-पुरोडाशप्रकृतिद्रव्यमवहन्यादिति । एवञ्च सति यवस्यापि तद्रूपत्वादवघाताद्यन्वयो नानुपपन्नः । तदुक्तमजिताकृता—

'व्रीहित्वैकार्थसम्बन्धिन्याग्नेयापूर्वसाधने ।
लक्षिते व्रीहिशब्देन विधियुक्तं द्वितीयया ॥
प्रोक्षणं व्यवतिष्ठेत ततो नातिप्रसज्यते' इति ।

एतच्चोपलक्षणमात्रम् । तेन यत्र प्रकृतिद्रव्यगतः संस्कारः श्रूयते, तत्रावान्तरापूर्वीयं प्रकृतिद्रव्यमिति लक्षणम् । यत्र तु प्रदेयद्रव्यगतः संस्कारो विलापनादिः, तत्रावान्तरापूर्वीयं प्रदेयद्रव्यमिति यथासम्भवं सर्वमूहनीयम् । न चैवं सति "सुवर्णं भार्यम्" इत्यत्रापि सुवर्णशब्दस्यापूर्वसाधनलक्षणाप्रसङ्गः । "सुवर्णं हस्ते भवत्यथ गृह्णाति" इत्यादिवाक्यविहितापूर्वीयसुवर्णस्याप्रस्तुतत्वेनात्रानुपस्थितेः । तेन भरणस्य संस्कारत्वासम्भवात्सक्तुवद्विनियोगभङ्गो युक्त एव । न चेह तथेति वैषम्यम् ।

यत्तु परमापूर्वेणाग्रतो गृहीतत्वात्परमापूर्वसाधनमेवावघातादिसम्बन्धार्थं लक्षणीयमित्युक्तम्, तदयुक्तम्; व्रीह्यवघातादीनां परमापूर्वसम्बन्धे प्रमाणाभावात् । प्रकरणेन व्रीह्यवघातादीनां परमापूर्वसम्बन्धो वक्तव्यः । तत्र न तावद्व्रीह्यादिद्रव्याणामक्रियारूपत्वेन प्रकरणेन ग्रहणं सम्भवति । क्रियारूपत्वेऽप्यवघातस्य

व्रीहिसंयुक्तत्वात् न प्रकरणेन ग्रहणम्। अथ न ग्राहकलक्षणम्, किन्तर्हि ? सन्निधानलक्षणम्। एवन्तर्ह्यवान्तरापूर्वस्यैव सन्निहितत्वात्सर्वविशेषसम्बद्धस्य च सामान्यसम्बन्धपूर्वकत्वेऽप्याग्नेयापूर्वीयव्रीहिविशेषसम्बन्धार्थमवघातस्य सामान्येन तत्सम्बन्ध एवाग्रतो युक्तः, परमापूर्वसम्बन्धस्तु कुतः ? न च तस्याफलत्वेनाप्रयोजकत्वम्, परमापूर्वद्वारेणैव फलत्वात्। अनिर्ज्ञातोपायपरिमाणत्वेन च आग्नेयादिसन्निहितधर्मसम्बन्धः। अतः सर्वथा अवान्तरापूर्वप्रयुक्ता एव धर्माः, ततश्च व्यवतिष्ठन्त इति सिद्धम्।

प्रयोजनं पक्षोक्तम्। सूत्रन्तु—अवघातादीनामाज्यादिगुणशास्त्रगम्यस्यार्थस्य प्रयोजनस्य लोपादकर्म स्यात् अननुष्ठानं स्यादित्यर्थः॥

इति चतुर्थं तेषामर्थाधिकरणम्॥ ४॥

अथ पञ्चमं स्फ्यकपालाधिकरणम्

द्रव्यश्चोत्पत्तिसंयोगात्तदर्थमेव चोद्येत॥ ३. १. ११.॥

( विषयसंशयौ )

स्तो दर्शपूर्णमासौ। तत्र समामनन्ति—"स्फ्यश्च कपालानि चाग्निहोत्रहवणी च शूर्पश्च कृष्णाजिनञ्च शम्या चोलूखलञ्च मुसलञ्च दृषच्चोपला चैतानि वै दश यज्ञायुधानि', इति। तत्र सन्दिह्यते—

किं यो य इह शक्यते एभिः कर्त्तुं तस्मै तस्मै पदार्थायैतानि समाम्नातानि ? उत यद्येन संयुक्तं तस्मा एवेति । विधिप्रत्यासत्त्या प्रथमं संस्काराणां विनियोगव्यवस्थां प्रतिपाद्येदानीं द्रव्यगुणयो-र्विनियोगे प्रतिपाद्ये गुणस्य द्रव्यावच्छेदकत्वेन द्रव्यविनियोगा-धीनविनियोगादनन्तरं द्रव्यस्यैव विनियोगः प्रतिपाद्यते ।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षिणोऽभिसन्धिः—द्वावत्र स्फ्यादीनां संयोगौ प्रतीयेते । "एतानि वै दश यज्ञायुधानि" इत्येकः, "स्फ्येनोद्धन्ति" इत्येवमादिरपरः । तयोश्चैको विधिरपरोऽनुवादः । तत्रोद्धननादिवा-क्यानां विधित्वे दशापि वाक्यानि भिन्नानि वक्तव्यानि । प्रत्येक-मेवापूर्वसाधनलक्षणापि वक्तव्या । यज्ञायुधवाक्यस्य तु विधित्व एकवाक्यत्वम् , नाप्यपूर्वसाधनलक्षणा । तेन यज्ञायुधवाक्यस्यैव विधायकत्वादुद्धननादिवाक्यानाञ्च "यदष्टाकपालो भवति" इति वदवयुत्यानुवादेनार्थवादत्वमेव । एवञ्च प्रत्येकयज्ञक्रियान्वयेन दश-संख्याप्युपपत्स्यते । ननु विधिरत्र न श्रूयते । वैशब्दश्च विधित्वपरि-पन्थीति कथमस्य विधित्वम् ? उच्यते—"एतानि वै दश यज्ञायुधानि" इत्यत्रायुधशब्दस्य साधनवचनत्वात् स्फ्यादीनां यज्ञसाधनत्वं प्रतीयते । न चायमनुवादः, वाक्यान्तरेण यज्ञसाधनत्वाप्राप्तेः ।

वैशब्दस्य च "वारुणो वै यज्ञावचरः" इत्यादिषु विधित्व-प्रतिबन्धव्यभिचारात्। तेनाप्राप्तार्थत्वात् विध्यध्याहारेणास्यैव विधायकत्वम्। तत्र प्रदेयत्वेन साक्षाद्यज्ञसाधनत्वस्य च चतुर्था-ध्याये निराकरिष्यमाणत्वादानर्थक्यतदङ्गन्यायेन तदङ्गावतारे यज्ञाङ्गत्वाविशेषाद्यथासामर्थ्यं सर्वार्थान्येव स्यादिति विज्ञायत इति। एवं प्राप्तेऽभिधीयते—

( सिद्धान्तः )

भवेदेवं यदि "एतानि वै दश यज्ञायुधानि" इत्यत्र विधिः श्रूयेत। नन्वायुधशब्दस्य साधनवचनत्वात्स्फ्यादीनाञ्च यज्ञ-साधनत्वस्य वाक्यान्तरादप्राप्तेरनुवादासम्भवाद्विध्यध्याहारेणैवास्य विधित्वमित्युक्तम्। मैवम्; आयुधशब्दस्य युद्धसाधनत्वेन मुख्य-यज्ञसाधनवचनत्वाभावात्। यज्ञसाधने गौणोऽयमायुधशब्दः, गौणश्च प्रमाणान्तरप्रसिद्धगुणयोगनिबन्धन एव। न च विधेयोऽर्थः प्रमा-णान्तरविषयो भवति। तेन विधित्वाभावाद्वैशब्दस्य औत्सर्गिक-विधित्वतिरस्कारेणानुवादद्योतकत्वाद्यथाप्राप्तगुणयोगादनुवादत्वमे-वास्य वक्तव्यम्। न च तदङ्गं सम्भवति, यतः "स्फ्येनोद्धन्ति" इत्यादिवाक्यैरुद्धननादिद्वारेण स्फ्यादीनां यज्ञसाधनत्वमवग-म्यते। आयुधान्यपि युद्धसाधनानि। तेन साधनत्वगुणयोग-स्य स्फ्यादिषु स्तुत्यर्थं गौण एवायमायुधशब्दः। उद्धननादि-

वाक्यानान्तु पृथगाख्यातयोगेन पृथग्विधानस्यैव निष्प्रतिपन्नत्वा-दुद्धननादिसम्बन्धेन पृथग्वाक्यविहितानां स्फ्यादीनाम् "एतानि वै दश यज्ञायुधानि" इति साधारणोऽयमर्थवादः । तदुक्तम्—

स्फ्यादेरुत्पत्तिसम्बन्धः कार्यैरुद्धननादिभिः ।
तत्र यज्ञायुधानीति प्राप्तमेवानुकीर्त्यते ॥ इति ।

(तं. वा., पृ. ६७१)

अपूर्वाधिकरणन्यायेनात्रापि सन्निहितावान्तरापूर्वसाधनलक्षणायाः सिद्धत्वात् द्रव्याणामपि यथासंयोगमेव व्यवस्थितिः ।

प्रयोजनम्—पक्षोक्तमेव । सूत्रन्तु—द्रव्यमुत्पत्तावेवोद्धननाद्यर्थत्वेनावगमात् उद्धननार्थमेव चोद्येत, न क्रियान्तरार्थमित्यर्थः ॥

इति पञ्चमं स्फ्यकपालाधिकरणम् ॥ ५ ॥

## अथ षष्ठमरुणाधिकरणम्

अर्थैकत्वे द्रव्यगुणयोरैककर्म्यान्नियमस्स्यात् ॥३.१.१२.॥

( विषयसंशयसङ्गतयः )

ज्योतिष्टोमे क्रयं प्रकृत्य श्रूयते—"अरुणया पिङ्गाक्ष्यैकहायन्या सोमं क्रीणाति" इति । तत्र संशयः—किमरुणिमा कृत्स्न-

प्रकरणे निविशते ? उत क्रय एवैकहायन्याम् ? इति । द्रव्यविनियोगं प्रतिपाद्येदानीमवसरप्राप्तो गुणविनियोगः प्रतिपाद्यते । अत्रारुणापदस्य केवलगुणपरत्वे पिङ्गाक्ष्यैकहायनीपदयोश्च द्रव्यपरत्वे स्थिते विचारः । तदयुक्तम्; पिङ्गाक्ष्यैकहायनीपदयोरपि गुणवचनत्वात् । तथाहि—पिङ्गाक्षी एकहायनीति च बहुव्रीहिसमासोऽयं मत्वर्थीयप्रत्ययसमानार्थः । मत्वर्थीयप्रत्ययस्य तदस्यास्त्यस्मिन्निति सम्बन्धेऽनुशासनात्तत्समानार्थस्य बहुव्रीहेरपि सम्बन्धवचनत्वमेव । किञ्च गोमानिति एकहायनीति च विशिष्टे प्रतीयेते । न चात्र गोमात्रमेकहायनमात्रं वा विशेषणम्, असम्बद्धे विशिष्टप्रत्ययानुत्पत्तेः । तेन गोसम्बद्धः, एकहायनसम्बद्धोऽत्र विशेषणम् । विशेषणञ्च पूर्वमभिधीयते । अतस्सम्बन्धोऽत्र प्रथममभिधातव्यः । तदुक्तम्—

न हि गोभिरसम्बन्धो गोमानित्युपपद्यते ।
तस्माद्विशेषणं तत्र सम्बन्धः पूर्वमुच्यते ॥ इति ।

(तं. वा., पृ. ६७३)

तथा च सत्याकृतिन्यायेन तत एव विशिष्टप्रतीतिसिद्धेरनभिधेयमेव द्रव्यम् । किन्तु 'कृत्तद्धितसमासेषु सम्बन्धाभिधानं त्वतल्भ्याम्' इत्यनुशासनबलात्पिङ्गाक्षीत्वमेकहायनीत्वमित्यत्र सम्बन्ध एवावश्यमभिधेयः । अभिधेयनिष्कर्षे च त्वतलोरनुशा-

सनम्। यस्य गुणस्य हि भावाद्द्रव्ये शब्दनिवेशः तदभिधाने त्वतलाविति। प्रयोगदर्शनञ्च यथा—शावलेयस्य गोत्वमिति। अतोऽपि पिङ्गाक्ष्यैकहायनीशब्दाभ्यामपि सम्बन्ध एवाभिधीयते। स च तदागमन्यायेन प्रत्ययार्थ एवेति प्राधान्यात्तस्यैव पदार्थत्वम्, न तु द्रव्यस्य, आक्षेपलभ्यत्वात्। तेन पिङ्गाक्ष्यैकहायनीशब्दयोरपि सम्बन्धरूपगुणान्विताभिधानान्न विचारविषयत्वम्।

उच्यते—स्यादेवं यद्येकहायन्यादिशब्दैः सम्बन्धोऽभिधीयते। न चैतदस्ति, विकल्पासहत्वात्। तथाहि—किं सम्बन्धमात्रमभिधीयते? सम्बन्धविशेषो वा? न तावत्सम्बन्धमात्रम्, सकलयौगिकशब्दानां पर्यायत्वप्रसङ्गात्। नापि सम्बन्धविशेषः, तस्य सम्बन्धिद्वयाधीनत्वेन तदभिधानमन्तरेणानभिधानात्। अथ तदर्थं द्वावपि सम्बन्धिनावभिधीयेते, तदाभ्यामेव विशेषणविशेष्यभावापन्नाभ्यां सम्बन्धप्रतीतिसिद्धेः किमभिधानगौरवाश्रयणेन? तदुक्तम्—

सर्वत्र यौगिकैः शब्दैर्द्रव्यमेवाभिधीयते।
न हि सम्बन्धवाच्यत्वं सम्भवत्यतिगौरवात्॥ इति।

(तं. वा., पृ. ६७५.)

नन्वप्रतीतविशेषणभूते सम्बन्धे विशिष्टबुद्धिर्न भवतीत्युक्तम्। नैवम्; न हि गोमानिति पदे सम्बन्धोऽपि विशेषणम्। किन्तर्हि? गावः। ताश्च गोमातिपदिकेन प्रथममुपात्ता एव।

तदुक्तम्—

विशेषणाद्विना नेष्टो विशेष्यप्रत्ययोद्भवः ।
विशेषणञ्च गावोऽत्र न सम्बन्धः कथञ्चन ॥ इति ।

( तं. वा., पृ. ६७५ )

तत्र विशेषणत्वं सम्बन्धिनं विना सम्भवति, न तु सम्बन्धावगतिं विना । न च यद्येन विना सम्भवति तत्तदवगतिमपेक्षते । अपि त्ववगते तस्मिन्नाक्षेपलभ्यं भवति । तदुक्तम्—

न विशिंषन्ति गावोऽर्थं पृथिव्यामनवस्थिताः ।
तत्र किं शक्यते वक्तुं पृथिव्यप्यभिधीयते ॥ इति ।

(तं. वा., पृ. ६७६)

किञ्च व्यभिचारादपि न सम्बन्धावगमो विशिष्टावगमनिमित्तम् । तथाहि—प्रतीयत एव पितापुत्रादिशब्देभ्यः सम्बन्धो न विशिष्टावगमो भवति । पुत्रशब्दात्तु विशिष्टानवगमेन नियमेन भवत्येव सम्बन्धावगमः । तेन द्रव्यमेव विशिष्टं पिङ्गाक्ष्यैकहायनीशब्दाभ्यामभिधीयते । यत्तु त्वतलोः सम्बन्धस्याभिधानादभिधेयनिष्कर्षे च त्वतलोरनुशासनप्रयोगयोर्दर्शनात्कृत्तद्धितसमासैः सम्बद्धमेवाभिधीयत इत्युक्तम् । तदयुक्तम् ; न ह्यभिधेयनिष्कर्षे त्वतलोरनुशासनमस्ति । किन्तर्हि ? द्रव्यसमवेतशब्दप्रवृत्तिनिमित्तनिष्कर्षे । तथा चानुशासनम्—"यस्य गुणस्य हि भावाद्द्रव्ये शब्दनिवेशः तदभिधाने त्वतलौ" इति । तेन गोशब्दस्य व्यक्ति-

रूपद्रव्ये प्रवृत्तौ द्रव्यसमवेतमभिधेयमेव सामान्यं निमित्तम्। अतस्त-देव तत्र गोत्वं गोतेति त्वतल्भ्यां निष्कृष्यत इत्युचितम्। कृत्तद्धितसमासेषु न द्रव्यसमवेताभिधेयस्य निमित्तस्यासम्भ-वात्सम्बन्धस्य चानभिधेयस्यापि द्रव्यसमवेतस्य वस्तुनः शब्द-प्रवृत्तिनिमित्तत्वात्समवेतं त्वतल्भ्यान्निष्कृष्यते। तदुक्तम्—

शब्दप्रवृत्तिनिमित्ते हि भावप्रत्यय इष्यते।
देवदत्तस्य गोमत्वं सम्बन्धश्च प्रतीयते॥ इति।

(तं. वा., पृ. ६७३.)

अतः पिङ्गाक्ष्यैकहायनीशब्दाभ्यां द्रव्यमेवाभिधीयत इति सिद्धम्॥ ननु भवतु पिङ्गाक्ष्यैकहायनीशब्दयोर्द्रव्यवचनत्वम्, तथाप्यरुणाशब्दस्यापि गुणविशिष्टद्रव्यवचनत्वेन केवल(गुण)वचन-त्वाभावात्कथं विचारविषयत्वम्? तथाहि—रूपरसगन्धादिशब्दानां खलु केवलगुणवचनानां मत्वर्थीयप्रत्ययमन्तरेण द्रव्यसमानाधिक-रणस्याभावात्। न हि भवति 'रूपं पट' इति सामानाधिकरण्यम्; अपि तर्हि? 'रूपवान् पट' इति। अरुणादिपदेषु विनापि मत्वर्थीय-प्रत्ययेन 'अरुणः पटोऽरुणा शाटी' इति द्रव्यसामानाधिकरण्याद्गु-णविशिष्टद्रव्यवचनत्वमेव। किञ्च 'गुणवचनेभ्यश्च' इति शुक्लारुणा-दिशब्देषु मतुब्लोपानुशासनात् 'शुक्लवान् पटः' इत्यस्मिन्नेवार्थे शुक्लः पट इति प्रयोगानुशासनवशाद्विज्ञायते। न च शुक्लस्य

शब्दस्य वाचकत्वं सम्भवति। यथा........वत्तेष्वृद्धिदादिपदेषु मत्व-
र्थलोपानुशासनं प्रकृतिभागस्यैवोभयथा प्रतिपादनसामर्थ्यप्रदर्श-
नार्थम्। एवमत्राप्यरुणादिपदस्यैव गुणद्रव्यप्रतिपादनसामर्थ्य-
प्रतिपादनार्थं मतुब्लोपानुशासनम्। अतोऽपि द्रव्यवचनत्वमेव।
तदुक्तम्—

शब्दानां न हि लोपेन वाक्यार्थः प्रतिपाद्यते।
तस्मादुभयसामर्थ्यमेवं तत्रावगम्यते॥ इति।

(तं. वा., पृ. ६८१)

नापि गुणवचनत्वेऽपि शुक्लादिपदानां लक्षणया द्रव्यसामा-
नाधिकरण्यम्, रूपादिशब्दानामपि लक्षणया द्रव्यसामानाधिक-
रण्याद् रूपं पट इति प्रयोगप्रसङ्गात्। किञ्च द्रव्यगतसंयोगे
दृश्यते—अरुणः पटः अरुणा शाटीति। अतोऽपि द्रव्यवचनत्वम्।
तेन गुणवद्द्रव्यवचनत्वादरुणशब्दस्य केवलगुणवचनत्वाभावाद-
नुपपन्नो विचार इति।

उच्यते—गुणवद्द्रव्यवचनत्वेऽपि गुणाभिधानस्यावश्याभ्यु-
पेयत्वादाकृतिन्यायेनाक्षेपादेव द्रव्यप्रतीतिसिद्धेर्न द्रव्यगोचराप्यभि-
धानशक्तिः कल्पयितुं शक्यते। तेनाकृतिन्यायेनैवाक्षिप्तद्रव्यद्वारेण
शुक्लः पट इति सामानाधिकरण्योपपत्तेर्न तद्वशेन द्रव्यवचनत्वम्।
न चैवं सति रूपरसादिपदानामप्याक्षिप्तद्रव्यद्वारेणैव रूपं पट इति

सामानाधिकरण्यप्रसङ्गः, शब्दशक्तिवैचित्र्यात् । तथा हि—केषाञ्चिच्छब्दानां केषुचिदर्थेष्वभिधानवदेव लक्षणाशक्तिरप्यनादिकालप्रवृत्तत्वेन निरूढा । यथा शुक्लादिशब्दानां द्रव्येषु । केषुचित्क्रियते । यथा—रथाङ्गनामा चक्रवाकः । केषुचित्कर्तुमपि न शक्यते । यथा—स्पर्शरूपरसगन्धानाम् । तदुक्तम्—

> निरूढा लक्षणाः काश्चित्सामर्थ्यादभिधानवत् ।
> क्रियन्ते साम्प्रतं काश्चित्काश्चिन्नैव त्वशक्तितः ॥ इति ।

(तं. वा., पृ. ६८३)

न च सम्बन्धमात्रनिबन्धनत्वाल्लक्षणाया एवंविधवैचित्र्यासम्भव इति वाच्यम् । अभिधानशक्तेरिव लक्षणाशक्तेरपि वैचित्र्योपपत्तेः । यथाभिधानवादिनः समानेऽपि गुणाभिधाने शुक्लादिशब्दा गुणविशिष्टं द्रव्यमभिदधति, रूपादिशब्दास्तु गुणमात्रम् । एवं शुक्लादिशब्दा एव गुणमभिदधानाः प्रधानभूतं सामानाधिकरण्योचितं द्रव्यं लक्षयन्ति, न रूपादिशब्दा इत्याभिधानवदेव लक्षणावैचित्र्योपपत्तेर्नानुपपन्नम् । न चैवं शक्तिद्वयस्वीकारादविशेषः, अभिधानशक्त्यैवाभिधेयाविनाभावोपस्थितार्थतात्पर्याया लक्षणायाश्च शब्दार्थत्वात् । अत एव मतुपो लोपाम्नानं वा, अत्रानादिकालनिरूढलक्षणाश्रयणेन । लिङ्गसंख्ययोश्चाक्षिप्ताश्रयभूतद्रव्यद्वारेणैव । तथा चाहुराचार्याः—

'गुणवचनानामाश्रयतो लिङ्गवचनानि भवन्ति' इति। गुणवचनत्वं चोपसर्जनीभूतार्थाभिधानम्। कथन्तर्हि वैयाकरणानां वैशेषिकादिवत्प्रतिनियता गुणास्सन्तीति? नः रूपरसादिशब्देषु निष्कृष्टगुणाभिधायिषु यथाकथञ्चिदाश्रयोपस्थितौ प्रसङ्ग इति। अतोऽरुणापदस्य गुणवचनत्वादुपपन्नो विचार इति।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षिणोऽभिसन्धिः—अरुणयेति तृतीयान्तमरुणापदं केवलगुणवचनं सत्कारकार्थञ्च प्रतीयते। न चामूर्तस्य गुणस्य कारकत्वं सम्भवति, क्रियासमवायाभावात्। द्रव्यावच्छेदकत्वेनास्य कारकत्वम्, तथापि क्रियासमवायाभावेनास्याकारकत्वात्। न च भूतद्रव्यसम्बन्धमात्रेण कारकविभक्तियोगः। तथासति विधावौपचारिकशब्दप्रसङ्गात्। न चैवं सति जातेरप्यकारकत्वमिति वाच्यम्। जातेरप्युदाहरणत्वेन विचारविषयत्वात्। आकृत्यधिकरणे च वाच्यत्वप्रतिपादनपरतयेह सिद्धमेव क्रियार्थवत्त्वमुपदर्शितम्। तेनात्र द्रव्यगतं कारकत्वमनूद्य गुणो विधेयः। न चैवं सति स्ववाक्य एवैकहायनीपदस्य द्रव्यवचनत्वात् हन्त! तृतीयाप्रतिपादितकारकत्वानुवादेनैवारुणागुणविधानमिति वाच्यम्। वैरूप्यलक्षणावाक्यभेदप्रसङ्गात्। तथाहि—एकस्यैवैकहायनीपदस्य क्रयं प्रति विधेयगुणभूतोपदेशार्थत्वम्, अरुणागुणं प्रत्य-

नूद्यमानप्रधानभूतोद्देश्यार्थत्वम् । तथा एकहानीपदस्य क्रियासम्बन्धाय कारकविभक्तियोगः, गुणसम्बन्धाय च सम्बन्धप्रतिपादकषष्ठीविभक्तियोगः । एतच्च सकृदुच्चरिते वैदिकेऽभ्युपगमनं पौरुषेयत्वमापादयतीति, तेन प्रकरणगतक्रियाङ्गकरणीभूतकृत्स्नद्रव्यगतमेव कारकत्वमनूद्यारुणगुणो विधीयत इति । न चैवं सति प्रकरणगतसम्बन्धेऽपि विभागलक्षणवाक्यभेददोष इति वाच्यम् । वैरूप्यलक्षणवाक्यभेदस्याप्यवश्याभ्युपगमनीयत्वात् । न हि विभागमन्तरेण परस्परभिन्नार्थत्वं सम्भवति ।

किञ्च पौरुषेयत्वापादको हि वैरूप्यलक्षणो वाक्यभेदो महादोषमावहति । न च विभागलक्षणो वाक्यभेदः पौरुषेयत्वावहः, किन्तु सहोच्चरितानामौचित्यमात्रप्राप्त्यैकार्थातिक्रममात्रमेव । तथा च "स्योनं ते सदनं कृणोमि" इत्यादिष्वर्थैकत्वाभावेन विभागलक्षणवाक्यभेदस्य स्पष्टत्वादिति वैषम्यम् । तेनायमर्थः—सर्वाण्येव प्रकरणगतकारकाणि ग्रहादीन्यरुणानि कर्त्तव्यानीति । ननु विभज्यमानमप्यरुणापदं स्वतोऽविधायकमिति कल्पितविधिनैव तदर्थः सन्निधिलक्षणप्रकरणोपलक्षिते कारके विधातव्यः । सन्निधानश्चैकहायनीरूपकारकेणैव प्रकृष्टतरम् । न च कल्पितविधिना तत्सम्बन्धविधाने विरुद्धत्रिकद्वयापत्तिलक्षणो वाक्यभेदः पौरुषेयत्वापादकोऽस्तीत्येकहायनीगतकारकत्वानुवादेनारुणगुणो विधीय-

ताम्, न तु प्रकरणागतकारकत्वानुवादेनेति । उच्यते—विधेयान्वयपरो हि विधिस्तदेवोद्देश्यमपेक्षते, येन विना विधातुमेव नोत्सहते । तदुक्तम्—"हविषा विशेषणं नोभयत्वेन" इति । तदत्र कारकमात्रोद्देशे विध्यानर्थक्याज्ज्योतिष्टोमापूर्वीयमेव कारकमुद्दिश्यते । पुनश्चैकहायनीगतत्वेन विशेषणविवक्षायां पौरुषेयत्वावहो वाक्यभेदो दुष्परिहर एवेति प्रकरणागतसकलकारकसम्बन्ध एव गुणस्य युक्तः ।

ननु शुक्लारुणादिशब्दानां केवलगुणवचनत्वेऽपि निरूढलक्षणया गुणोपसर्जनद्रव्यप्रधानत्वमुक्तम् । तेन लिङ्गसंख्याकारकत्वमपि द्रव्यस्यैवोपादायारुणापदं द्रव्यान्तरं क्रय एव विधत्ताम् । न चैकहायन्यावरोधाद्द्रव्यान्तराप्रवेशः, विभिन्नानतिप्रयोजनत्वेन वाक्यान्तरविहितानामपि वासःप्रभृतीनां समुच्चयस्वीकारादिति । उच्यते—सत्यमुक्तम्, किन्तूपसर्जनत्वं गुणस्य पदार्थवेलायाम् । तथाहि—शुक्लः पट इति शुक्लपदं यद्यपि निरूढलक्षणावशादाक्षिप्तद्रव्यमेव पटसामानाधिकरण्यं भजते, तथापि लोहितोष्णीषन्यायेनोपसर्जनीभूतगुणपरमेवेति व्युत्पत्तिः । शुक्लः शुक्लौ शुक्ला इत्यत्र तु द्रव्यपरकारकत्वञ्च क्रियान्वयित्वरूपं वाक्यार्थो भवति, न लिङ्गसंख्यावत्पदार्थपर्यवसायित्वम् । तेनात्र कारकत्वान्वयो गुणस्यैव वक्तव्यः ।

न च वाच्यम्—गुणपरत्वेऽरुणापदस्य कुत्र लिङ्गसंख्ययोरन्वय इति। लक्षितद्रव्य इति चेत्—तर्हि युगपच्छ्रुतिलक्षणाविरोधात्कारकत्वमपि द्रव्यस्यैवास्तु, यतो न श्रुत्यर्थानुपयोगलक्षणा, येन स्वार्थप्रतिपादनमवान्तरव्यापारीकृत्य लाक्षणिकार्थपर्यवसायि पदं भवेत्। किन्तु श्रुत्यर्थोपपत्त्यर्थमेव। तथाहि—गुणमभिदधात्यरुणादिपदम्, अगुणस्य च गुणिनमन्तरेणासम्भवात्स्वार्थोपपत्त्यर्थं गुणिनमेव द्रव्यं लक्षयति। तेन 'निमित्तं विधिरपबाधते' इति स्वार्थपरित्यागेनैवेयमनादिनिरूढलक्षणा। अनेनैवाभिप्रायेणोपसर्जनीभूताक्षिप्तद्रव्यप्रधानो गुणः शुक्लारुणादिशब्देभ्यः प्रतीयते, रूपादिशब्देभ्यः स्वतन्त्र इत्युच्यते। न तूपसर्जनत्वेनाभिप्रायेण। न च श्रौतार्थपरित्यागेन लाक्षणिकान्वयः सम्भवतीति गुणस्यैव कारकान्वयः। लिङ्गसंख्यान्वयस्त्वाक्षिप्तद्रव्यस्यैव, गुणे तस्यासम्भवात्। न चैतन्न भवति। दृष्टो हि स्वार्थपरस्यापि शब्दस्य लक्षितेनापि लिङ्गसंख्यान्वयः। यथा "राजा राजसूयेन" इति तृतीयया राजसूयप्रातिपदिकाभिहितानामेव समुदायिनां कारकत्वान्वयः, लक्षितसमुदायस्य संख्यान्वयः।

नन्वमूर्त्तत्वाद्गुणस्य कारकत्वं न सम्भवतीत्युक्तम्। अतः स्वार्थानुपयोगादेवेयं लक्षणा। तेन कारकत्वयोग्यत्वविदितद्रव्यविनियोजकमेवारुणापदमापद्यत इति पूर्वपक्षाभावः। उच्यते—

एवं ह्यत्र पूर्वपक्षी मन्यते—कारकत्वान्वयस्तावदत्र गुणस्य प्रतीयते। तत्र किं स एव यथोपपद्यते तत्स्वीक्रियताम्? अथ वा लक्षितद्रव्यं क्रियायां विधीयताम्? तत्र लक्षितद्रव्यविधाने श्रुत्यर्थपरित्यागो विधौ च लक्षणा। न च गुणस्य प्रकृतकारकान्वयो नोपपद्यते। तत्र यद्यप्युत्सर्गतः प्रातिपदिकार्थस्य कारकीभावेनैव सम्बन्धो युज्यते, तथाप्यसम्भवेन तत्परित्यागात्सम्बन्धमात्रमेव स्वीकर्त्तुमुचितम्। तच्च कारकत्वानुवादेन गुणविधाने न सम्भवतीति तदेव स्वीक्रियते। तत्राप्यानर्थक्यतदङ्गन्यायेन करणकारकीभूतद्रव्यविषयत्वम्। अतोऽनुवादस्य यथाप्रतीतविषयत्वात्सर्वाण्येव कारकाण्यरुणीकर्त्तव्यानीति। तदुक्तम्—

अतश्च पदमेवैतद्वाक्येनैवं विभज्यते।
या व्यक्तिः करणत्वेन चोदितापूर्वसाधनम्॥
तया तत्साधयेन्नित्यमरुणत्वविशिष्टया।
एवश्चेदरुणं कार्यं करणं यद्ग्रहाद्यपि॥ इति।

( तं. वा., पृ. ६८०. )

न चैवं सति गुणस्य कर्मकारकत्वमपि न सम्भवतीति वाच्यम्। तस्य क्रियासमवायव्यतिरेकेण क्रियोद्देश्यतामात्रेण सम्भवात्। तस्मात्करणकारकाण्येवारुणीकार्याणि, न तु कर्त्रादीन्यपीति। एवं प्राप्ते—

( सिद्धान्तः )

अभिधीयते—भवेदेवं यदि गुणस्य कारकत्वं नोपपद्यते। क्रियानिर्वर्तनं हि कारकत्वम्। तत्क्रियापेक्षानिबन्धनम्। यथा च क्रिया द्रव्यं विना न भवतीति स्वनिष्पत्तये द्रव्यमपेक्षते, तथा गुणानवच्छिन्नस्य द्रव्यविशेषस्य क्रियार्थमुपादातुमशक्यत्वात् गुणमपेक्षत एव। तत्राकांक्षावशाद्यदि स्ववाक्यस्थमुभयं पश्यति, तदान्योन्यानुग्रहादुभयमपि स्वसाधनतया गृह्णाति। अथ गुणं न पश्यति यथा "पशुना यजेत" इति ( तत्र गुणापेक्षया यं कञ्चन-गुणं स्वीकरोति ) तथा द्रव्यापेक्षया यत्किञ्चिद्द्रव्यं स्वीकुरुते। अत्र चोभयस्वभावादुभयमपि साधनतया क्रयक्रिया स्वीकुरुते। ननु उत्कृष्टं क्रियां कुर्वत्कारकं भवति। गुणस्य चामूर्तत्वेन क्रियासमवायाभावात् कथं कारकत्वम्? उच्यते—न हि प्रधानभूतक्रियासमवायेन करणकारकं भवति, तस्याः कर्तृमात्रसमवेतत्वात्, किन्तु तदनुकूलव्यापारजननेन। तच्च गुण-स्यापि द्रव्यावच्छेदरूपव्यापारात्सम्भवतीति तस्यापि कारकत्वमेव।

अथ द्रव्यस्य व्यापारो द्रव्यसमवेतो गुणस्य व्यापारो न गुणसमवेत इत्यकारकत्वम्। गुणस्य चोक्तं द्रव्यसमवेतव्यापारे-णैव कारकत्वं भवतीति। अथ द्रव्ये तथैव दृष्टमिति चेत्—गुणस्य न तथा दृष्टमिति द्रव्यस्याप्यकारकत्वप्रसङ्गः। तेनासौ व्यापारो भवतु

स्वसमवेतोऽन्यसमवेतो वा । सर्वथा क्रियानुकूलव्यापारेणैव करणत्वम् । द्रव्यस्य व्यापारो द्रव्यसमवेत एव, गुणस्य त्वर्थावच्छेदकरूपो व्यापारो यद्यर्थविशेषरूपोऽसौ तदार्थसमवेतपदार्थज्ञानरूपस्तदा पुरुषसमवेत एवेति । दृष्टश्चान्यसमवेतेनापि व्यापारेण करणत्वम् । यागस्यैव पुरुषसमवेतेनाप्यपूर्वव्यापारेण फलभावनाकरणत्वम् । अतो नानुपपन्नं गुणस्य करणत्वम् । एवञ्च सति स्ववाक्यविधिनैव विधानोपपत्तौ न विधिनैव कल्पनागौरवम् । नापि वाक्यभेदेनापि प्रत्ययाभिहितस्य कारकत्वस्य प्रकृत्यर्थेन सह यथाकथञ्चित्सम्बन्धाश्रयणेन प्रातिपदिकान्तरार्थान्वयित्वं भविष्यतीति ।

न चैवं द्रव्यगुणयोरेकक्रयक्रियान्वये सति परस्परमन्वय इति वाच्यम् । समभिव्याहारलक्षणवाक्यादेवान्योन्यान्वयोपपत्तेः । तथाहि—किञ्चिद्द्रव्यमवच्छिन्दता अरुणगुणेन मया क्रयः साधयितव्य इत्यरुणगुणो द्रव्यमपेक्षते । तथैकहायनीद्रव्यमपि क्रियार्थमुपादानाय केनचिद्गुणेन ममावच्छेदकेन भवितव्यमिति गुणमपेक्षते । न चात्रान्यत्किञ्चिद्द्रव्यं गुणो वा समस्ति । ततश्च सन्निहितातिक्रमे कारणाभावादनयोरेव परस्परं सम्बन्धोऽवगम्यते ।

किञ्च क्रयोऽप्यत्र न गुणाद्द्रव्यान्तराक्षेपं सहते । यदि ह्यसावनियतद्रव्यगुणो भवेत्, तदा द्रव्यान्तरं गुणान्तरं च

सहेतापि । एकहायनीद्रव्यक्रोऽरुणागुणश्चासौ श्रूयते । अतश्चैव····
····तया परस्परान्वितौ द्रव्यगुणावाकर्षन् प्रधानभूतोऽसौ तयोरेवान्वयं सम्पादयतीति । तदुक्तम्—

क्रयश्चावगतद्रव्यगुणः प्राधान्यसम्मतः ।
अनिच्छन्नश्रुतं किञ्चिद्गुणं द्रव्ये नियच्छति ॥ इति ।

(तं. वा., पृ. ६६३)

न चात्र श्रुतिविरोधः, श्रुत्यवगतक्रतुसम्बन्धानुगुणत्वादन्यान्यासम्बन्धस्य । तदुक्तम्—

क्रयापेक्षित एवायं सम्बन्धः क्रियते पुनः ।
न चात्रानुगुणा वृत्तिः दुर्बलापि विरुध्यते ॥ इति ।

(तं. वा., पृ. ६६४)

तेन तृतीयाश्रुतिप्रतिपादितक्रयाङ्गभावनिर्वाहार्थमेव, परस्परान्वयाभ्युपगमात्सत्यमुपकार्योपकारकभावेनान्योन्यं द्रव्यगुणयोरङ्गाङ्गिभाव इति सिद्धं गुणस्यापि क्रियाया एव करणत्वमिति । अत्र च वायव्यवाक्यमप्युदाहरणमेव । यतोऽत्रापि वायव्येन श्वेतेन यजेतेति वाक्यं व्यज्यते । पूर्वपक्षश्चात्र गुणपदस्य श्रुतिवृत्त्यनुरोधेन केवलगुणपरत्वात्तस्य चामूर्त्तत्वेन क्रियासाधनत्वाभावात् प्राकरणिकद्रव्यगतप्रत्ययार्थीभूतकारकत्वानुवादेन गुणमात्रविधायकत्वम् । सिद्धान्तस्तु द्रव्यावच्छेदकद्वारेण गुणस्यापि क्रियायां कारक-

त्वमिति । तच्चात्र वायव्यपदेन द्रव्योपादानाच्छ्वेतपदस्याप्यविशिष्ट-मिति न कश्चिद्विशेषः ।

प्रयोजनम्—पत्तोक्तम् । सूत्रन्तु—अर्थैकत्वे द्रव्यगुण-योरैककर्म्यात्क्रियार्थत्वात्परस्परनियमः स्यादिति ॥

इति षष्ठमरुणाधिकरणम् ॥ ६ ॥

अथ सप्तमं ग्रहैकत्वाधिकरणम्

एकत्वयुक्तमेकस्य श्रुतिसंयोगात् ॥३.१.१३॥

( विषयसंशयसङ्गतयः )

अस्ति सोमो "य एवं विद्वान् सोमेन यजते" इति । तत्र श्रूयते—"दशापवित्रेण ग्रहं सम्मार्ष्टि" इति । तथा अग्निहोत्रे श्रूयते-"अग्नेस्तृणान्यपचिनोति" इति । तथा दर्शपूर्णमासयोश्श्रूयते-"पुरोडाशं पर्यग्नि करोति" इति । तत्र सन्देहः—किमेकस्य ग्रहस्याग्नेः पुरोडाशस्य च सम्मार्जनादि कर्त्तव्यम् ? उत सर्वेषां ग्रहाणां, सर्वेषाम-ग्नीनां, सर्वेषां पुरोडाशानाम् ? इति । संस्कारद्रव्यगुणानां यथासंयोगं व्यवस्थया विनियोगे प्रतिपादिते इदानीं किमुद्देश्यस्य संयोगिनो विशेषणं विवक्षितम् ? उताविवक्षितम् ? इति निरूप्यते । अत्र चैकत्वयुक्तमित्युपलक्षणम् । द्वित्वबहुत्वयुक्तमप्युदाहर्त्तव्यम् । तेन

"यस्य पुरोडाशौ क्षायतः" तथा "यस्य हवींषि नश्येयुर्दुष्येयुर्वा" इत्येवमादीन्यपि वाक्यानि विचारविषया एव।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षिणोऽभिसन्धिः—"ग्रहं सम्मार्ष्टि" इत्यत्र ग्रहत्ववदेकत्वमपि श्रूयते। न चैकपदोपात्तयोर्ग्रहत्वैकत्वयोर्ग्रहत्वं विवक्षितं नैकत्वमित्यत्र हेतुं पश्यामः। तेन यथा "पशुना यजेत" इत्यत्रैकत्वयुक्तस्यैव पशोः करणतया क्रियायामुपादीयमानत्वेन विवक्षा, तथैकत्वयुक्तस्यैव ग्रहस्य कर्मकारकतया क्रियायामुद्देश्यत्वेन विधिविवक्षा भविष्यति। न च पदश्रुत्या ग्रहविशेषणस्यैकत्वस्य कथं वाक्येन सम्मार्गान्वय इति वाच्यम्। विरोधाभावात्। पश्वेकत्वयोरिव ग्रहैकत्वयोरपि आश्रयाश्रयिरूपेण विशेषणविशेष्यभावस्य पदश्रुतिप्रमाणकत्वात्सम्मार्गभावनया च सह शेषशेषिभावस्य वाक्यप्रमाणकत्वात्। तेन पश्वेकत्वस्येव ग्रहस्योद्देश्यत्वेन सम्मार्गान्वय इति।

ननु कार्योपयुक्तं हि संस्क्रियते। कार्योपयोगश्च दशानामपि ग्रहाणामविशिष्टः। तेन दशापि ग्रहाः सम्मार्ष्टव्या इति। मैवम्; कार्योपयोगित्वाविशेषेण चमसानामपि सम्मार्गप्रसङ्गात्। अथ चमसश्रुत्यभावाद्ग्रहस्यैव श्रुतत्वात् ग्रहाणामेव सम्मार्गः, एवं दशत्वस्याश्रुतत्वादेकस्यैव सम्मार्गः। न चोद्देश्यगतत्वमेवाविवक्षा-

कारणम्, उपादेयगतस्यापि विशेषणस्योपादेयगतत्वेनैवाविवक्षा-प्रसङ्गात्। किञ्च "अष्टवर्षं ब्राह्मणमुपनयीत" इत्यत्रोद्देश्यगतयोर-प्यष्टवर्षत्वपुंस्त्वयोः, तथा "वसन्ते ब्राह्मणोऽग्नीनादधीत" इत्यत्राग्नि-गतबहुत्वस्य, तथा "यूपं छिनत्ति" इत्यत्र यूपगतैकत्वस्योद्देश्यविशेष-णस्यापि विवक्षादर्शनेन व्यभिचारादपि नोद्देश्यविशेषणत्वमवि-वक्षाकारणम्।

अथोच्येत—द्विविधमुद्देश्यं प्राप्तमप्राप्तञ्च। तत्र ब्राह्मणस्या-ग्नीनां यूपस्य चान्यतोऽप्राप्तत्वादुद्देश्यस्यापि विशेषणविवक्षा भवतु नाम। ग्रहस्य तु "ग्रहैर्जुहोति" इत्यत्र ग्रहाणां प्राप्तत्वाद्यथा-प्राप्तानामेवोद्देश्यत्वान्न विशेषणविवक्षा युक्तेति। तदयुक्तम्; ग्रहाणामपि सम्मार्गसम्बन्धेनाप्राप्तत्वात्। अथ होमे प्राप्तत्वान्ना-प्राप्तत्वम्, तर्हि ब्राह्मणस्यापि लोके प्राप्तत्वान्नाप्राप्तत्वमिति विशेषण-विवक्षा न स्यात्। न च विध्यनपेक्षितत्वादेवाविवक्षितत्वम्, यतो यथा विधिर्निरुद्देश्यविधानासम्भवादुद्देश्यमपेक्षते, तथा किं रूपं तदुद्देश्यमित्यनुष्ठानौपयिकं तद्विशेषणमपि। तत्र यदि स्ववाक्यैः संख्यादिकं विशेषणं न प्राप्नोति, तदा प्रकरणगतमपि विशेषणं गृह्णाति। स्ववाक्यगतविशेषणलाभे तु नैराकाङ्क्ष्यान्नान्यदपेक्षते। तदिह स्ववाक्यगतैकत्वसंख्यया निराकाङ्क्षो विधिर्न प्रकरणमुपस-र्पतीति प्रातिपदिकोच्चारणवेलायां ग्रहशब्दात्प्रकरणगामिनो दशैव

ग्रहाः प्रतीयन्ते । ते च कार्योपयोगित्वेन सर्वे एव संस्कारमपेक्षन्ते । प्रत्ययवशात्तु तदेकत्वस्वीकारे सतीतरेषां प्राप्तानामपि वर्जनात् परिसङ्ख्यैव दोषः स्यात् ।

मैवम्; समभिव्याहारलभ्यं हि पदविधिः स्वीकुरुते, न प्रतीतमात्रम् । तथा सत्येकहायनीपदादपि नानागुणकद्रव्योपस्थितौ अरुणगुणो (न) विशेषणोऽपि परिसंख्या स्यात् । तेन यत्र विशेषलाभाय पदान्तरसमभिव्याहारं विधिरपेक्षते, तत्र प्रत्ययसमभिव्याहारं नापेक्षत इति किमेतत् ? न चोभयोद्देशे प्रत्येकं वाक्यसमाप्तेर्वाक्यभेद इति वाच्यम् । उद्देश्यभेदे हि वाक्यभेदो भवति । इह त्वपेक्षावशात् "अष्टवर्षं ब्राह्मणमुपनयीत" इतिवद्विशिष्टोद्देशान्न वाक्यभेदः । तेन यथा "दशापवित्रेण" इत्यत्रोपादेयगतैकत्वविवक्षा, तथा ग्रहमित्यत्रैकस्यैव ग्रहस्य श्रुतिसंयोगादुद्देश्यमपि ग्रहादिकमेकत्वयुक्तमेव विवक्षितत्वेन सम्मार्जनीयमिति । एवं प्राप्तेऽभिधीयते—

## सर्वेषां वा लक्षणत्वादविशिष्टं हि लक्षणम् ॥ ३. १. १४ ॥

( सिद्धान्तः )

अयमभिप्रायः—भवेदेवं यदि प्रतीतमात्रं विधिरुद्देश्यत्वेन विवक्ष्येत । तथाहि—विधेयारोपितव्यापारो विधिर्निरुद्देश्यविधानासम्भवादुद्देश्यमपेक्षते । उद्देश्यञ्च द्विविधम्—प्राप्तमप्राप्तञ्च ।

यत्राप्राप्तमुद्देश्यम्, तत्र यथाशब्दमुद्देश्यस्वीकारात्प्रतीतविशेषण-परित्यागे कारणाभावेन विध्याकाङ्क्षाया विद्यमानत्वाद्भवतु नाम विशेषणविवक्षा। यथा—"अष्टवर्षं ब्राह्मणमुपनयीत" "अग्नीनादधीत" "यूपं छिनत्ति" इत्यादिषु प्राप्तोद्देशेऽपि। यत्र विशेषण-विवक्षामन्तरेणोद्देश्यत्वमेव न सम्भवति, यथा "यस्योभयं हवि-रार्त्तिमार्च्छेत्" इत्यत्रार्त्तिगमनस्य निमित्तस्य हविषा विशेषणम्। यत्र चानन्यगतिशब्दश्च न सप्तदशारत्निताविधानमपेक्षते वाज-पेयस्येत्यनुवादासम्भवात् वाजपेये, तत्रापि सत्यां विध्याकाङ्क्षायां भवतु नामोद्देश्यगतविशेषणविवक्षा।

न चैवं सति 'यस्योभयं हविरार्त्तिम्" इत्यत्राप्युभयत्वविव-क्षाप्रसङ्गात् 'प्रथमं वा नियम्येत' (जै. सू., ११. १. ४२.) इत्यनेन न्यायेनाग्नेयहविरार्त्तिनिमित्तत्वक्रमापनोदार्थत्वेनैवाप्रयोजनत्वेनानन्य-गतिकत्वाभावात् विध्याकाङ्क्षानिवृत्तेः न केवलमुद्देश्यविशेषणम्। उपादेयविशेषणमपि विध्याकाङ्क्षाभावादविवक्षितमेव। यथा—"सत्रादुदवसाय पृष्ठशमनीयेन यजेरन्' इत्यत्र। अत्र हि यद्यपि प्रत्ययेनोपादेयकर्तृगतमेव बहुत्वमिति तथापि प्रकृत्यर्थपर्यालोचनेन विध्यपेक्षितम्। तथाहि—"सत्रादुदवसाय यजेरन्' इति क्त्वाप्र-त्ययेनोदवसानसमानकर्तृकत्वं यागस्य प्रतिपादितम्। उदवसानस्य च क्रियाविरामरूपस्य प्रत्येकमेव समवायात् प्रत्येकमेवोदवसानकर्तृ-

कत्वम् । तथा च सति समानकर्त्तृत्वप्रतिपादकेन क्त्वाप्रत्ययेन यागेऽप्येकैकश एव कर्त्तृत्वप्रतिपादनात्तद्विरोधे प्रत्ययप्रतिपादितमपि कर्त्तृबहुत्वं विध्याकाङ्क्षितमविवक्षितं भवति । किन्तु प्रचयशिष्टकर्त्तृबहुत्वं यथाप्राप्तं प्रत्ययेनोच्यत इति । तेन सर्वत्र विधिविवक्षायां विध्याकाङ्क्षा कारणम्, अविवक्षायाश्च न विधानाकाङ्क्षेति सिद्धम्, न तूपादेयगतत्वमुद्देश्यगतत्वञ्चेति । तदत्र "ग्रहं सम्मार्ष्टि" इत्यादिषु न किञ्चिद्विवक्षाकारणमस्ति । न तावदप्राप्तोद्देष्टुः, "ग्रहैर्जुहोति" इत्यादिना ग्रहादीनां कार्यान्तरसाधनतया प्राप्तत्वात् । नाप्येकत्वं विना उद्देश्यत्वापर्यवसानं, ग्रहमात्रस्यैवोद्देश्यत्वसम्भवात् । नाप्येकत्वस्यानन्यगतिशब्दोपादानम्, कर्मत्वप्रतिपादनात् कर्मणि द्वितीयाविभक्तेरुपात्तत्वात् । तत्र च नान्तरीयकतया प्रतीयमानमप्येकत्वमविवक्षामापादयितुमलम् । तेन ग्रहमात्रमेव पूर्वप्राप्तं कार्योपयुक्तमुद्देश्यमनूद्य सम्मार्गो विधातव्यः । अनुवादस्य च यथाप्राप्तविषयत्वात् दशानामेव ग्रहाणाम् । कार्योपयुक्तानां तुल्यप्राप्तेरेकत्वस्य चोक्तन्यायेन विवक्षाकारणाभावात्सम्मार्गाख्यः संस्कारो विधीयमानो दशभिरेव ग्रहैरविशेषात्सम्बध्यत इति । तदुक्तम्—

व्यक्तीरुद्दिश्य यत्कर्म स्वजात्याद्युपलक्षिताः ।
विहितं गुणभावेन तत्सर्वार्थं प्रतीयते ॥ इति ॥

(तं. वा., पृ. ७०५)

उपादेयस्य तु कार्यसाधनतया प्रागनवगतस्य शब्दैकवेद्यत्वाद्यथाशब्दोपादानमेव विधिविषयत्वमौत्सर्गिकम्। न तु "पशुना यजेत" इत्यत्र पृष्ठशमनीयवत्प्रत्ययार्थावरोधकारणमस्ति। तेनैकत्वविशिष्टस्यैव पशोः करणत्वेन शब्दोपात्तत्वात्, तथाभूतस्यैव विधिविषयत्वमिति वैषम्यम्।

यत्तु कार्योपयोगित्वेनावगतानामनुवादे चमसानामपि सम्मार्गप्रसङ्ग इत्युक्तम्, तच्चमसाधिकरण एव निरसनीयम्। यत्तु ग्रहस्यापि सम्मार्गसम्बन्धेनाप्राप्तत्वादप्राप्तोद्देश एवेति विशेषणविवक्षा। अथ "ग्रहैर्जुहोति" इति वाक्यान्तरप्राप्तत्वान्नाप्राप्तत्वम्, तर्हि ब्राह्मणस्यापि लोकप्राप्तत्वाद्विशेषणाविवक्षेत्युक्तम्। तदयुक्तम्; न हि विधेयभूतक्रियासम्बन्धेन प्राप्तिरप्राप्तिर्वा अत्र विवक्षायामविवक्षायां वा कारणम्, किन्तु यत्क्रियाङ्गत्वेन संस्कारस्य विधानं तत्क्रियायामुद्देश्यस्य प्राप्त्यप्राप्ती अविवक्षादौ कारणम्। इह च ज्योतिष्टोमभावनाङ्गत्वेन सम्मार्गरूपः संस्कारो विधातव्यः। तस्याश्च ज्योतिष्टोमभावनायामुद्देश्यभूतस्य ग्रहस्य "ग्रहैर्जुहोति" इति वाक्यान्तरेण प्राप्तत्वाद्भवति प्राप्तोद्देशः। "अष्टवर्षं ब्राह्मणमुपनयीत" इत्यत्र तूपनयनलक्षणस्य संस्कारस्याध्ययनाङ्गतया विधानात् तस्यां चाध्ययनभावनायामुद्देश्यभूतस्य ब्राह्मणस्यैवोपनयनात्प्रागप्राप्तत्वात् भवत्यप्राप्तोद्देशः। तेनात्र विशिष्टस्यैवोद्देश्य-

त्वेन विध्यपेक्षितत्वान्न वाक्यभेदः। ग्रहाणान्तु ज्योतिष्टोमभावनाङ्गत्वेनान्यत एव "ग्रहैर्जुहोति" इति प्राप्तत्वात् "ग्रहं सम्मार्ष्टि" इत्यत्र ग्रहोद्देशेनैव विधेयारोपितव्यापारस्य विधेरुद्देश्याकांक्षानिवृत्तेः पुनरेकत्वोद्देशेनापि सम्मार्गविधाने विध्यावृत्तिलक्षणस्तावदेको वाक्यभेदः। तथैकत्वस्य केवलस्योद्देष्टुमशक्यत्वात्तदुद्देशेन सम्मार्गविधानार्थं पुनरपि ग्रहपदमावर्त्तनीयमिति पदावृत्तिलक्षणोऽप्यपरो वाक्यभेद इति। तदुक्तम्—

ग्रहैकत्वे यदोद्दिश्य सम्मार्ग उपदिश्यते।
एकैकस्मिन्समाप्येते क्रियावक्ये तदानयोः॥ इति।

(तं. वा., पृ. ७०७)

तथाच सत्यध्ययनविध्यध्यापितवाक्योचितसमाम्नायान्यत्वेन पौरुषेयत्वादप्रामाण्यप्रसङ्गः। तदुक्तम्—

पुनरुच्चार्यमाणश्च समाम्नायाद्बहिः स्थितः।
प्रत्ययः पौरुषेयत्वादप्रामाण्यं प्रसज्यते॥

(तं. वा., पृ. ७०८)

किञ्च विशेषणत्वेन विवक्ष्यमाणमप्येकत्वं किं स्वायोगव्यवच्छेदेन ग्रहविशेषणम्? सजातीयान्ययोगव्यवच्छेदेन वा? यदि स्वायोगव्यवच्छेदेनं (१) सजातीयान्ययोगव्यवच्छेदेन तथोद्देश्यत्वेन दशानामेव ग्रहाणां सम्मार्गप्राप्तेरेकत्वविशेषणेनेतरव्यावृत्तौ दुर्वारः

---

१. अत्र ग्रन्थपात इति प्रतिभाति।

परिसंख्यादोषप्रसङ्गः। ननु 'लिङ्गविशेषनिर्देशात् पुंयुक्तमैतिशायनः' (जै.सू., ६.१.६.) इत्यत्रैवोद्दिश्यमानविशेषणाविवक्षाया निराकरिष्यमाणत्वाद्व्यर्थमिदमधिकरणम्। मैवम्; न हि तत्रोद्दिश्यमानविशेषणस्याविवक्षा प्रतिपाद्यते। अत्रैव प्रतिपादितत्वात्, किन्तूद्दिश्यमानविशेषणत्वमेव। तथाहि—"स्वर्गकामो यजेत" इत्यत्रैकवचनान्न स्वर्गकामपदावगतमेकत्वं चेद्विवक्षितम्, तेन नैतदुद्देश्यार्थं पदम्। किन्तूपादेयार्थमेव। तेनोपादेयार्थगतत्वात्संख्येव लिङ्गमपि विवक्षितव्यमिति पूर्वपक्षोत्थानान्नियमेन स्वर्गकामपदस्योद्दिश्यमानार्थत्वमेव प्रतिपादयिष्यते। संख्यायास्तु न स्वर्गकामपदोपात्तत्वेन, किन्तूपादेयकर्तृगतत्वेनाख्याताभिधानात्। अतो नास्य तेन गतार्थत्वमिति।

प्रयोजनम्—पक्षोक्तम्। सूत्रन्तु—सर्वेषां ग्रहादीनां सम्मार्गादिकर्तव्यम्, ग्रहत्वादिमात्रस्यैव लक्षणत्वादविशिष्टं हि सर्वेषां ग्रहत्वादि साधारणमित्यर्थः॥

इति सप्तमं ग्रहैकत्वाधिकरणम्॥ ७॥

## अथाष्टमं चमसाधिकरणम्

### संस्काराद्वा गुणानामव्यवस्था स्यात् ॥ ३. १. १६ ॥

( विषयसंशयौ )

अस्ति ज्योतिष्टोमः । तत्र श्रूयते—"दशापवित्रेण ग्रहं सम्मार्ष्टि" इति । तत्रैषोऽर्थः समधिगतः—सर्वे ग्रहाः सम्मार्जनीया इति । इदमिदानीं सन्दिह्यते—किं चमसा अपि सम्मार्ष्टव्याः ? उत न ? इति । उद्देश्यविशेषणस्यैकत्वादेरविवक्षायां प्रतिपादितायामिदानीं किमुद्देश्यगतं ग्रहत्वमप्यविवक्षितं विवक्षितं वेति निरूप्यते ।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षिणोऽभिसन्धिः—ग्रहस्वरूपसम्बन्धिसम्मार्गसंस्कारविधिरानर्थक्यादपूर्वीयरूपे वक्तव्यः । न चात्र व्रीहिष्विवावघातस्य व्यवस्थाकरणमपूर्वभेदः समस्ति । तेन ज्योतिष्टोमापूर्वीयरूप एव सम्मार्गविधिर्वक्तव्यः । तच्च स्वरूपं ग्रहचमसयोरविशिष्टमिति चमसानामपि सम्मार्गः कर्तव्यः । ननु व्रीहीणामिवाग्नेयापूर्वं ग्रहाणामपि स्वसाध्यापूर्वमस्त्येव । तेनान्तरङ्गलक्षणाबलेन स्वापूर्वलक्षणयैव व्यवस्थोपपत्तेः कथं चमससम्बन्धोऽपि सम्मार्गस्य । उच्यते—उत्पत्त्यपूर्वभेदे ह्यन्तरङ्गलक्षणया धर्मव्यवस्था भवति ।

तेन व्रीह्यादिष्ववघातादीनां भवतु व्यवस्था । इह तु "सोमेन यजेत" इत्युत्पत्तेरेकत्वादेकैवोत्पत्तिः । एकमेव फलापूर्वमपि । तत्साधनत्वञ्च सोमरसाधारत्वरूपं ग्रहचमससाधारणमेव । तेन यथा हविःप्रकृतिद्रव्यसाधनभावाविशेषेण व्रीहिषु विधीयमानोऽवघातादिर्यवेष्वपि सम्बध्यते, तथा सोमरसाधाररूपसाधनत्वाविशेषाद्ग्रहे विधीयमानः सम्मार्गश्चमसेऽपि सम्बध्यते । न च वाच्यम्— "पयसा मैत्रावरुणं श्रीणाति" इत्यत्र यथा अपूर्वमात्रव्यवस्थितत्वं तथा सम्मार्गस्य भविष्यति । एतस्मि·······त्वेतदधिकरणसिद्धान्ते तत्र व्यवस्था भविष्यति । तेन गुणानां ग्रहचमसयोरव्यवस्था सोमरसाधारमात्रसंस्कारत्वादिति । एवं प्राप्तेऽभिधीयते—

व्यवस्था वार्थस्य श्रुतिसंयोगात् तस्य शब्दप्रमाणत्वात् ॥ ३. १. १७. ॥

( सिद्धान्तः )

अयमभिप्रायः—भवेदेवं यदि ग्रहचमसयोरपूर्वे भेदो न भवेत् । तथाहि—यद्यपि "सोमेन यजेत" इत्येक एव सोमयागस्सकृदुत्पन्नः, तथापि तद्देवतोद्देशविशिष्टग्रहणभेदाद्ग्रहचमसाभ्यामभ्यस्यमानोऽसौ स्वापूर्वसाधनम् । ग्रहचमसाभ्यासयोश्च क्षणिकत्वेन स्वरूपसाहित्याभावादपूर्वद्वारेणैव साहित्यम् । तेन साहित्यसिध्यर्थं कल्पितावान्तरापूर्वद्वारेणैवावघातादिव्यवस्थोपपत्तौ न

परमापूर्वप्रयुक्तत्वेन चमसेष्वपि सम्मार्गः । तच्चाभ्यासापूर्वं विभिन्नदेवतोद्देशविशिष्टग्रहणासाध्यत्वेन । 'न हि यत्समित्सम्बन्धेन साध्यते, तत्तनूनपात्सम्बन्धेन' इति न्यायेन विभिन्नमेवेति युक्ता धर्मव्यवस्था । तेन सोमरसाधारत्वाविशेषेऽपि ग्रहचमसयोरभ्यासापूर्वभेदस्य व्यवस्थितत्वान्न धर्मसङ्करः । व्रीहियवयोस्तु तदभावाद्युक्त एव धर्मसङ्कर इति ।

ननूत्पत्त्यपूर्वं हि संस्कारव्यवस्थापकं भवति । यथा—आग्नेयाद्यपूर्वमवघातस्य । उत्पत्त्यपूर्वसिद्ध्यर्थं कल्पनीयाभ्यासापूर्वस्य तु संस्कारव्यवस्थाहेतुत्वे "यद्यपि चतुरवत्ती यजमानः स्यात् पञ्चावत्तैव वपा कार्या" इत्यत्रापि वपासम्बन्धेन श्रुतस्य पञ्चावदानस्य वपाभ्यासापूर्वगृहीतत्वेन हृदयादिसम्बन्धो न स्यात् । अतश्च यथा तत्राग्नीषोमीयोत्पत्त्यपूर्वगृहीतत्वाच्छेदेन हृदयाद्येकादशावदेयसम्बन्धः, तथा अत्रापि सोमोत्पत्त्यपूर्वगृहीतत्वेन तदेकत्वाच्चमससम्बन्धोऽपि दुर्वार इति । न हि तत्र वपोद्देशेन पञ्चावत्तविशिष्टमवदानं विधीयते । 'यद्यपि चतुरवत्ती यजमानः' इत्यत्र यद्यपिशब्देनातिदेशप्राप्तावदानमनूद्यावदानान्तरविधाननिवृत्तिफलत्वात् । नापि वपाविशिष्टावदानोद्देशेन पञ्चावत्तत्वम्, उद्दिश्यमानविशेषणाविवक्षायां वाक्यभेदप्रसङ्गात् । नापि वपामात्रोद्देशेन पञ्चावत्तत्वम्, एकस्या वपायाः पञ्चत्वासम्भवात्, पञ्चावत्तहृदयगतावदानसम्ब-

न्धबाधप्रसङ्गाच्च । तेनातिदेशप्राप्तावदानमात्रोद्देशेन पञ्चत्वमात्रं विधीयते । वपापदं चैकदेशानुवादः । अतः सर्वाण्येव पश्वङ्गानि पञ्चावत्तानि कार्याणीत्यर्थः । अत्र तु ग्रहोद्देशेनैव सम्मार्गविधानसम्भवाद्वैषम्यमिति ।

प्रयोजनम्—पद्मोक्तम् । सूत्रन्तु—ग्रहेष्वेव सम्मार्गस्य व्यवस्था न चमससम्बन्धः । अर्थस्य ग्रहस्य ग्रहमिति श्रुत्या संयोगात्, तस्य च सम्मार्गसम्बन्धस्य शब्दप्रमाणकत्वादिति ॥

इत्यष्टमं चमसाधिकरणम् ॥ ८ ॥

अथ नवममानर्थक्यतदङ्गाधिकरणम्

आनर्थक्यात्तदङ्गेषु ॥ ३. १. १८ ॥

( विषयसंशयसङ्गतयः )

वाजपेये श्रूयते—"सप्तदशारत्निर्वाजपेयस्य यूपो भवति" इति । तत्र सन्देहः—किं सप्तदशारत्निता वाजपेयस्योर्द्ध्वपात्रेऽपि निविशते ? उत पशोर्यूपे निवशते ? इति । उद्देश्यद्वारेण संस्कारविनियोगगतं विशेषं निरूप्येदानीमुद्देश्यद्वारेणैव गुणविनियोगगतो विशेषो निरूप्यते ।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षिणोऽभिसन्धिः—सप्तदशारत्निता ह्यत्र विधानानन्तर्याद्वाजपेयेनैव सम्बध्यते, न तु व्यवहितश्रुतेन यूपेन। किञ्च प्रधानस्य खल्वङ्गसम्बन्धो भवति। प्रधानञ्च वाजपेयो न यूपः, नापि पशुयागः। तथा प्रकरणञ्च वाजपेयस्य, न पशुयागस्य। प्रकरणञ्चाङ्गविनियोगकम्। अपि च वाजपेयस्येति षष्ठीश्रुत्या वाजपेयसम्बन्धः सप्तदशारत्नितायाः प्रतीयते, वाक्येन यूपसम्बन्धः। श्रुतिश्च वाक्याद्बलीयसी। तेन सर्वथा वाजपेयसम्बन्ध एव सप्तदशारत्नितायाः, न पश्वङ्गयूपसम्बन्धः। तदुक्तम्—

आनन्तर्यात्प्रधानत्वात्तथा प्रकरणाच्छ्रुतेः।
वाजपेयेन सम्बन्धस्साक्षान्न पशुना सह॥ इति।

( तं. वा., पृ. ७२७ )

ननु "सप्तदशारत्निः" इत्यन्यपदार्थप्रधानबहुव्रीहिसमासोऽयं गुणविशिष्टद्रव्यवचनः। स चैकवाक्योपात्तेन यूपेनैव सामानाधिकरण्यात्सम्बन्धमर्हति, न वाजपेयकर्मणेति कथं वाजपेयेन सम्बध्यते? उच्यते—सत्यं गुणविशिष्टद्रव्यवचनोऽयम्, तथापि द्रव्यस्य प्राप्तत्वाल्लोहितोष्णीषन्यायेन गुणविधिरेवायम्। तत्रापि वाजपेये यूपाभावेन "वाजपेयस्य" इति षष्ठीविरोधान्न यूपेन सम्बध्यते, किन्तु वाजपेयस्येत्याक्षिप्तवाजपेयद्रव्यद्वारेण वाजपेये-

नैव। तच्च द्रव्यं न ग्रहचमसादि, किन्तु षोडशिनामधेयमूर्द्धपात्रम्। अतस्तस्यैवोर्द्धत्वेन खादिरत्वेन च यूपसादृश्याद्यूपशब्देनानुवाद-सम्भवात्तेन सामानाधिकरण्येनायं यूपशब्दो वृत्त्यन्तरेणोर्द्धपात्र-विषय एवेति। यदि तु सप्तदशारत्निपदं यूपेन सह यथाकथञ्चि-त्सम्बध्येत, तदा वाजपेये यूपाभावेन "वाजपेयस्य" इत्यनुवादास-म्भवाद्वाजपेयशब्देन यूपसम्बन्धी पशुयागो लक्षणीयः। तच्चायु-क्तम्; यतो 'गुणे त्वन्याय्यकल्पनैकदेशत्वात्' (जै. सू. ६.३.५.) इति न्यायेन यूपस्यैव वृत्त्यन्तराश्रयणं युक्तम्, न तु प्रधानयागाभिधायिनो वाजपेयशब्दस्य। किञ्च विरोधेन हि लक्षणा भवति। न च प्रथमोच्चारितवाजपेयशब्दसमये विरोधोऽस्ति। अस्ति तु यूपो-च्चारणसमये। तेन तत्रैव लक्षणा युक्ता। यथा "ये यजमानास्त ऋत्विज" इत्यत्र न प्रथमोच्चरितं लक्षणावृत्तम्। किन्त्व-नन्तरोच्चरितमृत्विक्पदम्, तत्रैव विरोधदर्शनात्। तेनोर्द्धपात्र एव सप्तदशारत्निता निविशत इति। एवं प्राप्ते—

(सिद्धान्तः)

अभिधीयते—भवेदेवं यदि सप्तदशारत्निताव्यतिरेकेण यूपशब्दोऽर्थवान् भवेत्। न चोर्द्धपात्रलक्षणायास्यार्थवत्वम्, लक्षणाकारणाभावात्। द्वेधा हि शब्दस्य मुख्यार्थपरित्यागेना-न्यपरत्वं भवति—विरुद्धपदसामानाधिकरण्याद्वा, यथा 'अग्नि-

र्माणवकः' इति । वैयधिकरण्येऽप्यनन्यथासम्भवेन वा, यथा गङ्गायां घोषो वसतीति । न चात्र यूपपदस्योर्द्ध्वपात्रपदसामानाधिकरण्यम्, नापि वाजपेयस्येति षष्ठीप्रतिपादितो वाजपेयसम्बन्धो यूपस्यानन्यथासिद्धः । न ह्यङ्गाङ्गिसम्बन्धमेवैकं षष्ठी ब्रवीति । किन्तर्हि ? सम्बन्धमात्रम् । तच्चाङ्गाङ्गित्वेनोपकारकतया मुख्यस्यैव यूपस्यास्तीति किं लक्षणया ?

तदुक्तम्—

अगत्या लक्षणावृत्तिः समभिव्याहृतैर्भवेत् ।
न चोर्द्ध्वपात्रसम्बन्धी यूपशब्दः प्रतीयते ॥ इति ।

( तं. वा., पृ. ७२८ )

यच्चानन्तर्यं वाजपेयस्य सप्तदशारत्नितासम्बन्धार्थमुक्तम्, तदानन्तर्यं यूपेऽप्यविशिष्टम् । यदपि प्रधानत्वं षष्ठीश्रुतियोगित्वञ्च वाजपेयस्य परेण सम्बन्धनिमित्तमुक्तम्, तदुपकारकभूतयूपशब्देऽप्यविरुद्धमेव । तेनायं विशेषः—पूर्वपक्षे निर्निमित्तमेव यूपशब्दो लक्षणावृत्तोऽभ्युपेतव्यः । सिद्धान्ते तु सर्वमेव पदं मुख्यार्थमिति । न चैवं सति वाजपेयविशिष्टयूपानुवादेन सप्तदशारत्निताविधाने विशिष्टानुवादाद्वाक्यभेदः, यूपमात्रोद्देशेन तद्विधाने यूपवद्यागमात्रसम्बन्ध इति वाच्यम् । यत उद्दिष्टविशेषणविवक्षायां हि वाक्यभेदो भवति, न तु विशिष्टोद्देशे । इह तु यदि वाजपे-

योद्देशेन सप्तदशारत्निता विधीयते, तदा वाजपेयस्येत्युद्देशापर्यवसानादार्त्तेरिव हविषा यूपेन विशेषणम्। अथ यूपोद्देशेन, तदा वाजपेयस्येत्यनन्यगतिशब्दोपादानाद्वाजपेयेनैव विशेषणम्। न हि यूपमात्रोद्देशेन सप्तदशारत्निताविधिस्सम्भवति। तेन विशिष्टोद्देशेनात्र वाक्यभेद इति।

इदन्त्विह वक्तव्यम्—स्वरूपे कार्ये च वोपयुक्तमङ्गं भवति। तत्र यूपस्य प्रकृतौ विज्ञातोत्पत्तिप्रकारत्वान्न तत्स्वरूपे सप्तदशारत्नितोपयुज्यते। नापि पशुनियोजनरूपे तत्कार्ये, तस्य सप्तदशारत्निताव्यतिरेकेण प्रकृतपरिमाणेनैव सिद्धेः। तेनापूर्वोपयोगिनी सा भवन्ती वाजपेयापूर्वोपयोगिनी पश्वपूर्वोपयोगिनी वा। तत्र पश्वपूर्वोपयोगिनीति केचित्। नेदं युक्तम्; नेह पशुयागीयत्वपुरस्कारेण यूपे सप्तदशारत्निता विधीयते, किन्तु "वाजपेयस्य" इति श्रुतिर्वाजपेयविशेषिते यूपे वाजपेययागीयत्वपुरस्कारेणैव। तेन वाजपेयापूर्वप्रयुक्तैव सप्तदशारत्निता नाश्रुतपशुयागापूर्वप्रयुक्ता। अतो वाजपेयाङ्गमेव। न च वाजपेयानङ्गत्वाद्यूपस्य न तद्द्वारेण वाजपेयङ्गत्वमिति वाच्यम्। यतोऽनुपकारिणि हि स्थितो नोपकारीति न तदर्थ इति। तेन यथानङ्गभूतवत्साश्रितस्य सान्नाय्याङ्गत्वम्, तथा सप्तदशारत्नितायाः अपीति नानुपपन्नं किञ्चित्।

प्रयोजनम्—पत्रोक्तम्। सूत्रन्तु—प्रधाने वाजपेये सान्नाय्यूपा-

भावादानर्थक्यादिदं वचनम् यस्तदङ्गेषु पशुयागेषु यूपस्तत्रैव परिमाणं विदधातीत्यर्थः ॥

इति नवममानर्थक्यतदङ्गाधिकरणम् ॥ ६ ॥

अथ दशमभिक्रमणाधिकरणम् ।

कर्तृगुणे तु कर्मासमवायाद्वाक्यभेदः स्यात् ॥३.१.१६॥

( विषयसंशयसङ्गतयः )

दर्शपूर्णमासयोः प्रयाजवाक्ये श्रूयते—"अभिक्रामं जुहोत्यभिजित्यै" इति । तत्र सन्देहः—किं प्रयाजेष्वेवाभिक्रमणम् ? उत कृत्स्ने प्रकरणे ? इति । संस्कारद्रव्यगुणानां विनियोगं निरूप्येदानीं यत्कर्मसम्बन्धित्वेन श्रूयमाणमर्थात्संस्कारत्वं प्रतिपद्यते, तत् प्रसङ्गान्निरूप्यते ।

( भाष्यकारमतेन पूर्वपक्षः )

अत्र भाष्यकारो वाक्यभेदेन पूर्वपक्षं कृत्वा एकवाक्यत्वेन सिद्धान्तितवान् । अयञ्च तस्याभिसन्धिः—अभिक्राममिति णमुलयं क्त्वाप्रत्ययसमानार्थः । अभिक्रम्याभिक्रम्य जुहोतीति । अत्र चाभिक्रमणस्य होमार्थत्वं प्रतीयते । न च क्रियायाः क्रियार्थत्वममूर्त्तत्वात्सम्भवति आचमनादेरिव । यत्तु क्रियायां

कर्तृद्वारेण तत्प्रयोजनत्वेन तदर्थम्। न चैकस्मिन्वाक्ये होमं प्रति गुणत्वेनाक्षिप्तस्य कर्तुरभिक्रमणं प्रति प्राधान्येनान्वयो भवितुमर्हति, वाक्यभेदप्रसङ्गात्। तेन जुहोतिपदादाहत्याभिक्रमणं क्रियार्थेन प्रकरणेन गृहीतं सत्कर्तृद्वारेण प्राकरणिकसकलकर्मार्थम्। न चात्रापि वाक्यभेदो दोषाय, वैरूप्यलक्षणवाक्यभेदस्य पौरुषयत्वापादकत्वेन विभागलक्षणवाक्यभेदस्यानतिदोषत्वादिति पूर्वपक्षः।

( भाष्यकारमतेन सिद्धान्तः )

सिद्धान्तस्तु—स्यादेतदेवं यद्यनेनैव वाक्येनाभिक्रमणस्य कर्तृसम्बन्धो विधीयते। किन्त्वरुणैकहायनीन्यायेनोक्तहोमान्वयिनोः कर्त्रभिक्रमणयोरन्योन्यमुपकार्योपकारकतयान्वयः। शक्नोति चाहवनीयसन्निधापनेनाभिक्रमणं कर्तुरुपकर्तुम्। अपेक्षितश्च स्वकर्तुराहवनीयदेशसम्बन्धः। तेन होमोद्देशेन विधीयमानमभिक्रमणं सन्निधिवशात्प्रयाजाङ्गमेवेति।

( वार्तिककारमतोपक्रमः )

तदयुक्तम्; न हि धातुसम्बन्धविहितस्य णमुल्प्रत्ययस्य समभिव्याहृतजुहोतिपरित्यागेन प्रयोगः सम्भवति, असाधुत्वप्रसङ्गात्। किञ्च विभिन्नस्याप्यस्य कर्तृसम्बन्धो वा ? धातुसम्बन्ध एव वा ? न तावत्कर्तृसम्बन्धः, तत्सम्बन्धिणमुल्प्रत्ययस्य धातु-

सम्बन्धानुशासनविरोधात् । नापि धातुसम्बन्धः, तथा सति समभिव्याहृतजुहोतिपरित्यागकारणाभावात् । तेन पूर्वपक्षस्ताव-दनुपपन्नः । तथा सिद्धान्तोऽपि नोपपद्यते । न हि प्रकरणात्स-र्वार्थस्याभिक्रमणस्य सन्निधौ प्रयाजार्थत्वं सम्भवति, प्रकरणा-त्सन्निधेर्दुर्बलत्वात् । अथ भवतु सन्निधेरस्य प्रयाजार्थत्वं, तथापि यस्यैव प्रयाजस्यानन्तरं श्रूयते तस्यैवाभिक्रमणमङ्गं स्यान्न तु सकलप्रयाजानाम् । किञ्चैवं सति राजसूयप्रकरणगृहीतस्य विदेवनादेरपि सन्निधिविशेषादभिषेचनीयाङ्गत्वं स्यात् । अतो यत्किञ्चिदेतदिति यथावार्त्तिकमेकवाक्यत्वापरित्यागेनाधिकरणं वर्णनीयम् ।

( वार्तिककारमतेन पूर्वपक्षः )

अत्रायं पूर्वपक्षिणोऽभिसन्धिः—दर्शपूर्णमासप्रकरणे "अभि-क्रामं जुहोति" इति श्रूयते । न चात्र वाक्यकृतः कश्चिद्विशेषः प्रतीयते, येन दीक्षणीयावाङ्नियमवद्विशेषसम्बन्धो भवेत् । न च प्रयाजसन्निधिरेव नियामक इति वाच्यम् । प्रकरणात्सन्निधेर्दुर्बल-त्वात् । 'एकस्य सन्निधेरविशेषितो हेतुः' इति न्यायात्सर्वहोमार्थ-त्वमेवाभिक्रमणस्य । अथोच्येत—मा नाम भूत्सन्निधानात्प्रत्यया-र्थत्वम्, प्रकरणात्तु भविष्यति । तथाहि—यथा शास्त्रत्वाविशेषेऽपि सामान्यशास्त्रान्निरवकाशं विशेषशास्त्रं बलवत्, तथा महाप्रकरणा-

दपि अवान्तरप्रकरणमिति प्रयाजार्थत्वमेवाभिक्रमणस्येति । तदयुक्तम् ; अवान्तरप्रकरणस्यैवाभावात् । कर्तव्यस्य हीतिकर्तव्यताकाङ्क्षालक्षणं प्रकरणम् । इतिकर्त्तव्यताकाङ्क्षा च साध्यसम्बन्धोत्तरकालीना । प्रयाजाभिक्रमणभावनयोस्तु साध्याकाङ्क्षायां यथा प्रयाजभावना क्रतूपकारं साध्यतया गृह्णाति, तथाभिक्रमणभावनाप्यङ्गप्रधानहोमसम्बन्धद्वारेण क्रतूपकारकमेव साध्यतया गृह्णातीति क्रतूपकारसाध्यनिराकाङ्क्षत्वान्नाभिक्रमणं प्रयाजेतिकर्त्तव्यताकाङ्क्षया प्रयाजोपकारं साध्यतया ग्रहीतुमर्हतीति नाभिक्रमणस्यावान्तरप्रकरणेन प्रयाजार्थत्वम् । न च क्रतूपकारकसाध्यकल्पनातः प्रागेव प्रयाजभावनायाः सामान्येन साध्यसम्बन्धादितिकर्त्तव्यताकाङ्क्षायां सत्यामवान्तरप्रकरणेनाभिक्रमणसम्बन्धो भविष्यतीति वाच्यम् । यतो यत्नानुरूपो बलिर्भवति । तेन सामान्यसाध्यसम्बन्धस्य सामान्याक्षिप्तेतिकर्त्तव्यतानिराकांक्षत्वादभिक्रमणस्वरूपेतिकर्त्तव्यताविशेषासम्बन्धादिति । अतः कर्त्तृगुणोऽभिक्रमणो अवान्तरप्रकरणाभावेन प्रयाजकर्मासम्बन्धाद्वाक्यभेदः । न च प्रयाजवाक्येनैकवाक्यता स्यात्, किन्तु प्रकृतहोममात्रार्थतैवेति । एवं प्राप्तेऽभिधीयते—

साकाङ्क्षं त्वेकवाक्यं स्यादसमाप्तं हि पूर्वेण ॥३.१.२०॥

अयमभिप्रायः—भवेदेवं यद्यवान्तरप्रकरणेनाभिक्रमणं प्रयाजाङ्गं

न भवेत् । न चावान्तरप्रकरणं नास्ति, सन्दंशपाठस्यानन्यथासिद्धत्वात् । सन्निधिमात्रं हि यत्र कर्त्तृवचनस्थाने नान्तरीयकतया न विधिकारितं भवतु तत्र विशेषकम्, प्रयाजसन्दंशपाठस्त्वध्ययनविधिकारितत्वात्प्रयाजार्थत्वमन्तरेण होममात्रार्थत्वे नोपपद्यते । तस्यानन्यपठितस्यापि वाक्यबलेन होममात्रार्थत्वसिद्धेः । तदुक्तम्—

येनाभिक्रमणादूर्द्ध्वं प्रयाजानां गुणोऽपरः ।
विधास्यते प्रयाजानां तस्मात्प्रकरणास्तिता ॥ इति ।

(तं. वा., पृ. ७३१)

यत्तूक्तम्—प्रयाजाभिक्रमणभावनयोः साध्याकाङ्क्षायां युगपदेव साध्यत्वेन क्रतूपकारग्रहणात् प्रयाजभावनेतिकर्त्तव्यताकाङ्क्षायामभिक्रमणस्य (न) प्रयाजाङ्गत्वम् । अतः कथमवान्तरप्रकरणमिति । तदयुक्तम् ; प्रयाजसन्दंशाध्ययनवशेनैवोन्नीतप्रयाजाङ्गत्वस्याभिक्रमणस्य प्रधानसम्बन्धो भवति । अतः सिद्धं सन्दंशाभिव्यक्तप्रयाजावान्तरप्रकरणेनाभिक्रमणस्य प्रयाजार्थत्वमिति ।

अत्र प्रभाकरेणावान्तरप्रकरणनिरासार्थमिदमुक्तम्—कार्यं हि वाक्यार्थः । कार्यञ्च कृतिप्रधानम् । तस्य च विशेषः प्रकृतिविशेषादेव । कृतेश्च विशेषः—का कृतिः, कस्य कृतिरिति विषयनियोज्याभ्यामेव । स च विशेषो विषयसम्भवेऽपि नियोज्याभावेनाधिकारवाक्यं न कार्यान्तरप्रतिपादकं, किन्तु (?)

यौगिकश्च न कार्याभिधायिपदानां व्यक्तिवाचित्वाद्व्यक्तिवचनानाञ्च सन्निहितव्यक्तिगामित्वादधिकारवाक्यावगतकार्यानुवादेनैव प्रथममाविर्भवति । तदुक्तम्—'सन्निहिते विधौ विधिरवगम्यमानः स एव तावदगन्तुमुचितः' ( प्र. पं., पृ. २०४.चौ. सं. ) इति । तेनानभिव्यक्तेष्वेवाङ्गापूर्वेषु प्रथमं यत्किञ्चित्सन्निधिसमाम्नातमविरोधेन संयुक्तं तत्सर्वमेव प्रयोजनम् । प्रयोजनिना च निरूप्यैदमर्थ्यमात्रेण प्रधानविधिप्रत्ययेनानन्वितमभिधीयते । तदेव च ग्राहकग्रहणमित्युच्यते । पश्चात्स्वरूपसाहित्याभावेन क्षणिकानां सम्भूयप्रधानगतमहोपकारजननार्थमुत्पत्त्यपूर्वे कल्पिते कार्याभिधायिविधिशब्दसद्भावात्प्रयाजादिविषयकृतिसाध्यमेव कार्यं विधिशब्देनाभिधीयते । नियोज्यान्तराभावाच्च प्रधानापूर्वीयनियोज्यविशेषितैव सा कृतिरिति निश्चीयते । तस्यान्तु दशायामभिव्यक्तेऽप्यङ्गापूर्वे यदि नामाङ्गापूर्वाणामितिकर्त्तव्यताकाङ्क्षा स्वरसविधिसिद्धा भवेत् तर्हि ग्राह्याभावान्नावान्तरप्रकरणं ग्राहकम् । भवति चाङ्गापूर्वाणामितिकर्त्तव्यताकाङ्क्षा स्वरससिद्धा । तथा हि—न तावदपूर्वस्वरूप इतिकर्त्तव्यताकाङ्क्षा, किन्तु कार्यत्वरूपे । तच्च रूपं प्रधानकार्येण सहाङ्गानामेकमेव, तत्कृतेरेव तत्पर्यन्तत्वात् । न हि साध्यकृतिः साधनकृतिर्न भवति, यतो न हि स्वर्गकृतेरन्या यागकृतिः । तेनाधिकारापूर्वकृतेरेवाङ्गापूर्वपर्यन्तत्वा-

नाङ्गापूर्वाणां पृथगितिकर्त्तव्यताकाङ्क्षेति नाङ्गापूर्वाणामवान्तर-प्रकरणमिति ।

तदयुक्तम् ; भवतु तावत् सन्निहिते विधौ विधिरेव गम्यमानः स एव तावदवगन्तुमुचितः' इति समयपरिकल्पितं प्रथममवान्तरापूर्वा-नभिधानम् । पश्चादभिव्यक्तन्तु प्रयोजनापूर्वं किमित्यभिक्रमणग्राहकं न भवति ? प्रथममधिकारापूर्वगृहीतत्वेन ग्राह्याभावादिति चेत्— नैवम् ; वाङ्नियमस्यापि दीक्षणीयापूर्वेण ग्रहणप्रसङ्गात् । तत्रा-प्यनुवादाशङ्कया प्रथमं दीक्षणीयापूर्वानभिव्यक्तावधिकारापूर्वेण वाङ्नियमग्रहणस्य वाविशिष्टत्वात् । अथ तत्र न्यायसम्पादनोप-स्थितदीक्षणीयापूर्वेण सह वाक्यसम्भावितसम्बन्धविरोधाद्वाङ्नि-यमस्य चाधिकारापूर्वाग्रहणम्, अत्रापि न्यायसम्पादनेनोपस्थित-प्रयाजापूर्वेण सहावान्तरप्रकरणसम्भावितसम्बन्धविरोधादभिक्र-मणस्यापि न कार्यग्रहणम् । एवञ्च सति यथा तत्र दीक्षणीया-पूर्वस्य स्वारसिकेतिकर्त्तव्यताकाङ्क्षाविरहेऽपि समभिव्याहारवशा-दुत्थापिताकाङ्क्षस्य वाङ्नियमग्रहणम्, तथात्र प्रयाजापूर्वस्य स्वारसिकेतिकर्त्तव्यताकाङ्क्षाविरहेऽपि सन्दंशाम्नानवशादुत्थापिता-काङ्क्षयैवाभिक्रमणग्रहणं भविष्यतीति सर्वं समानं अन्यत्र स्वकपोलकल्पितमिथ्यासमयसिद्धान्ताभिनिवेशात् । अतः सिद्ध-मवान्तरप्रकरणेनाभिक्रमणस्य प्रयाजशेषत्वमिति ।

प्रयोजनम्—पक्षोक्तम् । सूत्रन्तु साकाङ्क्षं प्रयाजकर्म, तेन तद्वाक्यमभिक्रमणवाक्येन सहैकवाक्यं स्यात् । यतोऽभिक्रमणापूर्वेणाङ्गजातेनासमाप्तम् । ततश्चाभिक्रमणात्परस्तादपि श्रुत्यादिविहितप्रयाजानामङ्गत्वदर्शनादिति ॥

इति दशममभिक्रमणाधिकरणम् ॥ १० ॥

अथैकादशमुपवीताधिकरणम्

सन्दिग्धे तु व्यवायाद्वाक्यभेदः स्यात् ॥ ३.१.२१ ॥

( विषयसंशयसङ्गतयः )

दर्शपूर्णमासयोः सप्तमाष्टमयोर्ब्राह्मणानुवाकयोः सामधेनीकल्पाः । नवमे निविदः । दशमे काम्याः सामिधेनीकल्पाः—इदङ्कामस्यैतावतीरनुब्रूयादिदङ्कामस्यैतावतीरिति । एकादशे यज्ञोपवीतमाम्नातम्—"उपव्ययते देवलक्ष्ममेव तत्कुरुते" इति । तत्र सन्देहः—किं सामिधेनीरेवानुब्रुवतोपव्यातव्यम् ? उत प्रकरणे सर्वानेव पदार्थाननुतिष्ठतोपव्यातव्यम् ? इति । अवान्तरप्रकरणस्य स्थितस्येदानीं परिमाणं निरूप्यते ।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षिणोऽभिसन्धिः—उभयाकाङ्क्षालक्षणं प्रकर-

णम् । प्रधानस्य चेतिकर्त्तव्यताकाङ्क्षस्य सन्दंशेऽश्रुतानाञ्च साध्याकाङ्क्षिणामपि समकालमेव करणोपकारसाध्यसम्बन्धेनोभयाकाङ्क्षया अभावान्नावान्तरप्रकरणम् । यथा प्रयाजावान्तरसन्दंशगृहीतेनाप्ययोग्यतया न प्रधानोपकारः प्रथमं साध्यतया गृह्यते । यतो न ह्युपवीतं नामार्थान्तरम्, किन्तु वासोविन्यासरूपम् । तच्च परिस्पन्दोपयुक्तम् । न च प्रधानस्य परिस्पन्दरूपत्वम्, उद्देशत्यागरूपत्वात् । तद्यदि सन्निहितं परिस्पन्दसाकाङ्क्षं कर्म न स्यात्, तदयोग्येनापि प्रकृतप्रधानेन सम्बध्यते तदा आनर्थक्यतदङ्गन्यायेन परिस्पन्दरूपेष्वङ्गेषु सम्बध्येतापि । अस्ति त्ववान्तरप्रकरणाभिव्यक्तग्राहकीभावमवान्तरप्रकरणेनैव सन्निधापितं स्पन्दरूपत्वेन योग्यं सामधेन्यनुवचनमेव । तेन सन्दंशाभावेऽपि सन्दंशफलस्योभयाकाङ्क्षालक्षणस्य विद्यमानत्वात्सन्निहितमुपवीतमवान्तरप्रकरणेनानुवचनेनैव सम्बध्यते ।

नन्वग्निसमिन्धनप्रकाशनं दृष्टमेव सामधेनीकार्यम् । तत्र कथंभावाकाङ्क्षायां विवक्षितप्रयत्नताल्वादिसंयोगादि दृष्टमेव कथंभावाकाङ्क्षापूर्वकं सम्बध्यते । कथम्भावाकाङ्क्षा च प्रकरणम् । अतस्तदभावात्कथमवान्तरप्रकरणं सामिधेनीनामिति । उच्यते—सत्यमेवम्, तथापि अग्निसमिन्धनप्रकाशनस्यान्येनापि सिद्धेर्नियमादृष्टं कथं सिध्यतीत्यनुवर्तत एवाकाङ्क्षा । तस्मादस्त्यवान्तरप्रक-

रणम् । ननु तथापि निवित्पदव्यवायेन सामिधेनीप्रकरणस्योपवीतं यावदननुवृत्तेः कथमुपवीतस्यावान्तरप्रकरणसन्निधापितानुवचनसम्बन्धः ? उच्यते—न ह्यसम्बन्धमात्रं प्रकरणविच्छेदकं भवति । पूषाद्यनुमन्त्रणमन्त्राणामपि दर्शपूर्णमासप्रकरणविच्छेदकत्वप्रसङ्गात् । अथ तत्र परस्तादपि दर्शपूर्णमासानुवृत्तेरस्ति प्रकरणम्, तर्ह्यत्रापि सामिधेन्यनुवृत्तेर्नानुपपन्नम् । अथवा निविदामपि सन्दंशेन सामिधेन्यनुवचनाङ्गत्वमेव । तदुक्तम्—

अभितस्सामिधेनीनां कीर्त्तनात्प्रक्रिया स्थिता ।
परप्रकरणे पाठो निविदामथवाङ्गता ॥ इति ।

(तं. वा., पृ. ७३३)

तेनोपवीतस्य सामिधेन्यनुवचनाङ्गत्वात्सामिधेनीरेवानुब्रुवाणस्योपव्यानमिति । एवं प्राप्ते—

( सिद्धान्तः )

अभिधीयते—भवेदेवं यदि निवित्पदव्यवहितं सामिधेनीप्रकरणमनुवर्त्तते । तावद्धि प्रकरणमनुवर्तते, यावद्विनियोगार्हं पश्यति । असंयुक्तश्च प्रकरणेन विनियुज्यते । इह च निवित्पदानि "देवेद्धो मन्विद्ध" इत्येवमादीनि । सामिधेनी च लिङ्गेनाग्निसमिन्धने विनियुज्यन्ते । अतो न तावदेषां सामिधेन्यनुवचनाङ्गत्वम् । नापि पूषाद्यनुमन्त्रणवदनङ्गस्यापि

प्रकरणाविच्छेदकत्वम्। ततः परं सामिधेन्यनुवचनस्य श्रुत्यादिभिरङ्गान्तरविधानादर्शनात्। दर्शपूर्णमासयोरनङ्गानामपि पूषाद्यनुमन्त्रणमन्त्राणां परस्तादपि दर्शपूर्णमासाङ्गविधानदर्शनाद्भवतु प्रकरणाविच्छेदकत्वम्, सामिधेन्यनुवचनस्य श्रुत्यादिभिरङ्गान्तराविधानात् इह न तथेति वैषम्यम्। तदुक्तम्—

विच्छिन्ना सामिधेनीनां निविद्भिः प्रक्रिया यतः।
न हि काम्यैः पुनःकल्पैः सन्धातुं सा हि शक्यते॥ इति।

(तं. वा., पृ. ७३४)

ननु यदि विच्छिन्नं सामिधेनीप्रकरणम्, तदा दशमे ब्राह्मणानुवाके "एकविंशतिमनुब्रूयात् प्रतिष्ठाकामस्य" इत्यादीनां काम्यसामिधेनीकल्पानां प्रक्रियाश्रयाभावात्कथं गुणफलसम्बन्धविधानम्? अथ वाक्येनैवाश्रयो विधीयते, तदा विधेयसङ्ख्यायाः फलसम्बन्धकरणे आश्रयसम्बन्धकरणे च वाक्यं भिद्येतेति। उच्यते—स्यादेवम्, यद्येकविंशतिवाक्यादेर्गुणात्फलं ब्रूमः, किन्तु रेवतीवारवन्तीयवत्संख्याविशिष्टमनुवचनान्तरमेवैतत् फले विधीयते। तत्कथमित्याकाङ्क्षायामनुब्रूयादिति शब्दसामान्यात्संख्यासम्बन्धाच्च क्रत्वर्थसामिधेन्यनुवचनवदिति गम्यते। सामिधेनीनामन्येषाञ्च धर्माणामतिदेशात्प्राप्तिः।

ननूपकारपृष्ठभावेनातिदेशो गुणभूतानामेव भवति, तेषामेवोपकारकत्वात्। अत्र च द्वितीयाश्रुत्या सामिधेनीनां प्राधान्यमव-

गम्यते, अनुवचनस्यैव गुणभावः। अतः कथं प्रधानभूतानां सामिधेनीनामतिदेश इति। द्विरूपाश्च खलु सामिधेन्यः—अनुवचनं प्रति सामिधेनीप्रकाशनकार्यापेक्षया प्रधानभूताः, अनुवचनस्वरूपापेक्षया गुणभूताश्च। तत्र अग्निसमिन्धनप्रकाशकत्वात् तथाभूतमेव कार्यापेक्षया प्राधान्यं द्वितीयया प्रतिपाद्यते। अनुवचनस्वरूपसिध्यर्थं सामिधेनीनां गुणत्वमेव। "एकविंशतिमनुब्रूयात्प्रतिष्ठाकामस्य" इत्यत्र तु काम्यप्रयोगेऽनुवचनं स्वरूपसिध्यर्थमेवेतिकर्त्तव्यताकाङ्क्षया सामिधेन्यतिदेशान्नानुपपन्नम्। न च वाच्यम्—एवं सति दर्शपूर्णमासागृहीतत्वाद्दर्शपूर्णमासप्रयोगाद्बहिरेव काम्यानां प्रयोगस्स्यादिति। यतो दार्शपूर्णमासिकनिगदानामनूद्यमानत्वेन ह्यनुवचनत्वम्। तेन क्रतोर्बहिः प्रयोगेऽनुवचनत्वमेव न स्यात्। तदुक्तम्—

पश्चाद्यथोच्यमानोऽयमनुशब्दः प्रयुज्यते।
न तु क्रतुप्रयुक्तत्वात्स्वातन्त्र्ये सति लभ्यते॥ इति।

(तं. वा., पृ. ७३५)

न चैवं सति सन्निधानविशेषात्काम्यसामिधेन्यनुवचनाङ्गत्वमेवोपवीतस्यास्तु, कथं सर्वार्थत्वमिति वाच्यम्। यतोऽस्य विकृतित्वेनातिदिष्टप्राप्तप्राकृतधर्मनिराकाङ्क्षस्य प्रकरणात्सन्निधानाद्वा धर्मग्राहकत्वं वक्तव्यम्। सन्निधेश्च प्रकरणं बलीयः।

तदुक्तम्—

प्राकृतेन कथंभावे तदीये पूरिते सति ।

पश्चात्सन्निधिनाङ्गं स्यात्स च प्रकरणावरः ॥ इति ।

( तं. वा., पृ. ७३६ )

अतः सिद्धं महाप्रकरणेनोपवीतस्य सर्वार्थत्वमिति ।

प्रयोजनम्—पक्षोक्तम् । सूत्रन्तु—उपवीते सामिधेन्यर्थत्व-सर्वार्थत्वसन्देहे निवित्पदेन सामिधेन्यनुवचनसन्निधापकप्रकरणान्य-वायादुपवीतवाक्यस्य सामिधेन्यनुवचनवाक्याच्छेदः स्यादिति ॥

इत्येकादशमुपवीताधिकरणम् ॥११॥

## अथ द्वादशं वारणादीनां सर्वयज्ञार्थत्वाधिकरणम्

## गुणानाञ्च परार्थत्वादसम्बन्धः समत्वात्स्यात् ॥३.१.२२॥

( विषयसंशयसङ्गतयः )

अग्न्याधेये वारणादीनि पात्राण्यहोमार्थानि होमार्थानि च श्रूयन्ते "तस्माद्वारणो वै यज्ञावचरः स्यात् न त्वेतेन जुहुयात् । वैकङ्कतो यज्ञावचरस्स्याज्जुहुयादेवैतेन" इति । न च वारणवैकङ्क-तानां पात्राणामग्न्याधेयेन सम्बन्धः । कुतः ? यज्ञावचरवचनात् । यज्ञस्यैतानि पात्राणि वाक्येन प्रकरणं बाधित्वा भवन्ति । तत्रैष सन्देहः—वारणादीनि पात्राणि किं पवमानेष्टिषु निविशन्ते ?

उत दर्शपूर्णमासादिषु सर्वयज्ञेषु ? इति । प्रसङ्गागतं विचारद्वयं-परिसमाप्येदानीमानर्थक्यतदङ्गन्यायस्यापवादः प्रतिपाद्यते ।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षिणोऽभिप्रायः—"वारणो वै यज्ञावचरः" इत्याधानप्रकरणे यद्यपि वारणादीनि पात्राणि श्रूयन्ते, तथाप्याधानस्य साक्षादयज्ञरूपत्वाद्यज्ञावचर इति वाक्येन यज्ञसम्बन्धित्वेन प्रतीयमानान्यानर्थक्यतदङ्गन्यायेनाधानाङ्गभूतेषु पवमानेष्टिषु यज्ञरूपेषु निविशन्त इति । एवं प्राप्ते—

( सिद्धान्तः )

अभिधीयते—भवेदेवं यदि पवमानेष्टयोऽप्याधानाङ्गं भवेयुः । न त्वेवम्, किन्तु यथाधानं साक्षादग्न्यर्थं तथा पवमानेष्टयोऽपि । न च समप्रधानेष्वङ्गाङ्गिभावोऽस्ति, येनानर्थक्यतदङ्गन्यायो भवेत् । तस्माद्वाक्यबलेन सर्वयज्ञसम्बन्ध एव भवेद्वारणादिपात्राणामिति ।

प्रयोजनम्—पक्षोक्तम् । सूत्रन्तु—गुणानामग्निगुणानामाधानपवमानहविषां पारार्थ्यात्परस्परमसम्बन्धः स्यात्समत्वादिति ॥

तदेतद्यथाभाष्यमधिकरणं वार्त्तिककारपादा नानुमन्यन्ते । अयञ्च तेषामभिसन्धिः—"वाजपेयस्य यूपः" इत्यत्र सप्तदशारत्निताया: षष्ठ्या वाजपेयसम्बन्धावगमाद्युक्तमानर्थक्यतदङ्गन्यायविषयत्वम् । इह तु वारणादिपात्राणां विरोधिसंयुक्तानामहीन-

युक्तद्वादशोपसत्ताया इव प्रकरणेनाग्रहणाद्वाक्यबलेनोत्कर्षात्सकलयज्ञार्थत्वमेव युक्तम्। तेनाधानसम्बन्धस्यैवाज्ञातत्वात्सत्यप्याधानाङ्गत्वे, पवमानेष्टीनामानर्थक्यतदङ्गन्यायेन सन्निवेशासम्भवात्पूर्वपक्षस्तावदशोभनः। तथा पवमानेष्टीनां साक्षादग्न्यर्थत्वे प्रमाणाभावात् 'फलवत्सन्निधावफलं तदङ्गम्' इति न्यायेनाधानार्थत्वस्यैव व्यवस्थितत्वादनुत्कर्षात्सकलयज्ञार्थत्वसिद्धये समप्राधान्यसिद्धान्तोऽपि नोपपन्न इति।

अत्रैके समाधानमेवमभिदधति—ज्योतिष्टोमसन्निधिश्रुतानामप्युपसद्द्वादशत्वादीनामहीनादिसमभिव्याहृतानां सर्वथा सम्बन्धाभावाद्भवतूत्कर्षः, तदङ्गभूतानामप्यहीनादीनामभावात्। इह त्वाधानाङ्गभूतानां पवमानेष्टीनामेव विद्यमानत्वात्तत्सम्बन्धेनैव यज्ञावचरतोपपत्तेर्न वारणादीनां सर्वयज्ञार्थत्वम्। न च वाजपेयस्येतिवत् षष्ठ्यभावेनाधानसम्बन्धाभावान्नेमान्यानर्थक्यतदङ्गन्यायविषय इति वक्तव्यम्। यतो न हि तत्रापि षष्ठीबलेन सप्तदशारत्निताया वाजपेयसम्बन्धः। तथा सति वाजपेयसम्बन्धे यूपसम्बन्धे च विधीयमाने परिमाणस्य वाक्यभेदप्रसङ्गात्, किन्तु वाजपेयसन्निधिपाठादर्थप्राप्तमेव वाजपेयसम्बन्धमनुवदति षष्ठी। तथात्राप्याधानसन्निधिपाठ एव स्वार्थवत्त्वाय वारणादिपात्राणामप्याधानार्थत्वं प्रतिपादयिष्यतीति नानुपपन्नम्। न च पव-

मानेष्टीनां यागरूपाङ्गाभावाद्यागरूपाङ्गयुक्तस्य चाभिधेयत्वादयज्ञत्वम्, तथा च सति यज्ञावचरत्वेन श्रुतानां पात्राणामाधानवत्पवमानेष्टिसम्बन्धाभावादुत्कर्ष एव प्राप्नोतीति वाच्यम्। यत 'इष्टिषु दर्शपूर्णमासयोः' इति पवमानेष्टीनामपि दर्शपूर्णमासविकारत्वेनातिदिष्टप्रयाजाद्यङ्गप्राप्तेर्यज्ञत्वमेव।

न च पवमानेष्टीनामङ्गत्वादङ्गानाञ्चेतिकर्त्तव्यताकाङ्क्षाभावात्प्रयाजाद्यनतिदेश इति वाच्यम्। स्वारसिकाकाङ्क्षाभावेऽपि लिङ्गदर्शनोत्थापिताकाङ्क्षावशादेवातिदेशसिद्धेः। एवं ह्यरुणपराशरशाखाब्राह्मणे श्रूयतेऽनुवादसरूपम्—"ये दर्शपूर्णमासयोर्द्धर्माः, ते सर्वेष्टीनामग्नीषोमीयस्य च" इति। अत्र च सर्वेष्टिसम्बन्धेन दर्शपूर्णमासधर्मानुवादात्तदङ्गतेति। यथा पवमानेष्टीनामतिदेशेन दर्शपूर्णमासधर्मप्राप्तिरस्ति, तथा पवमानेष्टिष्वेव श्रूयते— "वृधन्वानाग्नेयः कार्यः पावकवान् सौम्यः" इति। अनेन चाग्नेयसौम्याज्यभागानुवादेन वृधन्वत्पावकवत्वविधानं सम्भवति, यद्यतिदेशेनात्राज्यभागप्राप्तिरस्ति। तदुभाभ्यामेव लिङ्गदर्शनाभ्यामाकाङ्क्षोत्थापनादतिदेशसिद्धेः पूर्वपक्षस्तावच्छोभनः।

तथा सिद्धान्तभङ्गोऽपि न सङ्गच्छते। आधानस्येव पवमानेष्टीनामपि साक्षादग्न्यर्थत्वात्। नन्वाधानस्यैव वाक्यसमधिगम्यम्। न तावत्पवमानेष्टीनामग्न्यर्थत्वं ग्राहकग्रहणेन वक्तव्यम्।

ग्राहकग्रहणाञ्च प्रयोजनप्रयोजनिभावेनाधिकारनियोगेनान्विताभिधानरूपम् । न चाग्निरधिकाररूपः । तेन ग्राहकग्रहणाभावात्कुतो निष्प्रमाणकं पवमानेष्टीनामग्न्यर्थत्वम् ? कुतस्तराञ्च साक्षात्त्वमिति । मैवम् ; प्रयोजनरूपं हि ग्राहकमिति व्युत्पत्तिः । अधिकारनियोगस्यापि ग्राहकत्वं नाधिकारयोगत्वेन, तच्चाग्नेरप्यविशिष्टम् । "यदाहवनीये जुहोति" इति होमसाधनत्वेन प्रयोजनरूपस्य तस्य द्वितीयावबोधितसाध्यरूपत्वात्, तेन "अग्नीन्" इति द्वितीयान्तमग्निपदमेव सन्निधिसमाम्नाताग्निः पवमानेष्टिभिरप्यन्वितं स्वार्थमभिधत्ते । प्रयाजादिभिरिव दर्शपूर्णमासाधिकारापूर्वं लिङ्शब्द इति । अथवा पवमानेष्ट्यपूर्वमेव स्वविषयानुष्ठानसिद्ध्यर्थं सन्निधिसमाम्नातार्थवत्वात्प्रयोजनवदग्न्यर्थत्वमेव स्वविषयस्याक्षिपतीति औपादानिकमेव तासामग्न्यर्थत्वमिति ।

न चैवं सत्युत्पत्तिशिष्टाधानावरोधात्फलवत्सन्निधिन्यायेन प्रयाजादिवदाधानाङ्गत्वमेवेति वाच्यम् । उपदेशातिदेशसम्प्रतिपत्त्या साक्षात्त्वस्यैव प्रतीयमानत्वात् । उपदेशदशायां हि ग्राहकग्रहणेन वा उपादानेन वा पवमानेष्टीनामग्निः साध्यभूत इत्यवगते किं प्रयाजादिवत्साधनाङ्गतया पारम्पर्येण ? आधानवदेव वा साक्षात् ? इति सन्देहे दर्शपूर्णमासविकृतित्वेनासां तदङ्गग्राहित्वात्, तत्र च "यदाहवनीये जुहोति" इति साक्षात्सम्बन्धावगतेः इहापि

होमरूपत्वादिदानीं साक्षात्सम्बन्धादाधानस्यैवाग्निसाध्यत्वात्। प्रयाजादीनां त्वतिदेशतोऽपि साक्षात्त्वानवगतेरुत्पत्तिशिष्टाग्नेयावरुद्धेऽधिकारापूर्वे भवतु 'फलवत्सान्निधावफलं तदङ्गम्' इति न्यायविषयत्वम्, न त्विह तथेति वैषम्यम्।

ननूपदेशेन बलवतातिदेशनिरपेक्षेण फलवत्सन्निधिन्यायेन प्रयाजादिवत् पारम्पर्यमसन्दिग्धमेव प्रथममवगतं, न तु सन्दिग्धम्। अतः कथमुपदेशविपरीतातिदेशप्रवृत्तिरिति। मैवम्; सर्वत्रैव वैकृतोपदेशस्यातिदेशसापेक्षस्यैव विशेषविषयत्वात्। अन्यथा "सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः" इत्यत्राप्युपदेशबलीयस्त्वेन सौर्ये शूद्रादिसाधारणब्रह्मवर्चसकामाधिकारप्रसङ्गः। अथ तत्रातिदिष्टदार्शपूर्णमासिकाहवनीयाद्यङ्गानुरोधेनाधिकारविशेषनिर्णयः, तथात्राप्यतिदेशप्राप्तसाक्षादग्निसम्बन्धानुरोधेन पवमानेष्टीनां साक्षादग्निसाध्यकत्वमेव निर्णीयत एवेति नानुपपन्नम्। न च वाच्यम्—भवतु सामान्योपदेशस्यातिदेशतो विशेषविषयत्वमविरोधात्, इह तूपदेशतः पवमानेष्टिं प्रति अग्नेः प्रधान्ये निरूपिते कथं तद्विरोधादिह गुणत्वेनातिदेशः? तदभावे च कथमुपदेशातिदेशसम्प्रतिपत्त्या साक्षात्त्वम्? इति। यतो ह्यत्राग्नेराधानपवमानेष्टिजन्यातिशयवतोऽतिदेशात्पवमानेष्टिगुणत्वं परेणाप्यभ्युपगम्यते, असम्भवादेव। किन्त्वाधानजन्यातिशयवत एव।

तथाचोक्तम्—

यदा त्वेता विधीयन्ते प्रकृतौ सन्ति नो तदा।
तस्मादाहितमात्रेऽग्नौ कर्त्तव्यास्सम्भवादिमाः॥ इति।

तथाभूतस्य चाग्नेः पवमानेष्टीनां होमरूपत्वेनाधिकरणकारकतया गुणत्वेऽपि पवमानेष्टिजन्यातिशयशालितया प्राधान्यमविरुद्धमेव। न हि भावनाया धात्वर्थनिष्पादकतया गुणत्वेऽपि फलभावनात्वेन प्राधान्यं विरुध्यते। पुरुषस्य वा यागं प्रति कर्त्तृत्वभोक्तृत्वाभ्यां गुणप्रधानत्वे विरुध्येते। अथवा भवतूपदेशलब्धप्राधान्यस्य गुणत्वविरोधः, तथाप्यसम्भवः। 'तुषारवत्तावत्सम्परिहीयताम्' इति न्यायेन विरोधिगुणपरित्यागेनापि साक्षात्त्वस्वीकारो नानुपपन्नः। न हि "ग्रहं सम्मार्ष्टि" इत्यत्रा सम्भवस्वीकारस्यैकत्वस्याविवक्षायां सम्भविनोऽपि कर्मत्वस्याविवक्षा युक्ता।

ननु प्राकृतपदार्थानां वैकृतापूर्वगुणत्वेनैवातिदेशः। अतथाभूतस्य च गुणत्वाभावे सत्यतिदेशस्याभावात्कथमतिदेशतः साक्षात्त्वमिति। नैवम्; भवेदेवं यदि प्रतिपदार्थनिरूपणेनातिदेशप्रवृत्तिः, किन्तु करणोपकारजनकपदार्थसम्बन्धिविषयोऽसौ। तत्र चावर्जनीयतया सोऽपि प्राप्त एव। तथाचाभाणकोऽप्यत्र लोकस्य दृश्यते। तेनातिदेशलब्धत्वेऽप्यसम्भविगुणत्वपरित्यागेन साक्षा-

त्स्वीकारो युक्त एवेति सिद्धं समप्राधान्यमाधानपवमानहविषामिति। न चैवं सति निरपेक्षविधिविहितत्वेनाधानपवमानहविषां विकल्प इति वक्तव्यम्। यतो निरपेक्षविधिविहितानां द्वेधा विकल्पो भवति—यथा प्रमाणान्तरावगतं प्रत्येककार्यजनकतया दृष्टार्थानां व्रीहियवानाम्, समुच्चयासम्भवेना दृष्टर्थानां वा यथा षोडशिग्रहणाग्रहणादीनाम्। तत्र न तावदत्र प्रमाणान्तरावगतं प्रत्येककार्यत्वम्, अदृष्टार्थत्वात्। नापि समुच्चयासम्भवोऽपि, एकाश्रयविधिनिषेधाभावात्। तेनात्र यूपधर्माणामिव तक्षणच्छेदनादीनामदृष्टार्थत्वाय निरपेक्षविधिविहितत्वेऽपि समुच्चय एवेति नानुपपन्नम्। तद्यज्ञसंयोगोऽग्निसन्निधियुक्तानां श्रुतानां वारणादिपात्राणामुत्कर्षमग्निसम्बन्धनिर्वाहानुसन्धाने तत्साधनीभूतस्याप्ययज्ञत्वात्साधनाङ्गपवमानेष्टिसम्बन्धेन पूर्वपक्षोक्तोत्कर्षविध्युत्पादनाय निराकरणीयम्। समप्राधान्ये तु अग्निसाधनीभूतपवमानेष्टिसम्बन्धेनैव सुतरामग्निसम्बन्धोपपत्तेः समप्राधान्यमेव हि तस्यैवेति (?) देवदानकल्पितभाष्यान्तरस्यैव भाषितम्। स खल्वेवमाह—अग्न्याधेये वारणादिपात्राणि श्रूयन्ते। तेनाधानसाध्यसंस्कारार्थत्वमेव पात्राणामवगम्यते, न त्वग्निमात्रार्थत्वम्। नापि पवमानेष्टिजन्यं संस्कारार्थत्वम्। न चाधानसम्बन्धे लाघवम्। तेनाधानाङ्गत्वनिरासः पवमानेष्टीनां वारणादिपात्रोत्कर्षसिद्धये युक्त एवेति न किञ्चिदनुपपन्नमिति।

अत्रोच्यते—यत्तावत्पूर्वपक्षभङ्गसमाधानार्थं सप्तदशत्ववैधर्म्यमुक्तम्, तद्वैधर्म्यमात्रं विशेषानापादकत्वात्। तथाहि—किमनेन वैधर्म्येण वारणादिपात्राणामानर्थक्यतदङ्गन्यायेन पवमानेष्टिनिवेशोऽभिमतः ? वाक्यवशेन वा ? न तावत्पूर्वः कल्पः, वाक्यावगतप्रधानसम्बन्धनिर्वाहाय खल्वङ्गावतरणमानर्थक्यतदङ्गन्यायेन। न चेह सप्तदशारत्निताया इव वारणादिपात्राणामाधानसम्बन्धप्रतिपादकं किञ्चिद्वाक्यमस्ति। न च वाक्येन यज्ञसंयोगिनां वारणादिपात्राणामयज्ञभूताधानसम्बन्धप्रतिपादकं प्रकरणं सम्भवति। 'असंयुक्तं प्रकरणादितिकर्त्तव्यतार्थित्वात्' इति प्रकरणस्य श्रुतिलिङ्गवाक्यासंयुक्तविषयत्वात्। वाक्येन तु संयुक्तस्यापि सन्निधानात्प्रधानापूर्वीयत्वे दीक्षणीयावाङ्नियमस्यापि प्रधानापूर्वीयत्वप्रसङ्गात्। तथा सति तस्याप्यानर्थक्यतदङ्गन्यायाविषयत्वापत्तेः न तावदानर्थक्यतदङ्गन्यायेनाङ्गनिवेशः। न च वाक्यबलेनैव वारणादिपात्राणां पवमानेष्टिनिवेशः, वाक्यस्य यज्ञपात्रसाधारणत्वात्। न च "व्रीहिभिर्यजेत" इतिवत्सन्निधानादपि यागविशेषावगमः, पवमानेष्टिसन्निधावश्रुतत्वात्। तदुक्तम्—'अग्न्याधेये श्रूयन्ते' इति।

न चाधानसन्निधानाध्ययनमेव प्रयोजनवत्त्वाय वारणादिपात्राणां तदङ्गभूतयज्ञरूपपवमानेष्टिसम्बन्धमापादयति। इतरथा निष्प्रयोजनस्तत्सन्निधिरूपेणानुवाद इति वाच्यम्। वैपरीत्यपरिच्छेदात्।

तथाहि—द्वेधा खल्वङ्गमात्रसम्बन्धो धर्माणां दृष्टः। सन्दंशेन वा, यथा—अभिक्रमणादयः प्रयाजस्य। अङ्गाभिधायकशब्दविशेषवशेन वा, यथा—दीक्षणीयादीनां वाङ्नियमादयः। तदत्र पात्राणां पवमानेष्टिमात्राङ्गत्वे यदेतत्सन्दंशानध्ययनं तदभिधायकविशेषशब्दानभिधानं वा तदनुपपन्नं, पात्राणामतत्सम्बन्धमेव प्रतिपादयति। आधानसन्निधिपाठस्तु सकलयज्ञसाधारणत्वेन यत्र कुत्रचित्पठनीयस्यानारभ्यवादे वा नास्ति अन्यप्रकरणपाठे वा कश्चिद्विशेषः। अन्यप्रकरणपाठेनोपसद्द्वादशत्वादीनां प्रकरणान्तरसम्बन्धस्य दृष्टत्वात्। न च तत्राङ्गेष्वप्यहीनाभावः कारणम्, उक्तन्यायेनाङ्गसद्भावासद्भावयोरकारणत्वात्। एतेन यदुक्तम्—वाजपेयेऽप्यनुवादिका षष्ठीति, तदपि निरस्तम्। षष्ठ्यभावे ह्यनेनैव न्यायेन विरोधिसंयुक्तायाः सप्तदशारत्नितायाः प्रकरणे वाजपेयसम्बन्धानवगमात् यूपाव्यभिचारोपस्थितसकलपशुयागसाधारणत्वादप्युत्कर्ष एव प्रसज्यते।

न चैवं सति वाजपेयसम्बन्धविधाने यूपसम्बन्धविधाने च वाक्यभेद इति वाच्यम्। सप्तदशारत्नितायाः यूपविशेषणतया वाजपेयापूर्वसम्बन्धमात्रज्ञापनात्। न च तथाप्युद्दिश्यमानविशेषणाविवक्षया वाक्यभेद इति वाच्यम्। यतो यत्रोद्दिष्टस्य विशेषणान्वयस्तत्रैव विशिष्टोद्देशेन वाक्यभेदः। यथा "यस्योभयं हवि-

रातिमाच्छेंत्' इत्यत्र । तदुक्तम्—'मृष्यामहे हविषा विशेषणम्' इति । तत्र यथा केवलार्त्तिगमनस्य यत्किञ्चिदाश्रयस्य नित्यत्वेन नैमित्तिकेष्टावुद्देश्यत्वासहत्वेन हविर्विशेषितस्यैवोद्देश्यत्वम्, तथा केवलस्य वाजपेयस्यापि सप्तदशारत्निरूपपरिमाणविशेषविधावुद्देश्यत्वासम्भवाद्यूपविशेषितस्यैवोद्देश्यत्वमिति । न चैवं सति सौर्यसन्निधिश्रुतस्य कृष्णलहोमस्यापि वाक्यबलेन सकलप्रयाजसम्बन्धः प्राप्नोतीति वाच्यम् । अनुवादानां सन्निहितगामित्वात् । प्रयाजानुवादेन विधीयमानोऽत्र कृष्णलहोमः प्रकृतिवत्पदसन्निधापितप्रयाजानुवादेन चरितार्थो न सकलप्रयाजोपसर्पणं सहते ।

न च वाच्यम्—प्रकृतिवच्छब्देन सौर्ययागसन्निधिरिव प्रयाजानां न कृष्णलहोमसन्निधिः । तेन यथात्राधानसन्निधिसम्बन्धेऽपि पवमानेष्टीनां न वारणादिपात्रनिवेशः, तथात्रापीति । यतः प्रकृतिवच्छब्देनात्र प्रयाजानां सौर्यसन्निधिः कल्पनीयः । स च प्रकरणाम्नानात्प्रयाजानुवादसहितकृष्णलहोमानुरोधेन तथाभूत एव कल्प्यते, यथा कृष्णलहोमविधानयोग्य एव भवति । पवमानेष्टीनान्तु वारणादिपात्रव्यवधानस्य प्रत्यक्षसिद्धत्वेनाकल्पनीयत्वाद्वैषम्यमिति न किञ्चिदनुपपन्नम् । अतः पूर्वपक्षसमाधानं तावदसमाधानमेवेति ।

तथा सिद्धान्तसमाधानमपि यत्किञ्चिदेव । पवमानेष्टेः ग्राहकग्रहणेन उपादानेन वा अग्न्यर्थत्वेऽप्युत्पत्तिवाक्यशिष्टाधानावरुद्धे

तस्मिन् 'फलवत्सन्निधावफलं तदङ्गम्' इति न्यायेन पारम्पर्यस्यैव सिद्धत्वात् । ननु समाप्तवैकृतोपदेशानामतिदेशमपेक्षमाणानामेव विशेषविषयत्वात्प्रथममग्न्यर्थत्वेऽवगते पश्चादुपदेशातिदेशसम्प्रतिपत्त्या साक्षात्त्वनिर्णाय इत्युक्तम् । अतः कथमुपदेशतः पारम्पर्यम् ? नैवम्, यत्रोपदेशेन विनिगमनायां हेतुस्साधारणस्स्यात्, तत्रातिदेशसापेक्षस्यैव ब्रह्मवर्चसकामादौ विशेषविषयत्वम् । इह तूपदेशस्यैव फलवत्सन्निधिन्यायसहकृतस्य प्रयाजादिवत्पारम्पर्यसाधनत्वविशेषविषयत्वान्न दुर्बलातिदेशात्तद्विरोधिसाक्षात्त्वप्रतीतिस्सम्भवति । न हि प्रयाजानामतिदेशतः साक्षात्त्वानवगतिः पारम्पर्यकारणम् । तथा सत्यतिदेशतः पारम्पर्यानवगतेः साक्षात्वस्यापि प्रसङ्गात् । अथ तत्र फलवत्सन्निधिन्यायसहकृतस्यैवोपदेशस्य पारम्पर्यप्रतिपादकत्वम्, तदत्रापि समानमिति नानुपपन्नम् । भवतु वातिदेशापेक्षैव समस्तवैकृतोपदेशप्रवृत्तिः, तथापि नात्रातिदेशतः साक्षात्त्वमवगन्तुं शक्यते, विरोधात् । उपदेशस्य ह्यग्निः साम्यभूतः प्राधान्येनावगम्यते । अतिदेशे चोपकारद्वारेण पदार्थप्राप्तिर्भवन्ती गुणत्वेनैव भवति । अतः कथं गुणभूताग्निसम्बन्धमतिदेशलब्धं साक्षात्त्वं प्रधानभूताग्निसम्बन्धमनुभवितुमुत्सहते । न च सम्भवितुं यावत्तावत्सम्परिहीयतामिति गुणत्वपरित्यागेन साक्षात्त्वस्वीकार इति वाच्यम् । विकल्पासहत्वात् । तत्र यदा पवमान-

जन्यातिशयवतो गुणत्वासम्भवः, तदा तथाभूतस्य गुणत्वासम्भवेनातिदेशस्याप्यसम्भवात्कथं तदनारूढनिष्कृष्टसाक्षात्त्वातिदेशः ? "ग्रहं सम्मार्ष्टि" इत्यत्र यथाभूतग्रहाप्राप्तौ सत्यां किञ्चिद्विवक्षितमिति शक्यमभिधातुम् । ननु ग्रहस्याप्राप्तौ यत्तुषारापहरणन्यायेनावर्जनीयतया तथाभूतस्यैवाहवनीयस्यातिदेश इत्युक्तम्, विकृत्युपकारानर्हस्य यदेतदुपकारकत्वविज्ञानं तत्किं भ्रान्तस्याभ्रान्तस्य वा ? न तावद्भ्रान्तं प्रति विचारः सम्भवति । न चाभ्रान्तस्याप्येवंविधं विज्ञानं सम्भवति । अथ सम्भवति, तदा पश्चादपि न गुणत्वपरित्याग इति कथं तस्य प्रधानीभूताग्निसम्बन्धः (?) षडोस्य तु यूपप्रविष्टस्य भ्रान्त्यापहरणं सम्भवत्येवेति भ्रान्तभाषितमेवेति ।

अथ केवलाधानजन्यातिशयवतो हविःप्रक्षेपाधारकारणत्वेन गुणत्वसम्भवात्तथाभूतस्यैवातिदेशतस्तथाभूतस्य प्रकृताविव साक्षात्त्वस्याप्यविरोधात् । तथापि न साध्यभूताग्निसम्बन्धः साक्षात्त्वस्येति । अतो नोपदेशातिदेशसम्प्रतिपत्त्याग्नेः साक्षात्पवमानेष्टिसाध्यत्वम् । तेन यदेतदुक्तम्—भावनावत्पुरुषवच्चैकस्याग्नेरेकत्र गुणप्रधानाविरोध इति तं प्रत्यनीकमपि (?) नाकलितमेवेत्यलमग्निभिरति । किञ्च समप्राधान्ये सत्याधानपवमानेष्टीनां विकल्पोऽपि दुर्निवार एव । न चादृष्टार्थानां षोडशिग्रहणाग्रहणवद्विधिनिषेधा-

भावात्समुच्चय एवेति वक्तव्यम् । एकप्रयोगवचनपरिगृहीतानाम-दृष्टार्थानां विधिनिषेधकृत एव विकल्पः । तदभावे पुनरदृष्टार्थानां परस्परनिरपेक्षसाधनभावापन्नानां समुच्चयकारणाभावाद्विकल्पो दुर्निवार एव । इतरथा पृथगधिकारवतामप्येकस्वर्गसाधनानां समुच्चयप्रसङ्गात् । न च छेदनतक्षणादीनामिवात्रैकं प्रयोगवचन-मनुग्राहकमुपलभामहे ।

ननु स्वरूपे कार्ये वोपयुक्तमङ्गं भवति । न च पवमानेष्टीना-मत्र निमित्तरूपाधानस्वरूपोत्पत्त्युपयोगित्वम्, नाप्यग्निगताधानजन्य-संस्कारनिष्पत्त्युपयोगित्वम् । उदीच्याङ्गत्वेन पवमानेष्टीनामाधान-जन्यसंस्कारस्याग्रतथा च सिद्धत्वात् । तेनाङ्गत्वाभावात्सन्निधेरौ-पदेशिकमेव साक्षात्वम् । ततः समप्राधान्यमेवेति । उच्यते— भवेदेवं यदि पवमानेष्टीनामाधानकार्योपयोगो न स्यात् । द्विविधं हि कार्यम्—अव्यवहितं व्यवहितञ्च । तत्राव्यवहितकार्योपयोगासम्भवेऽपि यथा प्रयाजादीनामाग्नेयाद्युत्पत्त्यपूर्वजन्यपरमापूर्वरूपकार्यो-पयोगित्वम्, तथेहाप्याधानजन्याहवनीयाख्यसंस्कारोत्पत्त्युपयोगो भविष्यतीति किमनुपपन्नम् ? अतः पवमानेष्टीत्युक्तम् । पवमानेष्टी-नामाधानाङ्गत्वे आधानजन्यस्यातिशयस्य पवमानेष्टिसापेक्षत्वात्प-वमानेष्टीनाञ्च पवमानेष्टिष्वेव (?) निर्देशाद्भट्टमते पवमानेष्टिष्वग्नीना-मतिदेश एव न स्यात् । समप्राधान्ये त्वाधानमात्रसंकृतस्याग्नेरति-

देशोपपत्तेः समप्राधान्यमिति, तदपि पवमानेष्टीनामाधानजन्यातिशयातिरिक्ताहवनीयरूपकार्योपयोगित्वादेव निराकृतं वेदितव्यम् ।

ननु सर्वत्र समभिव्याहृतधात्वर्थस्याव्यवहितकर्मगोचरत्वं द्वितीयाविभक्तेरवगतम्, तत्कथमाधानजन्यसंस्कारव्यवहिताहवनीयविषयत्वम्? आग्नेयादीनान्तु भवत्यादिप्रतिपाद्यभावनाकर्मणि फलापूर्वव्यवधानेनापि करणत्वोपपत्तेर्वैयर्थ्यमिति, तदयुक्तम्; परेणाप्यवश्यं भावनाकर्मण्येवाग्नीनिति द्वितीयास्वीकारात् । तथाहि—पवमानेष्टीनामग्न्यर्थत्वं ग्राहकग्रहणेन वा उपादानेन वा वक्तव्यम् । न च तदुभयमपि धात्वर्थकर्मण्युपपद्यते, प्रयोजनप्रयोजनिभावेनान्वयस्यासम्भवपराहतत्वात् । न ह्याधानजन्यसंस्कारस्य क्वचिद्विनियोगाभावात्प्रयोजनत्वं सम्भवति । "यदाहवनीये जुहोति" इत्याहवनीयस्यैव विनियोगात् । न चास्याहवनीयत्वेन विनियुक्तस्याधानैकजन्यत्वेन पवमानेष्टीनामनन्वय इति वाच्यम् । अनाहवनीयत्वेऽपि तस्याहवनीयोत्पत्त्युपयोगित्वेन प्रयोजनत्वात् । जन्यातिशयाभिमतस्याहवनीयोत्पत्तियोगित्वात्तेन रूपेण तस्यैव साध्यत्वप्रतीतीतरेतराश्रयप्रसङ्गात् । सिद्धे ह्याधानजन्यसंस्कारस्याहवनीयाख्यस्याहवनीयाख्यसंस्कारान्तरात्मन्युपयोगित्वे पवमानेष्टीनां तत्प्रयोजनत्वम् । तत्प्रयोजनत्वे च सति तदतिरिक्ताहवनीयाख्यसंस्कारसिद्धिः । इतरथाधानजन्यसंस्कारस्याहवनीयपरित्यागकारणाभावात् । दृष्टा

च "अग्निहोत्रं जुहोति" इत्यादौ भावनाकर्मण्यपि द्वितीया । न ह्यग्निहोत्रनामधेयस्य धात्वर्थस्य भावनाकर्मत्वं सम्भवति । आत्माश्रयप्रसङ्गात् । तेनैतदेव वक्तव्यम्—आहवनीयातिशयशालिनो "यदाहवनीये जुहोति" इति विनियोगात् "आहिताग्निराहवनीय" इति च श्रुतेराहवनीयरूपातिशयवानिति स्थितौ श्रुत्या निर्णीयते । तस्य च साक्षादादधातिधात्वर्थकर्मत्वे सति आधानप्रकरणं भ्रान्तानाम्, पवमानेष्टीनां सर्वथा केनापि प्रकारेणानन्वयाद्भावनाकर्मत्वम् । तथाच सत्युक्तप्रकारेण समप्रधान्यासम्भवात्प्रयाजादिवत्फलवत्सन्निधावफलस्य तदङ्गत्वमेव तेन वक्तव्यम् । अस्मन्मतेऽपि भावनाकर्मण्याहवनीये द्वितीयेत्युभयमतेऽन्यतः परिच्छेदस्योक्तत्वादिति नानुपपन्नम् ।

सूत्रन्तु पूर्वाधिकरणशेषतया व्याख्येयम् । तत्र ह्यष्टमानुवाकश्रुतसामिधेन्यनुवचनस्य नवमानुवाकश्रुताभिर्निविद्भिरङ्गाङ्गिभावमतिव्यवधानाभावादेकादशानुवाकश्रुतोपस्थानस्य सामिधेन्यनुवचनादङ्गाङ्गित्वाभावाव्यवधानान्नोपस्थानसामिधेन्यनुवचनयोरङ्गाङ्गित्वमिति व्युत्पाद्यते । तदुक्तम्—

वदन्ति सामिधेनीवन्निविदोऽग्निसमिन्धनम् ।
संयुक्तत्वादतस्तासां नाङ्गं प्रकरणेन ताः ॥ इति ।

(तं. वा., पृ. ७३८)

तदयमर्थो भवति—गुणानां सामिधेन्यनुवचननिविदां परार्थे

त्वादग्न्यर्थत्वात् असम्बन्धः स्यादिति न किञ्चिदनुपपन्नमित्यलमतिविस्तरेणेति ॥

इति द्वादशं वारणादीनां सर्वयज्ञार्थत्वाधिकरणम् ॥१२॥

अथ त्रयोदशं वार्त्रघ्न्यधिकरणम्

मिथश्चानर्थसम्बन्धात् ॥ ३. १. २४. ॥

( विषयसंशयसङ्गतयः )

दर्शपूर्णमासयोः श्रूयते—"वार्त्रघ्नी पौर्णमास्यामनूच्येते, वृधन्वती अमावास्यायाम्" इति । तत्र सन्देहः—किमनुवाक्यायुगलस्य प्रधाने निवेशः ? उताज्यभागयोः ? इति । आनर्थक्यतदङ्गन्यायप्रसङ्गागतं विचारद्वयं परिसमाप्येदानीमानर्थक्यतदङ्गन्यायवैधर्म्येण प्रसङ्गाद्यथायोगं व्यवस्था प्रतिपाद्यते ।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षिणोऽभिसन्धिः—यद्यपि पौर्णमास्यमावस्याशब्दौ काले मुख्यौ, तथाप्यनुवाक्यायुगलद्वयस्य देवताप्रकाशकस्य कालार्थत्वासम्भवात्स्वभावादेव यागयोगित्वाल्लक्षणया यागपरत्वमेव । तत्र किं क्रमानुरोधेनाज्यभागपरत्वं वानयोः ? यदि वा प्रकरणानुरोधेन प्रधानयागपरत्वम् ? तत्र प्रकरणस्य

बलीयस्त्वात्क्रमबाधेन प्रधानसम्बन्ध एवानुवाक्याद्वयस्य प्रकरणानुगृहीतेन वाक्येन प्रतिपाद्यते । तदुक्तम्—

नित्यं तत्रानुवाक्याभिर्यागानामेव सङ्गतिः ।
न कालयोः क्रमस्तस्मात्प्रधानाङ्गतया हृतः ॥ इति ।

(तं. वा., पृ. ७३६)

किञ्च यथा प्रकरणेनाज्यभागयोः प्रधानार्थत्वं तथानुवाक्यायुगलयोरपि । अतोऽपि प्रधानार्थत्वादनयोर्नान्योन्यसम्बन्धः । तदुक्तम्—

गुणानाञ्च परार्थत्वादित्यनेनापि हेतुना ।
सम्बद्धं नाज्यभागाभ्यामनुवाक्याचतुष्टयम् ॥ इति ।

(तं. वा., पृ. ७३६)

तस्मादाज्यभागक्रमं बाधित्वा वाक्येन प्रधानार्थत्वमेवानुवाक्यानामिति । एवं प्राप्ते—

( सिद्धान्तः )

अभिधीयते—भवेदेवं यद्यनुवाक्याद्वयस्य प्रधानकर्मण्यर्थसमवायो भवेत् । तथाहि—एकात्रानुवाक्याग्नेयी, अपरा सौमी । पौर्णमास्याख्यकर्मत्रयेऽप्यग्नीषोमीयेऽग्निसहितस्यैव सोमस्य देवतात्वम् । केवलस्य सोमस्य प्रकाशनं महेन्द्राधिकरणन्यायेनैव न सम्भवति । न चानुवाक्याद्वयेनैवाग्नीषोमप्रकाशनमिति वाच्यम् । "अनुवाक्यामन्वाह" इत्येकस्मिन् कर्मणि विवक्षितानुवाक्यागतै-

कत्वबाधप्रसङ्गात् । न चानेनैव वाक्येन द्वित्वमपि विधीयते । प्राप्ते कर्मणि द्वित्वस्य मन्त्रविशेषस्य च विधाने वाक्यभेदप्रसङ्गात् । "पुरोऽनुवाक्यामन्वाह" इत्यत्र त्वनेकासां पुरोऽनुवाक्यानां क्रमप्राप्तत्वादेकत्वमात्रं विधीयत इति युक्तम् । अत्र तु मन्त्रविशेषस्यापि विवक्षायां वाक्यभेद एवेति किञ्चित्कालवचनत्वेनोपपत्तौ कथं लाक्षणिककर्मपरत्वाश्रयणम् ? न च मन्त्रस्य कालार्थत्वासम्भवात्पौर्णमास्यमावास्याशब्दयोर्लक्षणया कर्मपरत्वमिति वाच्यम् । व्यवस्थार्थत्वेनैव कालवचनोपपत्तेः । तथाप्याज्यभागयोः कामवादवदनुवाक्यायुगलद्वयमाम्नायते । आज्यभागयोश्च प्रथमस्याग्निर्देवता, द्वितीयस्य सोमः । तेन क्रमलिङ्गाभ्यामाज्यभागार्थमेतदनुवाक्यायुगलद्वयमवगतम् । आज्यभागौ च प्रतिप्रधानगुणावृत्तिन्यायेन पौर्णमास्यमावास्याक्रमसमुदायद्वये आवृत्त्या प्रयोक्तव्यौ । तत्र चाव्यवस्थया मन्त्रप्राप्तौ व्यवस्थार्थं वचनम्—पौर्णमास्यां यावाज्यभागौ तौ वृत्रहपदवन्मन्त्रकौ, अमावास्यायां यावाज्यभागौ तौ वृधन्वत्पदवन्मन्त्रकौ प्रयोक्तव्याविति । एतच्च पौर्णमास्यधिकरण एव प्रपञ्चितम् । अतो मुख्यकालार्थत्वेनैव वाक्योपपत्तौ न लिङ्गक्रमबाधेन लक्षणया प्रधानकर्मपरत्वाश्रयणं युक्तम् । तेनानुवाक्यायुगलस्याज्यभागयोरेव निवेश इति सिद्धम् ।

प्रयोजनम्—पक्षोक्तम् । सूत्रन्तु—मिथोऽन्योन्यमनुवाक्यानां

प्रधानयोश्च दर्शपूर्णमासयोरङ्गाङ्गिभावेनानर्थसम्बन्धादर्थसम्बन्धाभावादित्यर्थः ॥

इति त्रयोदशं वार्त्रघ्न्यधिकरणम् ॥१३॥

अथ चतुर्दशं हस्तावनेजनाधिकरणम्

आनन्तर्यमचोदना ॥ ३. १. २४ ॥

( विषयसंशयौ )

ज्योतिष्टोमे श्रूयते—"मुष्टीकरोति वाचं यच्छति, दीक्षितमावेदयति" इति। तथा "हस्ताववनेनिक्ते, उलपराजिं स्तृणाति" इति। अत्र सन्देहः—किं मुष्टीकरणं वाग्यमश्चावेदनार्थम्? उत कृत्स्नप्रकरणे निवेशः? इति। तथा हस्तावनेजनं किमुलपराजिं स्तरितुम्? उत प्रकरणे सर्वान् पदार्थान् कर्त्तुम्? इति। अनन्तरोक्तः क्रमविनियोगोऽत्रापोद्यते।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षिणोऽभिसन्धिः—अत्र यद्यपि महाप्रकरणेन मुष्टिकरणवाग्यमयोर्हस्तावनेजनस्य च सर्वार्थत्वमेव प्रतिभाति। तथाप्याग्नेयाद्यध्ययनविधितः समानेऽपि प्रकरणे मुष्टिकरणवाग्यमयोरेव दीक्षितावेदनसन्निधिसमाम्नानम्। हस्तावनेजनस्य चोलप-

राजिस्तरणसन्निधिसमाम्नानम् । अनेनैवाङ्गाङ्गिभावस्तेषां प्रतीयते । न च सम्बन्धयोग्यानां गौरश्वः पुरुषो हस्तीतिवदसन्निधिः, येन प्रकरणेन च सम्बध्येत । समन्वयापादकयोग्यतालक्षणलिङ्गस्यानुग्राहकस्य विद्यमानत्वात् । तथाहि—याजमानयोर्मुष्टिकरणवाग्यमसंस्कारयोः प्रणिधानहेतुत्वात् प्रणिधानसम्पाद्यं क्रियान्तरमपेक्षितम् । अनन्तरा च दीक्षितावेदनक्रिया श्रूयते । अभिहितश्च दीक्षितरूपो यजमानोऽध्वर्युणा—'यत्किञ्चिदावेद्यमानं वत्सस्य गृह्णाति' इति । एवञ्च हस्तावनेजनमपि हस्तसंस्कारो हस्ताभ्यां किञ्चित्क्रियमाणमपेक्षते । हस्तसम्पाद्यमुलपराजिस्तरणञ्चानन्तरं श्रूयते । तदपि नैव सम्बध्यते । तेन यद्यपि प्रकरणं सन्निधेर्बलवत् तथापि योग्यतालक्षणलिङ्गसहायेन क्रमेणैव मुष्टिकरणवाग्यमयोर्दीक्षितावेदनार्थत्वम्, हस्तावनेजनस्य चोलपराजिस्तरणार्थत्वमिति । एवं प्राप्ते—

( सिद्धान्तः )

अभिधीयते—भवेदेवं यदि प्रकरणेन सर्वार्थत्वं न भवेत् । सर्वत्र प्रबलश्रुतिलिङ्गवाक्यावान्तरप्रकरणानि महाप्रकरणस्यापवादकानि भवन्ति । श्रुतिस्तावन्नास्त्येव । न ह्यत्रावेदयितुमिति श्रूयते । यदि तु श्रूयेत, ततः 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्' ( पा.सू., ३. ३. १० ) इत्येकवाक्यतया विनियोगो भवेदपि । न

त्वेवमस्ति। लिङ्गञ्च योग्यतालक्षणमनन्तरार्थत्वेन साधारणम्। अथवा सर्वार्थत्वमेव युक्तम्। यतो बहुषु पदार्थेष्वतिशयेनोपयुज्यते। एकस्माद्यथाकथञ्चिदपि निष्पादसम्भवात्। न च वाक्यं समस्ति। न हि "मुष्टीकरोति, वाचं यच्छति दीक्षितमावेदयति" इत्यादीनां भिन्नाख्यातयोगिनां केनचिद्यद्याद्युपबन्धेन विनैकवाक्यत्वं सम्भवति, यत्प्रकरणं बाधेत। नाप्यवान्तरप्रकरणमत्रास्ति। सन्दंशेन हि तदवगम्यते। तदुक्तम्—

परप्रकरणस्थानामङ्गे श्रुत्यादिभिस्त्रिभिः।
ज्ञाते पुनश्च तैरेव सन्दंशेन तदिष्यते॥ इति।

(तं. वा., पृ. ७४१)

न चात्र दीक्षितावेदनोलपराजिस्तरणयोरेवंविधस्सन्दंशोऽस्ति, येनावान्तरप्रकरणं भवेत्। न चाध्ययनविधिकारितसन्निधिसमाम्नानरूपक्रमादेवाङ्गाङ्गिभावनिर्णय इति वाच्यम्। सन्निधिसमाम्नानस्य नान्तरीयकत्वेनाविशेषत्वात्। अवश्यं हि प्रकरणे पठ्यमानं यस्य कस्यचित्सन्निधौ पठनीयम्, सर्वसन्निधौ पठितुमशक्यत्वात्। तेन नान्तरीयकतया यस्य कस्यचित्सन्निधौ पाठेऽपि सर्वार्थ एवाध्ययनविधिकारितो निर्णीयते। यत्र पुनराकाङ्क्षाया अभावात्प्रकरणग्रहणं न सम्भवति, तत्र सन्निधेर्नान्तरीयकत्वासम्भवात्सन्निहितपदार्थतादर्थ्यमेतत्सन्निधिपाठस्याध्ययनविधितात्पर्या-

दवधार्यते । यथाज्यभागयोरेवानुवाक्यानामिति । अत एव न लिङ्गसहायोऽपि सन्निधिरूपः क्रमोऽत्राङ्गाङ्गित्वे प्रमाणम्, प्रकरणाद्वयोरविशेषविधायकत्वात् । तेन मुष्टिकरणवाग्यमहस्तावनेजनानां प्रकरणात्सर्वार्थत्वमिति सिद्धम् ।

प्रयोजनम्—पत्नोक्तम् । सूत्रन्तु—एवंविधेष्वानन्तर्यं सन्निधिसमाम्नानमचोदना नाङ्गाङ्गित्वचोदनमित्यर्थः ॥

इति चतुर्दशं हस्तावनेजनाधिकरणम् ॥१४॥

अथ पञ्चदशं चतुर्धाकरणाधिकरणम् ।

**शेषस्तु गुणसंयुक्तः साधारणः प्रतीयेत मिथस्तेषामसम्बन्धात् ॥ ३. १. २६ ॥**

( विषयसंशयौ )

दर्शपूर्णमासयोः समाम्नायते—"आग्नेयं चतुर्धा करोति" इति । तत्र सन्देहः—किमाग्नेयेऽग्नीषोमीये ऐन्द्राग्ने च सर्वत्र चतुर्द्धाकरणम् ? उताग्नेय एव ? इति । सर्वत्र यथासंयोगं विनियोगव्यवस्थां प्रतिपाद्येदानीम् "आग्नेयं चतुर्धा करोति" इत्यादिषु किमेकदेशद्वारेणापि संयोगो भवति उत नेति विचार्यते ।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षः—"आग्नेयं चतुर्धा करोति" इत्यत्र यद्यप्यग्निस्तद्धितेन देवतात्वेनैव समवेतः प्रतिपाद्यते, तथापि नात्राग्निः कार्योपयोगी। कार्योपयोगी हि यथाशब्दमुपादीयमानः कार्यं भजते, अयन्तूपलक्षणमात्रम्। उपलक्षणञ्च कार्योपयोगिपदार्थावगतिमात्रप्रयोजनम्। तस्य च समवायमात्रेणैव सिद्धत्वान्न देवतात्वविशेषणाभावेऽपि किञ्चिद्दुष्यति। तेन यथा "उपांशुयाजमन्तरा यजति" इति कार्यतया उपांशुयाजं लक्षयितुं द्वौ पुरोडाशावुपात्तौ तथाप्येकपुरोडाशायां पौर्णमास्यामसत्यप्यग्नीषोमीये आग्नेयमात्रस्यैव कालोपलक्षणत्वम्। यथा लोके डित्थडवित्थयोर्माता एकेनापि डित्थस्य मातेत्युपलक्ष्यते, तथात्राप्येक एवाग्निर्विनापि देवतात्वं समवायमात्रेणाग्नीषोमीयैन्द्राग्नपुरोडाशावप्युपलक्षयिष्यति। तेनाग्नेयचतुर्द्धाकरणमग्निरूपगुणद्वारेण पुरोडाशसंयुक्तं पुरोडाशत्रयसाधारणमेव भवेत्। न चात्राग्निदेवतात्वेन कार्योपयोगित्वमस्ति, किन्तूपलक्षणत्वमात्रमित्युक्तम्। न चोपलक्षणत्वकार्योपयोगित्वयोरविनाभावः, तयोः परस्परासम्बन्धात्। अतश्चतुर्धाकरणं पुरोडाशत्रयसाधारणमेवेति। एवं प्राप्तेऽभिधीयते—

व्यवस्था वार्थसंयोगाल्लिङ्गस्यार्थेन सम्बन्धाल्लक्षणार्था गुणश्रुतिः ॥ ३. १. २७ ॥

(सिद्धान्तः)

अयमभिप्रायः—भवेदेवं यदि परित्यक्तदेवताभावमग्निमात्रमत्रोपलक्षणं भवेत् । तथाहि—आग्नेयतद्धितेन तावदग्निविशेषितं देवतात्वमुपात्तम् । पुरोडाशस्य चाग्निदेवतोद्देशेन त्यक्तत्वात् । यद्यपि तदानीं पुरोडाशत्यागं प्रत्युद्देश्यत्वेन देवतात्वस्य कार्योपयोगो नास्ति, तथाप्यत्र निर्वृत्तत्वेन पुरोडाशोपलक्षणत्वमविरुद्धमेव । तेन निर्वृत्तत्वेनोपलक्षणत्वाविशेषेऽपि मुख्यस्यैव देवतात्वस्योपलक्षणत्वे सम्भवति नाग्निमात्रस्योपलक्षणत्वमुचितम् । न च द्विदेवत्ये पुरोडाशेऽग्निर्देवता । न चोभयाधिष्ठानव्यासक्तं देवतात्वमेकेनाग्निना आग्नेय इति व्यपदेष्टुं शक्यते । तदुक्तम्—

न हि व्यासङ्गि विज्ञानमेकेन व्यपदिश्यते ।
नाग्नीषोमीय आग्नेय ऐन्द्राग्नो वा तदुच्यते ॥ इति ।

(तं. वा., पृ. ७४३.)

तेन यद्यप्युपलक्षणं न कार्योपयोगि, तथाप्याग्नेयपदेन देवतात्वेनैवाग्नेरुपात्तत्वात्तत्परित्यागे कारणाभावान्न तेनानुपलक्षितं

शक्यम् । उपांशुयाजे तु यमलपुरोडाशाभ्यामुपलक्षितकालस्यैकपुरोडाशायामपि पौर्णमास्यां प्रत्यभिज्ञायमानत्वाच्छक्योऽसौ ग्रहीतुम् । न हि तत्र सत्ताया अग्नीषोमीयपुरोडाशस्य कालोपलक्षकत्वम् । उपांशुयाजे तत्सत्ताभावात् । किन्तर्हि ? योग्यता तदुत्पत्तिहेतुभूतकारणनिरूपणीया । सा च योग्यता एकपुरोडाशायामपि पौर्णमास्यामस्त्येवेति युक्तमुपांशुयाजानुष्ठानमिति वैषम्यम् । यत्तु "आग्नेयस्य मस्तकं विभज्य प्राशित्रमवद्यति" इति श्रूयते, तत्सामान्यवचनेन सर्वत्र प्राशित्रावदाने प्रतिपादिते सत्यनेनाग्नेयस्य मस्तकविशेषमात्रं विधीयते, न त्वाग्नेयोपादानकं पुरोडाशत्रयमुपादाय प्राशित्रावदानं विधीयत इति मन्तव्यम् । तेन यदपि "तं चतुर्द्धा कृत्वा पुरोडाशं बर्हिषदं करोति" इति बर्हिषत्वं श्रूयते, तदपि समान्यवचनमनेनैवोपसंह्रियते । यस्तु विशेषवचनेनैवाप्राप्तत्वात्सामान्यवचनमनर्थकमिति मन्यते, तं प्रत्युच्यते—बर्हिषत्वकरणविधानार्थं तद्वचनमिति । अथ तदपि "बर्हिषि हवींष्यासादयति" इत्यनेनैव वचनेन प्राप्तम्, तदा चतुर्द्धाकरणं कृत्वा बर्हिषत्वं कर्त्तव्यमिति क्रमविधानार्थमेव वचनं भविष्यतीति सर्वमुपपन्नम् ।

प्रयोजनम्—पक्षोक्तम् । सूत्रन्तु—चतुर्द्धाकरणस्याग्नेयपुरोडाशरूपार्थसंयोगेनैव व्यवस्था लिङ्गस्य देवतात्वस्य तेनैवार्थेन

सम्बन्धात् । प्राशित्रे तु येयमाग्नेयगुणश्रुतिः सा मस्तकदेशलक्षणार्था, न तु प्राशित्रावदानविधानार्थेति ॥

इति पञ्चदशं चतुर्द्धाकरणाधिकरणम् ॥ १५ ॥

इति श्रीबालवलभीभुजङ्गापरनाम्नो भट्टभवदेवस्य कृतौ तौतातितमततिलके तृतीयस्य प्रथमः पादः ॥

## अथ तृतीयाध्यायस्य द्वितीयः पादः

### तत्र प्रथमं लिङ्गाधिकरणम्

अर्थाभिधानसंयोगान्मन्त्रेषु शेषभावस्स्यात्तस्मादुत्पत्तिसम्बन्धोऽर्थेन नित्यसंयोगात् ॥ ३.२.१. ॥

( विषयसंशयसङ्गतयः )

इह मन्त्रा उदाहरणम् "वर्हिदेवसदनं दामि" इत्येवमादयः । तत्र सन्देहः—किं मुख्य एवाभिधेये मन्त्राणां विनियोगः ? उत गौणेऽपीति । श्रौतविनियोगं प्रतिपाद्येदानीमवसरप्राप्तो लैङ्गिको विनियोगः प्रतिपाद्यते । इमन्तु सन्देहमसहमानः कश्चिदाह—ननु मुख्यगौणविभागवचनं नास्ति, सर्वेषामेव शब्दादवगम्यमानत्वेन मुख्यत्वात् । तथा हि—'मुखादिभ्यः' इति इवार्थकयत्प्रत्ययान्तो मुख्यशब्दः । मुखमिव मुख्यमिति प्रथमावगम्यमानेऽर्थे वर्त्तते । अतोऽग्निशब्दात्प्रथमं ज्वलनोऽवगम्यते यथा, तथा

माणवकोऽग्निरित्यत्र माणवकोऽपि । अतः सोऽपि मुख्य एवेति । न च गौणत्वं कथञ्चित्सम्भवति । गुणागमननिमित्तं हि गौणत्वं वक्तव्यम् । न चाग्निसमवेतो यो गुणविशेषः स कदाचिदपि माणवके सम्भवति । ये त्वपरेऽप्यष्टौ गौणत्वप्रकारा भाष्यवार्त्तिकयोरुपन्यस्य दूषितास्तेऽतितुच्छत्वान्नेह प्रदर्शिताः । अतः सर्व एवानन्यगतिः शब्दार्थः । शब्दस्याभिधानशक्तिं कल्पयन् मुख्य एव भवतीति नास्ति मुख्यत्वगौणत्वयोर्विशेष इति कथं संशयः ?

अत्रोच्यते—सर्वेषामेव गौणशब्दानां शब्दान्तरसमभिव्याहृतानां सति सादृश्ये प्रतिपादनादसति चाप्रतिपानादन्वयव्यतिरेकाभ्यां सादृश्यं तावदवश्यं प्रथमं प्रत्येतव्यम् । न तावदनवगतेऽग्नौ तत्सादृश्यं प्रत्येतुं शक्यत इत्यवश्यं प्रथममग्नेरभिधानम् । ततश्च तद्गतलक्षितपैङ्गल्यगुणयोगादेव सादृश्यरूपान्माणवकप्रतीतिसिद्धेर्न तद्गतवाचकशक्तिकल्पनायां प्रमाणमस्तीति गौणत्वम् । तेन सत्यमग्निसमवेतो गुणविशेषो माणवके नास्ति, तथापि गुणसामान्यं तावदस्त्यग्निपैङ्गल्यादिरूपम् । तस्य च शक्त्यन्तरसम्बद्धस्यापि शक्त्यन्तरसम्बन्धाविरोधाद्युक्तो गौणमुख्यविभाग इत्युपपन्नस्संशयः । अयं विचारोऽर्थात्तत्सिद्धिसूत्रात्प्रागेव द्रष्टव्यः । इह सिद्धमुख्यगौणभेदाधीनत्वात्तत्र यजमानप्रस्तरादिशब्दानां गौणानां निमित्तमात्रकथनस्येति ।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षः—"बर्हिर्देवसदनं दामि" इति मन्त्रोऽयं प्रकरणिना गृहीतः सामर्थ्यात्तत्सम्बन्धिविशेषे विनियोक्तव्यः। सामर्थ्यञ्च बर्हिःशब्दस्य यथाभिधानतः कुशप्रकाशने, तथा सादृश्याद्विनियुक्तकाशप्रकाशनेऽपि। तेनोभयशेषोऽयं मन्त्रः प्रतिप्रधानावृत्तिन्यायेनोभयलवनेऽपि प्रयोक्तव्यः। तदुक्तम्—

तत्र नित्यं परार्थत्वादुभयत्र प्रयोगिता।
साक्षान्न ह्यभिधानस्य किञ्चिदभ्यधिकं फलम्॥ इति।

( तं. वा., पृ. ७४६. )

एवञ्च सति गौण्या वृत्त्या पूषाद्यनुमन्त्रणमन्त्राणां पूषाद्यभावेऽप्यग्न्यादीनां प्रकाशनोपपत्तेर्नोत्कर्षो भविष्यतीति। एवं प्राप्ते—

( सिद्धान्तः )

अभिधीयते—भवेदेवं यदि तुल्यवन्मुख्यगौणार्थयोजकः श्रुत्यन्तरकल्पनायां प्रमाणमस्ति। एवञ्च सति गौणार्थगोचरं वा मध्यमाप्तमुपायान्तरमपि ध्यानादिकं न बाधिष्यते। तदुक्तम्—

कृतार्थे मन्त्रपाठे तु गौणानां स्मारकान्तरम्।
अनिवारितसामर्थ्यप्राप्तं किञ्चिद्विचार्यते॥ इति।

( तं. वा., पृ. ५७० )

एवञ्च सति पूषाद्यनुमन्त्रणमन्त्राणामपि लिङ्गेन पूषादिशेष-

---

१. किमिति बाध्यत इति मुद्रितवार्तिकपाठः।

त्वान्न दुर्बलप्रकरणानुरोधेन वृत्यन्तराश्रयणं भवतीति । यागानु-मन्त्रणसमाख्यया यागसामान्यसम्बन्धे सत्युत्कर्षात्पूषदेवत्य-यागसम्बन्ध इति । अतः सिद्धं मुख्यार्थे लिङ्गेन मन्त्राणां विनियोग इति ।

प्रयोजनम्—पक्षोक्तम् । सूत्रन्तु—यस्मादर्थविषयाभिधान-संयोगान्मन्त्रेषु शेषभावो युक्तः स्यात्तस्मादौत्पत्तिकेन मुख्येनैवार्थेनैषां शेषिशेषलक्षणः सम्बन्धो न गौणेन । कुतः ? तेनैव मुख्येनैवा-व्यभिचारितया नित्यसम्बन्धादिति ॥

इति प्रथमं लिङ्गाधिकरणम् ॥ १ ॥

अथ द्वितीयमैन्द्र्यधिकरणम्

वचनात्त्वयथार्थमैन्द्री स्यात् ॥ ३. २. ३. ॥

( विषयसंशयसङ्गतयः )

अग्नौ श्रूयते—"निवेशनः सङ्गमनो वसूनामित्यैन्द्र्या गार्हपत्य-मुपतिष्ठते" (मै. सं., ३. २. ४) इति । तत्र सन्देहः—किमिन्द्रस्योप-स्थानम् ? उत गार्हपत्यस्य ? इति । इदानीं पूर्वाधिकरणापवादः क्रियते । अत्र "निवेशनः सङ्गमनो वसूनाम्" इति मन्त्रेणेन्द्रस्य देवराजस्य वसुनिवेशनसङ्गमनकर्तृत्वेन यथेन्द्रोऽभिधातुं शक्यते, तथा 'ध्रुवोऽध्वरश्च सोमश्च विष्णुश्चैवानिलोऽनलः' इति

ह्येवं वसुरूपस्याग्नेः 'वसूनां पावकश्चास्मि' इति श्रेष्ठत्वकीर्त्तनाद्वसुनिवेशनसङ्गमनकर्तृत्वेनाग्निरप्यभिधातुं शक्यत एव। तथापि–ऐन्द्र्येति तद्धितश्रुत्या इन्द्रस्यैव प्राधान्येनाभिधानं वेदानुमतमिति मत्वेदमुदाहृतम्। अत एव वार्त्तिके स्फुटोदाहरणप्रतिपादकेन्द्रपदवानेव मन्त्रोऽत्र शाखान्तरे पठ्यत इति निदर्शितः—"कदाचन स्तरीरसि नेन्द्र सश्चसि" इति।

(पूर्वपक्षः)

अत्रायं पूर्वपक्षिणोभिसन्धिः—यद्यप्यस्य मन्त्रस्य श्रुत्या गार्हपत्यसम्बन्धः प्रतीयते। श्रुतिश्च लिङ्गाद्बलीयसी, तथाप्यग्नेरिव सेकेऽशक्तस्य श्रुतिशतेनापि विनियोक्तुमशक्यत्वान्न गार्हपत्येऽस्य विनियोगः सम्भवति। यतो नानेनेन्द्राभिधायकेन मन्त्रेण कथञ्चिदपि गार्हपत्योऽभिधातुं शक्यते। न चाभिधानं विना प्रकारान्तरेणास्य मन्त्रस्य गार्हपत्यशेषत्वमनेन वाक्येन प्रतिपाद्यत इति वाच्यम्। उपतिष्ठत इत्यात्मनेपदविरोधात्। "उपान्मन्त्रकरणे" (पा. सू., १. ३. २५) इत्युपपूर्वात्तिष्ठतेर्मन्त्रकरणेऽर्थे आत्मनेपदं विधीयते। कथं गार्हपत्यमिति द्वितीयेति चेत्—उच्यते, वचनं तावद्देशविधानार्थमेव। द्वितीया च सक्तुवदविवक्षितेप्सितार्था कारकसामान्यलक्षणाद्वारेणाधिकरणमाचष्टे। तेनायमर्थः—गार्हपत्यदेशे स्थित्वा ऐन्द्र्येन्द्रोपस्थानं कर्त्तव्यमिति। एवं प्राप्ते—

( सिद्धान्तः )

अभिधीयते—भवेदेवं यदि प्रत्यक्षश्रुतिविरोधेऽपि मन्त्राणां मुख्यार्थत्वमुपपद्येत । तथाहि—अवश्यं तावदत्रैकस्यामुख्यार्थत्वं वक्तव्यम् । तत्र किं मन्त्रानुरोधेन ब्राह्मणवाक्यगतगार्हपत्यपदे वृत्त्यन्तरमाश्रीयताम् ? ब्राह्मणानुरोधेन वा मन्त्रगतेन्द्रपदे ? तत्र ब्राह्मणस्याप्राप्तविधित्वेन स्वतन्त्रत्वात्प्रथमप्रवृत्तेश्चानन्यप्रमाणकेऽर्थे गौणत्वमयुक्तम् । मन्त्रस्य तु ब्राह्मणविहितार्थप्रतिपादकत्वेन तत्परतन्त्रप्रवृत्तेर्ब्राह्मणप्रतिपादितार्थानुरोधेन गौणत्वमेव युक्तम् । तदुक्तम्—

गौणत्वं यत्र नाम स्यात्क्वचिद्‌ब्राह्मणमन्त्रयोः ।
तत्रानुवादरूपत्वान्मन्त्राणां गौणतेष्यते ॥ इति ।

(तं. वा., पृ. ७५३)

तेन मन्त्रगत एवेन्द्रशब्दो यज्ञसाधनत्वगुणयोगाद्गार्हपत्यं प्रकाशयति । अथवा—'इदि परमैश्वर्ये' इति धातोरयमिन्द्रशब्दो व्युत्पन्नः । अग्नेश्च यद्यपि परमैश्वर्यन्नास्ति, तथापि स्वकार्ये तावद्दाहपाकादावैश्वर्यमस्ति । तेनैश्वर्यगुणयोगाद्वा अयमिन्द्रशब्दो गार्हपत्ये गौणः । तदुक्तम्—

स्यादग्नेर्गौणमिन्द्रत्वं यज्ञसम्बन्धकारितम् ।
इन्दत्यर्थानुसाराद्वा स्वकार्ये सोऽपि हीश्वरः ॥ इति ।

( तं. वा., पृ. ७५५ )

तस्मादिन्द्रशब्द एव गार्हपत्ये गौण इति सिद्धम् । यत्तु बलाबलाधिकरणेनैव गतत्वादिदमनर्थकमिति केचिच्चोदयन्ति, तदयुक्तम् ; श्रुतिलिङ्गबलाबलनिर्वाहस्यैव तदधिकरणाधीनत्वात् । तथा हि— श्रुतिविरोधे गौणानामपि मन्त्राणां मन्त्रत्वं भवतीत्येतदधिकरणसिद्धं भवति यदा, तदा तत्र श्रुतेर्बलवत्वं भवितुमर्हति, इतरथा अशक्यार्थे विनियोगासम्भवात् 'आनर्थक्यप्रतिहतानां विपरीतं बलाबलम्' इति न्यायेन श्रुतिरेवान्यथा नीयेतेति न किञ्चिदनुपपन्नमिति ।

प्रयोजनम्—पत्तोक्तम् । सूत्रन्तु—वचनादैन्द्री अयथार्था गौणार्थेत्यर्थः ॥

इति द्वितीयमैन्द्र्यधिकरणम् ॥ २ ॥

अथ तृतीयं हविष्कृदाह्वानाधिकरणम्

तथाह्वानमपीति चेत् ॥ २. ३. ५. ॥

( विषयसंशयसङ्गतयः )

स्तो दर्शपूर्णमासौ । तत्रदेमाम्नायते—'हविष्कृदेहीति त्रिरवघ्नन्नाह्वयति' इति । तत्र सन्देहः—किमेष मन्त्रोऽवहन्ति प्रति श्रुत्या उपदिश्यते ? उत हन्तिरस्य कालं लक्षयति ? इति । एवमधि-

-करणद्वयेन यथाक्रमं मुख्यार्थे मन्त्राणां विनियोगं क्वचिदपवादश्च निरूप्येदानीं क उत्सर्गविषयः कोऽपवादस्येत्युच्यते ।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षः—"हविष्कृदेहि हविष्कृदेहि" इति मन्त्रोऽयम् । "इति त्रिरवघ्नन्नाह्वयति" इति ब्राह्मणम् । पूर्वाधिकरणे मन्त्रब्राह्मणयोर्विरोधे मन्त्रस्यैव मुख्यार्थत्वं न ब्राह्मणस्येत्युक्तम् । यद्यत्र हविष्कृदेहीत्याह्वयतीति सम्बन्धः क्रियते, तदाह्वानाङ्गत्वान्मन्त्रस्य नावघाताङ्गत्वमिति । अथावघ्नन्निति कालो लक्षणीयः, तदायमर्थः—अवघातकालेऽध्वर्युर्यजमानपत्नीं हविष्कृदेहि हविष्कृदेहीत्याह्वयतीति । तथाच सति मन्त्रानुरोधेन ब्राह्मणवाक्यस्यैव मुख्यार्थत्वं स्यात् । तेनायं सम्बन्धो हविष्कृदेहीत्यवघ्नन्निति यथाश्रुतस्यैवावघातस्य मन्त्रोऽङ्गम् । मन्त्रगतहविष्कृत्पदस्यैव गुणादवघातप्रकाशकत्वम् । यो हि हविष्करोति स हविष्कृत् । हविरुत्पत्त्यनुकूलश्चावघात इति । एहीति पदेनापि सन्निधिगुणयोगादवघात एव निर्दिश्यते । यो ह्यागच्छति स सन्निहितो भवत्येव । अवघातोऽपि क्रियमाणः सन्निहितो भवतीति ब्राह्मणगतत्वात् आह्वयतीति पदमनुवादभूतं परमप्रतीतमगत्यौपचारिकमेव । यो ह्याह्वयति स एहीति पदमुच्चारयति । अयमपि मन्त्रोऽवघातप्रकाशकं गौणमेहीति पदमुच्चारयतीत्याह्वयतीत्युच्यते । न च त्रिरवघ्नन्निति प्राप्तेऽ

वघाते मन्त्रविधानादाह्वानमन्त्रस्य च त्रिरभ्यासविधानाद्वाक्यभेद इति वाच्यम् । शाखान्तरे हविष्कृदेहीति त्रिरभ्यासपाठात् त्रित्वस्यापि प्राप्तस्यानुवादात् । अतो मन्त्रावघातसम्बन्धविधिरेवायमिति । एवं प्राप्तेऽभिधीयते—

न कालविधिश्चोदितत्वत् ॥ ३. २. ६. ॥

( सिद्धान्तः )

अयमभिप्रायः—भवेदेवं यदि मन्त्रानुरोधेन ब्राह्मणे काललक्षणादोषो भवेत् । न चैतदस्ति । तथाहि—लिङ्गेन तावदयं मन्त्रो यजमानपत्न्याह्वानाङ्गं प्रतीयते । तच्च तदैव हीयते, यदि ब्राह्मणगता काचिच्छ्रुतिर्विरुध्येत । तत्र विनियोक्त्री श्रुतिस्तावदत्र नास्त्येव । न चावघ्नन्निति काललक्षणायामभिधात्री श्रुतिः पीड्यत इति वाच्यम् । यतः 'कर्त्तरि कृत्' (पा.सू.,३.४.६७) इति कृत्प्रत्ययोऽयं शतृरूपः कर्त्तरि वाच्येऽनुशिष्टः । 'लक्षणहेत्वोः क्रियायाः' (पा. सू., ३. २. १२६ ) इत्यनुशासने च क्रियान्तरलक्षणोपाधिविशिष्टः कर्त्ता शतृवाच्य इत्यवगम्यते । कर्त्रा च क्रियान्तरं कालद्वारेणैव लक्ष्यते—यदायं स्वपदगते धात्वर्थे कर्त्ता, तदायं क्रियान्तरस्येति । यथा—'आम्नायं कुर्वन्मौनमाचरेत्' इति । तेन यदि कालो न लक्ष्येत, तदा यत्कर्त्तुः

क्रियान्तरलक्षणार्थत्वं तद्धीयत इत्यनुशासनसिद्धेयं लक्षणा श्रुतितुल्या न दोषायेति । आह्वयतीति पदञ्च मुख्यार्थमेवेति न काचिच्छ्रुतिपीडा मत्पक्षे । तव तु ब्राह्मणवाक्यगताह्वयतिपदस्यैव निमित्तमौपचारिकत्वे न यथार्थत्वमिति महानयं विशेष इति । अत्र चेतरत्सर्वमनूद्य त्रिरिति विधीयते । यतो मन्त्रस्तावल्लिङ्गादेव यजमानपत्न्याह्वाने प्राप्तः । तथा हविर्निष्पादनार्थावघातकाले यजमानपत्न्या हविष्कृत्तृतीया (?) तत्सन्निध्युपायत्वेनाह्वानस्य हविष्कृदेहीत्याह्वानमप्यर्थप्राप्तम् । एवं कार्यकाले च तत्सन्निधेरपि ·······दवघातकालोऽप्यर्थप्राप्त एव । एतेन मन्त्रस्य त्रिरभ्यासपरमेतद्वचनम् । अथ त्रिरभ्यासोऽपि शाखान्तरप्राप्तस्तदा द्विरभ्यासस्य शाखान्तरप्राप्तत्वात् त्रिरभ्यासनियमार्थं वचनमिति । तदुक्तम्—

त्रिरभ्यासपरत्वात्तु न मन्त्रोऽत्र विधीयते ।
लक्षणे च शतुर्वृत्तिः प्राप्तश्चान्यदनूद्यते ॥ इति ।

(तं. वा., पृ. ७५६)

प्रयोजनम्—पूर्वपक्षे अवघाते मन्त्रः प्रयोक्तव्यः । सिद्धान्ते त्वाह्वान इति ।

सूत्रन्तु—नावघातमन्त्रविधिः, किन्त्ववघ्नन्निति पदेन कालविधिः । कालप्रतिपादनन्तु त्रित्वमात्रस्य चोदितत्वादर्थवदिति ॥

इति तृतीयं हविष्कृदाह्वानाधिकरणम् ॥ ३ ॥

अथ चतुर्थं वाग्विसर्गाधिकरणम्

तथोत्थानविसर्जने ॥ ३. २. १० ॥

( विषयसंशयसङ्गतयः )

ज्योतिष्टोमे समामनन्ति—"उत्तिष्ठन्नन्वाह अग्नीदग्नीन्विहर", इति । तथा "व्रतं चरत" इति । किमुत्थानं वाग्विसर्जनञ्च प्रतिमन्त्रयोरुपदेशः ? उत कालार्थः संयोगः ? इति । इदानीमुदाहरणान्तरेऽधिकाशङ्कां निराकर्त्तुं पूर्वन्याय एवातिदिश्यते ।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षिणोऽभिसन्धिः—पूर्वाधिकरणेऽवघ्नन्नित्यत्रानुवादे भवतु काललक्षणा । इह तु "उत्तिष्ठन्नन्वाह" इत्यनेन लक्षितः कालः "अग्नीदग्नीन् विहर" इति प्रैषाङ्गत्वेन विधेयः । तथा "व्रतं कृणुत"इत्यत्र विज्ञातकालेन मन्त्रेण लक्षितः कालो वाग्विसर्गाङ्गत्वेन विधेयः । न च विधेयस्यार्थस्य लाक्षणिकत्वं युक्तम् । किञ्च पूर्वाधिकरणे त्रिरभ्यासपरत्वाद्विधेर्मन्त्रो न विधीयत इत्युचितम् । न चेह किञ्चिदन्यद्विधेयमस्तीत्युत्पत्त्या वाग्विसर्गाङ्गत्वेन मन्त्रविधिरेवायमिति । न च प्रकरणसामर्थ्याभावान्न मन्त्रविधिरिति वाच्यम् । ऐन्द्रीन्यायेनागत्या वृत्त्यन्तरेणापि सामर्थ्योपपत्तेः । तेन मन्त्रविधिरेवेति । एवं प्राप्ते—

( सिद्धान्तः )

अभिधीयते—भवेदेवं यदि लिङ्गविरोधो न भवेत्। तथाहि—न तावदैन्द्र्येतिवद्विनियोगः श्रूयते, किन्तु समभिव्याहाराद्विनियोगोऽनुमातव्यः। न चासौ समभिव्याहारलक्षणाद्वाक्याल्लिङ्गे सत्यनुमातुं शक्यते। तेन गत्यन्तरासम्भवेन तावदवश्यं कालो लक्षणीयः। तत्र 'उत्तिष्ठन्नन्वाह" इत्यत्र तावत् 'लक्षणहेत्वोः क्रियायाः' इत्यनुशासने शतुः काललक्षणार्थत्वं निर्दोषमिति पूर्वाधिकरण एव दर्शितम्। तथा "व्रतं कृणुत" इति विज्ञातकालेन प्रैषमन्त्रेण कालो लक्ष्यते। तेनायमर्थः—उत्थानकालेऽध्वर्युराग्नीध्रमृत्विजम् "अग्नीदग्नीन्विहर' इति प्रेषयति। तथा "व्रतं चरत" इति प्रैषमन्त्रेण कालो लक्ष्यते। पाठकालेऽध्वर्युर्वाचं विसृजेदिति।

प्रयोजनम्—पक्षोक्तम्। सूत्रन्तु—यथावघ्नन्नित्यत्र वाक्ये काललक्षणा, तथा उत्थानविसर्जनवाक्ययोरपि। उत्थानसमभिव्याहृतो विधिस्तथा वाग्विसर्जनसमभिव्याहृतश्च विधिर्लक्षितकालविधानार्थ इत्यर्थः॥

इति चतुर्थं वाग्विसर्गाधिकरणम्॥ ४॥

अथ पञ्चमं सूक्तवाकाधिकरणम्

## सूक्तवाके च कालविधिः परार्थत्वात् ॥३ .२. ११॥

( विषयसंशयसङ्गतयः )

दर्शपूर्णमासयोः श्रूयते—"सूक्तवाकेन प्रस्तरं प्रहरति" इति । तत्र सन्देहः—किं सूक्तवाकः प्रहरणं प्रत्युपदिश्यते ? उतेयं काललक्षणा ? इति । इदानीं पूर्वाधिकरणोक्तकालार्थत्वापवादः क्रियते ।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षः—यद्यपि सूक्तवाकेनेति श्रुत्या सूक्तवाकस्य प्रहरणाङ्गत्वमवगम्यते । तथापि न सूक्तवाकस्य प्रहरणाभिधानसामर्थ्यमस्ति । न चासमर्थस्य श्रुतिशतेनापि विनियोगः सम्भवति । न चैन्द्रीमन्त्रवच्छ्रौतविनियोगबलेन वृत्त्यन्तराश्रयणेनापि सूक्तवाकस्य प्रहरणप्रकाशकत्वं भविष्यतीति वाच्यम् । अभिधानेन गार्हपत्यप्रकाशनासम्बद्धस्यैन्द्रीमन्त्रस्योपतिष्ठत इति प्रकाशने विनियोगादध्ययनविधिना तत्र वृत्त्यन्तरेणैव प्रकाशकमात्रमाश्रितम् । न चेह सूक्तवाकेन प्रस्तरप्रहरणमुपतिष्ठेत, प्रकाशयेद्वेति श्रूयते । किन्तर्हि ? "सूक्तवाकेन प्रस्तरं प्रहरेत्" इत्येतावन्मात्रम् । तत्किं कृत्स्नस्यैव मन्त्रस्य वृत्त्यन्तराश्रयतो

भवत्वयथार्थत्वम् ? उत सूक्तवाकपदमात्रस्येति 'भूयसां स्यात्स-धर्मत्वम्" इति न्यायेन सूक्तवाकपदमात्रस्यैव वृत्त्यन्तरेण काल-परत्वमुचितमिति वैषम्यम् । किञ्च प्रस्तरप्रहरणस्यापि प्रतिपत्ति-कर्मणोदृष्टार्थस्य न मन्त्रापेक्षा तद्वान्यदेवता वा समस्ति । अतो न सूक्तवाकस्य प्रहरणाङ्गत्वम्, किन्तु सूक्तवाकस्यैव देवता-प्रकाशनेन कृतार्थस्य प्रहरणस्य च धारणोपयुक्तप्रस्तरप्रतिपत्ति-त्वेन कृतार्थस्य "दर्शपूर्णमासाविष्ट्वा सोमेन यजेत" इतिवत्का-लार्थ एव संयुक्तः । तेन सूक्तवाकपदमत्र काललक्षणार्थमेव । यद्यपि चोपपदविभक्तेः कारकविभक्तिर्बलीयसी, तथाप्युक्तप्रकारेण कारकत्वासम्भवादगत्या इत्थंभूतलक्षणार्थैवेयं तृतीया वर्णनीया । सूक्तवाकेनेति सूक्तवाकोपलक्षितं प्रस्तरं प्रहरेदिति । उपलक्षण-त्वञ्च सूक्तवाकस्य कालद्वारेणैव । तेनायमर्थः—सूक्तवाकप्रयोग-काले प्रस्तरं प्रहरेदिति । अत्र सूक्तवाकस्यापीष्टदेवताप्रकाशनेन कृतार्थत्वात्तल्लक्षितः काल एव विधीयत इति । एवं प्राप्तेऽभिधीयते—

उपदेशो वा याज्याशब्दो हि नाकस्मात् ॥ ३.२.१२ ॥

( सिद्धान्तः )

अयमभिप्रायः—भवेदेवं यद्युपपदविभक्तेर्बलीयसी कारकवि-भक्तिस्तृतीयात्र न श्रूयेत । तस्याश्च मुख्यं करणत्वमेवार्थः ।

"अन्यायश्चानेकार्थत्वम्" इति न्यायादन्यत्र लाक्षणिकत्वमिति। न च मुख्ये सम्भवति लाक्षणिकत्वं युक्तम्। न च मुख्यं करणत्वं प्रहरणेन सम्भवति, येन काललक्षणार्थत्वमाश्रीयेत। नन्वग्न्यादीष्टदेवताप्रकाशनसम्बद्धोऽयम्। अतो न प्रस्तरप्रहरणप्रकाशनसम्बद्धः। अतः श्रुतिशतेनापि विनियोक्तुं न शक्यत इत्युक्तम्। नैवम्, विरोधाभावात्। तथाहि—यदस्य स्वसामर्थ्येनेष्टदेवताप्रकाशनसामर्थ्यं प्रस्तरप्रहरणे विनियुज्यमानस्य तदनुकूलमेव, यतः सर्वत्र क्रियातत्साधनाभिधानेन मन्त्रस्याङ्गत्वं भवति। तत्र यद्यपि प्रस्तरप्रहरणप्रकाशनात्प्राक् प्रसिद्धप्रहरणक्रियाप्रकाशनं तदङ्गभूतदेवताप्रकाशनं वात्र नास्ति, तथापि प्रतिपादिताङ्गभावस्य यत्प्रकाश्यं तदेव नूनमस्याङ्गमिति विनियोगोपपत्तये कल्प्यते, न देवतार्थेन। साधनप्रयोगसम्बद्धानामेव देवतानामग्न्यादीनामिहापि देवतार्थेनैवान्वयः। एवञ्च देवताभावसापेक्षहविस्सापेक्षत्वात्प्रस्तरस्य च स्ववाक्यात्तस्य "इदं हविरजुषत" इति हविष्ट्वनिर्देशात्तत्र प्रस्तर एव हविष्टेन सम्बध्यते। स्वतःप्रक्षेपरूपोऽयं 'इदं हविः' इति द्रव्यदेवतासम्बन्धबलेनोद्देशत्यागभावापन्नहोमो भवतु न तु यागमात्रम्। एवं मन्त्रोऽपि यथा लिङ्गेनेष्टदेवतासंस्कारार्थः, तथा श्रुत्या प्रस्तरसंस्काररूपहोमार्थोऽपीति। तेनाग्न्यादिदेवताप्रकाशनेनैव सूक्तवाकस्योभयार्थत्वान्नास्ति श्रुतिलिङ्गयोर्विरोध इति।

तदुक्तम्—

भेदेन श्रुतिलिङ्गाभ्यां सूक्तवाकाङ्गता यदि ।
स्याद्विरोधस्ततः किन्तु तुल्यार्थत्वेन नास्त्यसौ ॥ इति ।

( तं. वा., पृ. ७६२ )

यत्तु प्रस्तरप्रहरणस्य प्रतिपत्तिकर्मणो दृष्टार्थस्य देवतापेक्षा मन्त्रापेक्षा वा न समस्तीत्युक्तम् । तदयुक्तम् ; प्रकरणविनियुक्तमन्त्रार्थयोरुपपत्त्यर्थमेव प्रहरणगताकाङ्क्षोत्थापनेनैव रक्तपटवदन्वयोपपत्तेः । न चास्य प्रथमं प्रतिपत्तित्वमप्यवधारितम्, किन्तु द्रव्यदेवतासम्बन्धेन होमरूपत्वे होमस्वरूपावधारणोत्तरकालं किमिदमर्थकर्म प्रतिपत्तिकर्म वेति चिन्तायां प्रतिपत्तिकर्मलक्षणयोगात्प्रतिपत्तिकर्मत्वमेव । 'उत्पत्तौ येन संयुक्तं तदर्थं तच्छ्रुतिहेतुत्वात्तस्यार्थान्तरगमने शेषत्वात्प्रतिपत्तिः स्यात्' इति हि प्रतिपत्तिलक्षणम् । अस्य चायमर्थः—उत्पत्तौ येन द्रव्यादिना संयुक्तं कर्म तद्द्रव्यं तृतीयादिश्रुतिहेतुत्वात्तदर्थं तस्य द्रव्यस्य कर्मान्तरगमने शेषत्वात्कृतप्रयोजनत्वात्तत्कर्म तद्द्रव्यप्रतिपत्तिः स्यात् । प्रहरणमपि च "प्रस्तरे जुह्वमासादयति सर्वा वा स्रुचः" इति जुह्वाद्यासादनकृतार्थप्रस्तरसंयोगेन श्रूयमाणं होमरूपत्वेऽपि प्रतिपत्तिरूपमेव । न च प्रतिपत्तिरूपत्वे होमरूपत्वं विरुध्यते, स्विष्टकृदादीनां होमरूपापन्नानामेव प्रतिपत्तित्वदर्शनात् । तेन द्वितीयाप्यत्र प्रस्तरमिति

मुख्यार्थैव । न तु सक्तुवद्विनियोगभङ्गेन तृतीयार्था । गुणाभावस्तु प्रस्तरयागं प्रति कल्पितशब्दप्रतिपाद्य एवेति नानुपपन्नम् ।

प्रयोजनम्—पूर्वपक्षे सूक्तवाकपाठकाले प्रस्तरस्य प्रक्षेपमात्रमनुष्ठातव्यम् । सिद्धान्ते तु यद्यपि प्रसङ्गेन प्रहरणकाल एव सूक्तवाकपाठोऽनुष्ठेयः तथापि होमरूपत्वादुद्देशत्यागावप्यनुष्ठेयाविति ।

सूत्रन्तु—सूक्तवाकस्य प्रस्तरप्रहरणं प्रति अङ्गपर्यायकरणत्वेनैवोपदेशः । एवञ्च 'सूक्तवाक एव याज्या' इति यागसाधनत्वसाम्येनौपचारिको याज्याशब्द उपपन्नो भविष्यति, इतरथाकस्मिकः स्यादिति ॥

इति पञ्चमं सूक्तवाकाधिकरणम् ॥ ५ ॥

अथ षष्ठं सूक्तवाकस्य विभज्यविनियोगाधिकरणम्

कृत्स्नोपदेशादुभयत्र सर्ववचनम् ॥ ३. २. ६. ॥

( विषयसंशयसङ्गतयः )

दर्शपूर्णमासयोः—"सूक्तवाकेन प्रस्तरं प्रहरति" इति श्रूयते । तत्र सन्देहः—किं पौर्णमास्यां कृत्स्नसूक्तवाकः प्रयोक्तव्यः, कृत्स्नोऽमावास्यायाम् ? उत यथासामर्थ्यं निष्कृष्य यथायथं प्रयोगः ? इति । तृतीयाश्रुतिबलेन सूक्तवाकः प्रहरणाङ्गमिति

स्थितम्। इदानीं कृत्स्न एव पौर्णमास्याममावास्यायाञ्च प्रयोक्तव्यः, उत विभज्येति प्रसङ्गाच्चिन्त्यते।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षः—यद्यपीष्टदेवताप्रकाशनापरित्यागेनैव सूक्तवाकस्य प्रहरणाङ्गत्वम्, ताश्च पौर्णमास्यामग्न्याद्याः, सूक्तवाकश्च भेदेनैव तत्प्रकाशनसम्बद्ध इति यथासामर्थ्यं भेदेनैव सूक्तवाकप्रयोगो युक्तः, तथापि सूक्तवाकेनेति श्रुत्या कृत्स्नस्यैव सूक्तवाकस्य प्रहरणे विनियोगादेकदेशवियोगे चासूक्तवाकत्वप्रसङ्गात्कृत्स्न एव पौर्णमास्याममावास्यायाञ्च प्रयोक्तव्यः। ननु परस्परनिरपेक्षविभिन्नदेवतार्थत्वाद्भिन्ना एव सूक्तवाकाः। तेन लिङ्गानुरोधेन विभज्यैव प्रयोगो युक्तः। कथमुभयत्रापि कृत्स्नस्यैव प्रयोगः ? इति। उच्यते—भवेदेवमर्थतो भिन्नवाक्यत्वम्, यदि शब्दतः प्रथममेकवाक्यत्वं नावगम्येत। सूक्तवाकमन्त्रे हि प्रथमम् "इदं द्यावापृथिवी भद्रमभूत्" इति श्रूयते। अन्ते च "अस्यामृधद्धोत्रायां देवङ्गमायाम्" इति। मध्ये च "अग्निरिदं हविरजुषत अवीवृधत महो ज्यायोऽकृत" इति। ततः पुनः "अग्नीषोमाविदं हविरजुषेताम्" इत्येवमादीनि देवतावन्ति पदान्याम्नायन्ते। तेन यथा वैश्वानरवाक्यस्योपक्रमोपसंहारयोर्द्वादशकपालकीर्त्तनान्मध्यस्थिताष्टाकपालादिपदानां वाक्यभेदप्रतिभानेऽपि न भिन्नवाक्यत्वम्,

तथात्राप्युपक्रमोपसंहारवर्त्तिपदानां तन्त्रत्वान्मध्यभेदप्रतिभानेऽपि न भिन्नवाक्यत्वम्। तथा सर्वेषामेवेष्टदेवताप्रकाशनेनैकप्रयोजनत्वेनैकार्थत्वमप्यविहतम् । तथाप्यध्यापका अध्येतारश्च 'सूक्तवाकमध्यापयामः' 'सूक्तवाकमधीमह' इति कृत्स्नमेव सूक्तवाकं व्यपदिशन्ति। तदुक्तम्—

मन्त्रो यथा समाम्नातः सूक्तवाकोऽभिधीयते।
तस्य निष्कृष्यमाणस्य नैव स्यात्सूक्तवाकता ॥ इति।

( तं. वा., पृ. ७६५ )

तद्वत्पौर्णमास्याममावास्यादेवताभिधायिपदानाममावास्यायाञ्च पौर्णमासीदेवताभिधायिपदानामानर्थक्यम्। द्यावापृथिवीपदादिवत्स्तुत्यर्थत्वेनैवोपपत्तेः। तेन प्रहरणरूपे होमे कृत्स्नमन्त्रप्रयोगेऽपि देवतार्थत्वम्। पौर्णमास्याममावास्यायाञ्च इष्टदेवताप्रकाशनात्तु गुणो वेति। तेन कृत्स्नस्यैव सूक्तवाकस्य सूक्तवाकेनेत्युपदिष्टत्वादुभयत्र पौर्णमास्याममावास्यायाञ्च कृत्स्नस्यैव प्रयोग इति। एवं प्राप्तेऽभिधीयते—

यथार्थं वा शेषभूतसंस्कारात् ॥ ३. २. १७ ॥

( सिद्धान्तः )

अयमभिप्रायः—भवेदेवं यदि लिङ्गबाधेन श्रुतिर्व्यवस्थापयितुं न शक्यते। तथाहि—प्रयोगवर्तिदेवतापदसहितमभिश्रूयमाणं

तन्त्रपदोपेतमिष्टदेवताप्रकाशनं कुर्वद्वाक्यं सूक्तवाक इत्युच्यते। प्रयोगासम्बद्धदेवतापदसाहित्ये तु दुरुक्तवाको भवति, न सूक्तवाकः। तेन यावन्ति पदान्येकप्रयोगवर्त्तिदेवतापदसहितानीष्टदेवताप्रकाशनं कुर्वन्ति, तावन्त्येकः सूक्तवाकः तन्त्रपदानामपि तावद्भिरेवैकप्रयोजनवशीकृतैः सम्बन्धोपपत्तौ कृत्स्नस्य त्वेककल्पनायां प्रमाणाभावात्। एवञ्च सति पौर्णमासीप्रयोगवर्त्तिदेवतात्रयाभिधायकान्येव पदान्यभितस्तन्त्रपदोपेतान्येकः, एवममावास्यायामप्यपरः सूक्तवाक इति यथालिङ्गमेव सूक्तवाकेनेति श्रुत्युपपत्तेर्न श्रुत्या लिङ्गस्य बाधः। यदि तूभयत्रापि कृत्स्नः प्रयुज्येत, तदा असमवेतार्थपदप्रयोगेणासूक्तवाकत्वात्सूक्तवाकश्रुतिपीडैवापद्येत। तदेवं व्यवस्थिते सति हरतिरपि यथोपपादेन सूक्तवाकस्यान्यत्वात्कृत्स्नेनैव साधितो भवतीति नानुपपन्नम्। तदुक्तम्—

बिन्दौ च समुदाये च तोयशब्दो यथेष्यते।
संसर्गिद्रव्यरूपत्वात् सूक्तवाकपदं तथा॥ इति।

( तं. वा., पृ. ७७० )

न चाध्यापकाध्येतृप्रयोगविरोधः। स्वाध्यायकाले कृत्स्नस्यैव सूक्तवाकत्वात्। तथाहि—सर्वादौ सर्वान्ते च तन्त्रपदानि श्रूयन्ते। तानि प्रयोगसमवेतदेवतानुरोधेन तत्प्रकाशकपदवतामेव सूक्तवाकत्वसिद्धये आच्छिद्य सम्बन्धनीयानि। अध्यापनकाले

तु प्रयोगाभावात् सर्वप्राकृतदेवताप्रकाशकत्वात्तावानेवैकः सूक्तवाकः। अन्यथाकरणेऽसूक्तवाकत्वप्रसङ्गः।

तदुक्तम्—

सर्वप्राकृतदेवत्यः स्वाध्याये तावदिष्यते।
पठन्नन्यादृशं तत्र तं विनाशयति ध्रुवम्॥ इति।

(तं. वा., पृ. ७७०)

तस्यामेव दर्शपूर्णमासप्रकृतौ प्रयोगकाले पौर्णमास्यमावास्यासमुदायप्रयोगयोर्भेदान्निष्कृष्टतद्गतदेवतापदान्येवोहितसम्बन्धानि तन्त्रपदान्येकः सूक्तवाकः। एवञ्चाग्नेयविकृतौ सौर्ये एकस्यैव सूर्यस्य देवतात्वादेकाग्निदेवतापदस्थानोहितसूर्य्यपदवानेव तन्त्रपदोपेत एकः। तदुक्तम्—

निष्कृष्टदेवतामध्यः प्रकृतौ समुदाययोः।
सूर्य्यादिपदमध्यश्च विकृताववधार्यते॥ इति।

(तं. वा., पृ. ७७०)

अतः पौर्णमास्यमावास्ययोर्यथालिङ्गं विभज्य सूक्तवाकप्रयोग इति सिद्धम्।

प्रयोजनम्—पक्षोक्तम्। सूत्रन्तु—यथादेवतमेव सूक्तवाकस्य प्रहरणे प्रयोगः। प्रधानीयदेवताप्रकाशनापरित्यागेनैव हरणे विनियोगादित्यर्थः॥

इति षष्ठं सूक्तवाकस्य विभज्यविनियोगाधिकरणम्॥ ६॥

## अथ सप्तमं लिङ्गक्रमसमाख्यानाधिकरणम्

### लिङ्गक्रमसमाख्यानात्काम्ययुक्तं समाम्नानम् ॥३.२.२०.॥

( विषयसंशयसङ्गतयः )

इह काम्ययाज्यानुवाक्याकाण्डमुदाहरणम् । "इन्द्राग्नी रोचना दिवः "प्रचर्षणिभ्यः" "इन्द्राग्नी नवतिं पुरः" "श्नथद्वृत्रम्" इत्याद्या ऋचः । ब्राह्मणे च काम्या इष्टयः श्रूयन्ते—"ऐन्द्राग्नमेकादशकपालं निर्वपेद्यस्य सजाता वियायुः" "ऐन्द्राग्नमेकादशकपालं निर्वपेद्भ्रातृव्यवान्" "अग्नये वैश्वानराय द्वादशकपालं निर्वपेद्रुक्कामः" "अग्नये वैश्वानराय द्वादशकपालं निर्वपेत् सपत्नमभिध्रोक्ष्यन्" इत्येवमादयः । तदेता याज्यानुवाक्याः प्रति सन्देहः—किं यावत्किञ्चिदैन्द्राग्नं कर्म तत्र सर्वत्रानेनैन्द्राग्नेन याज्यानुवाक्यायुगलेन भवितव्यम् ? उतैतस्यामेवैन्द्राग्न्यामिष्टौ काम्यायाम् ? इति । एवं वैश्वानर्यौ याज्यानुवाक्याः । एवं सर्वत्रोत्सर्गापवादाभ्यां लिङ्गस्य विनियोजकत्वं निरूप्येदानीं लिङ्गस्यैव विनियोजकत्वमुत प्रमाणान्तरसापेक्षस्येति तद्गत एव विशेषश्चिन्त्यते ।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षः—यद्यप्यत्र येनैव क्रमेणैन्द्राग्नादीनि कर्माणि समाम्नातानि तेनैव क्रमेण तद्देवत्यानि काम्यसमाख्यायुक्तानि याज्यापुरोनुवाक्यायुगलान्यपि श्रूयन्ते । तथाच सति क्रमेण

समाख्यया च तदङ्गत्वेनैव याज्यानुवाक्याविनियोगो युक्तः। तथापि लिङ्गस्य क्रमात्समाख्यातश्च बलीयस्त्वादिन्द्राग्न्यादिप्रकाशनसामर्थ्यात्मकेन लिङ्गेन क्रमसमाख्ययोर्बाधितत्वादिन्द्राग्न्यादिदेवताककर्ममात्राङ्गत्वमेव याज्यानुवाक्यानां युक्तमिति। एवं प्राप्ते—

( सिद्धान्तः )

अभिधीयते—भवेदेवं यदि समान्यसम्बन्धनिरपेक्षं लिङ्गं विनियोजकं भवेत्। अग्न्यादिप्रकाशनसामर्थ्यं हि लिङ्गम्। न चाग्न्यादिस्वरूपे विनियोगः सम्भवति, वैयर्थ्यप्रसङ्गात्। सम्भवति तु तेषां यागापूर्वीयरूपे। न च सामान्यसम्बन्धमन्तरेण यागापूर्वीयत्वं लभ्यते। तेन यत्र सामान्यसम्बन्धापादकं वाक्यं प्रकरणं वा समस्ति, तत्र तदपेक्षस्यैव लिङ्गस्य विनियोजकत्वम्। अत्र तु वाक्यप्रकरणयोरभावाद्यदि क्रमसमाख्यापेक्षा न भवेत्, तदा लिङ्गस्य विनियोजकत्वमेव न स्यात्। तेनात्र क्रमेण याज्यानुवाक्यानामैन्द्राग्न्यादिकाम्येष्टिभिस्सामान्यसम्बन्धो वक्तव्यः। तत्र किं कुर्वतोऽस्याङ्गत्वमिति विशेषापेक्षायां स्वाभिधेयसमवेतार्थप्रकाशने विनियुज्यते। यत्र पुनः क्रमेण सामान्यसम्बन्धे जातेऽप्यपेक्षा, कार्यद्वयसाधारणं हि लिङ्गं सन्दिग्धत्वात् केवलं न विनियोगसमर्थं, तत्र विनिगमनासिध्यर्थं समाख्याप्याश्रीयते। यथा केवलाग्निदेवत्यस्य कर्मणः क्रम आग्नेयी ऋक्पठ्यते। तस्याश्च लिङ्गेन कार्य-

द्वयमवगम्यते—समिध्यमानाग्निप्रकाशनमिद्ध्यमानाग्निप्रकाशनञ्च । तत्र यदि याज्यासमाख्या नाश्रीयेत, तदा प्राथम्यात्समिध्यमानाग्निप्रकाशनार्थत्वमेव स्यात् । याज्यासमाख्यया तु इज्यते अनयेतीज्यमानदेवताप्रकाशनसामर्थ्यं मन्त्रस्य कल्प्यते । यद्यप्यभिधानसामर्थ्यं न देवतार्थे, किन्तु यागसमन्वयिसाधारणाग्निस्वरूपमात्रे । तथाहि—समाख्याकल्पितयागविषयसामर्थ्यानुरोधेनेज्यमानदेवताप्रकाशन एव लिङ्गेन विनियुज्यते । तदुक्तम्—

नासति क्रतुसम्बन्धे सामर्थ्यं विनियोजकम् ।
येन च क्रतुसम्बन्धस्तेन काम्यार्थता स्फुटा ॥ इति ।

( तं. वा., पृ. ७७१ )

अतः सर्वत्र सामान्यसम्बन्धपूर्वक एव लिङ्गविनियोग इति । प्रयोजनम्—पक्षोक्तम् । सूत्रन्तु—लिङ्गक्रमसमाख्याभिः काम्येष्टिसम्बद्धमेव मन्त्रसमाम्नानं न सर्वत्र यातीत्यर्थः ॥

इति सप्तमं लिङ्गक्रमसमाख्याधिकरणम् ॥ ७ ॥

## अथाष्टममाग्नेय्यधिकरणम्

अधिकारे च मन्त्रविधिरतदाख्येऽनुशिष्टत्वात् ।३.२.२१॥

( विषयसंशयसङ्गत्यः )

ज्योतिष्टोमे श्रूयते—"आग्नेय्याग्नीध्रमुपतिष्ठते, ऐन्द्र्या सदः,

वैष्णव्या हविर्द्धानम्" इति । तत्र सन्देहः—किं प्रकृताभिरेवंलिङ्गाभिरुपस्थातव्यः ? उत दाशतयीभ्य एवंलिङ्गा आगमयितव्याः ? इति । सामान्यसम्बन्धापेक्षं लिङ्गं विनयोजकमिति प्रतिपाद्येदानीं लिङ्गोपलक्षितमन्त्रविनियोजिकायाः श्रुतेरपि सामान्यसम्बन्धापेक्षं विनियोजकत्वं प्रसङ्गात् प्रतिपाद्यते । अत्र भाष्यानुसारेण प्रथममप्रकृता दाशतयीकाण्डपठिता एवाग्नेय्यादय आग्नीध्राद्युपस्थाने विनियुक्ता इति । तदयुक्तम्; प्रकृतपरित्यागे कारणाभावात् । न च कार्यान्तरविनियोग एव परित्यागे कारणम् । दाशतयपठितानामपि कार्यान्तरविनियुक्तत्वेन परित्यागप्रसङ्गात् । अस्ति हि तासामपि कार्यान्तरे विनियोगः—"यस्याश्विने शस्यमाने सूर्यो नोदियादपि सर्वा दाशतयीरनुब्रूयात्" इति । अथ कार्यान्तरविनियुक्तत्वेऽपि तासां वचनवशादपि विनियोगः, तदत्र प्रकरणपठितानामपि समानम् । यत्तु प्रकृतानां स्तोत्रशस्त्रसाधनत्वेन विशेषशास्त्रावरुद्धत्वान्न सामान्यशास्त्रविषयत्वमित्युक्तम्, तदपि दाशतयकाण्डपठितानामपि "सर्वा दाशतयीरनुब्रूयात्" इति विशेषशास्त्रावरुद्धत्वात्समानम् । अतो नात्र दाशतयकाण्डपठितानामेव विनियोग इति ।

( पूर्वपक्षः )

तत्रायं पूर्वपक्षिणोऽभिसन्धिः—आग्नेयीशब्देन हि मन्त्राणां

विनियोगः। यथा च प्रकृता आग्नेयी तथा दाशतयकाण्डपठिता अपि। तेन सर्वासामेवाग्नेय्यादिशब्दोपात्तानां प्रकृतानामप्रकृताना-श्चाग्नीध्राद्युपस्थाने विनियोग इति। ननु 'सास्य देवता' इत्यस्मिन्नर्थे तद्धितान्तमाग्नेयीपदमनुशिष्टम्। आग्नेयीशब्दस्य च प्रकृत-परामर्शकत्वात्प्रकरणपठिता एवाग्नेय्यादयो विनियुज्यन्त इति युक्तम्। अतः कथं सर्वविषयत्वम्? उच्यते—तत्रैवास्येति सर्व-नामपदस्य सन्निहितविशेषविषयत्वम्, यत्र विशेष्यस्य समुदाया-र्थस्य विशेषणीभूतावयवार्थसम्बन्धो विधीयते। यथा "आग्नेयोऽष्टाकपालः" इति। अत्र ह्यग्निसम्बन्धस्याप्राप्तत्वाद्विशेषणीभूता-ग्निसम्बन्धो विधेयः। तेनाग्निसम्बन्धात्प्रागेवास्येतिशब्दविषयो निमित्तान्तरसन्निधानत एव वक्तव्यः। यत्र तु समुदायार्थस्य विशेषणीभूतावयवार्थसम्बन्धो न विधेयः, किन्तु प्राक्सिद्धावय-वार्थसम्बद्धः समुदाय एव कार्यान्तरे विनियुज्यते, तत्र प्राक्प्रसिद्धाव-यवार्थसम्बन्धिनोऽर्थानासाद्य अस्येति श्रुतिश्चरितार्था न पश्चादागतेन सन्निधानेनान्यथाकर्त्तुं शक्यते। यथा "आग्नेय्याग्नीध्रमुपतिष्ठते" इत्यत्रैव। अत्र ह्याचा·······ग्निसमर्थो विधेयः शब्दार्थसम्बन्धस्य लोकसिद्धत्वेनाविधेयत्वात्। तेन प्रसिद्धाग्न्यादिसम्बन्धानामृचा-मविशेषणैवास्यशब्देन परामर्शात्सर्वासामेव प्रकृतानामप्रकृतानां वाग्नीध्राद्युपस्थाने विनियोग इति।

न चैवं सति "एकहायन्या क्रीणाति" इत्यत्रापि प्राक्प्रसिद्धैकहायनसम्बद्धाया एव क्रये विनियोगादविशेषेणैव गोमहिषच्छागादीनामेकं हायनमस्या इति बहुव्रीहिसमासान्तर्गतास्यशब्देनोपस्थानं वक्तव्यम्। यतस्तत्रैकहायनीवाक्ये गोपदं श्रूयते, तदर्थस्य च वाक्यार्थन्वयनियतत्वात् गौरेवैकहायनी भवतीति युक्तम्। इह तु न तथेति वैषम्यम्। तस्मादधिकृतेषु प्रकरणस्थेष्वतदाख्येषु वा प्रकृतेषु साधारण्येनैवेष्टत्वात्साधारणो मन्त्रविधिरिति। एवं प्राप्तेऽभिधीयते—

तदाख्यो वा प्रकरणोपपत्तिभ्याम्॥ ३. २. २२॥

( सिद्धान्तः )

अयमभिप्रायः—भवेदेवं यदि श्रुतेरपि सामान्यसम्बन्धनिरपेक्षाया विनियोजकत्वं भवेत्। तथाहि—"आग्नीध्रमुपतिष्ठते" इति न तावदाग्नीध्रस्वरूपेऽयमुपस्थानविनियोगो युक्तः, तत्स्वरूपे विध्यानर्थक्यात्। किन्तु ज्योतिष्टोमापूर्वीयरूपे। न च ज्योतिष्टोमापूर्वीयरूपे आग्नीध्रे ज्योतिष्टोमानपूर्वीया ऋग्विनियोक्तुं शक्यते। न हि सामान्येन श्राद्धीयत्वेनानवगतं मत्स्यमांसादिकं श्राद्धविशेषे विनियुज्यते। यथा नरभारवहनयोग्यत्वेनानिरूपितो भारविशेषवहने विनियुज्यते। तेन प्रथमं दाशतयकाण्डपठितानां-

माग्नेय्यादीनां ज्योतिष्टोमापूर्वसम्बन्धो वक्तव्यः। न चान्यत्सामान्यसम्बन्धोपपादकं वचनमस्ति। इदमेव वाक्यं सामान्यविशेषसम्बन्धापादकं वक्तव्यम्। प्रकरणाधीतानान्तु "अग्न आयाहि वीतये" इत्यादीनां प्रकरणसमाम्नानादेव ज्योतिष्टोमापूर्वसम्बन्धावगतेः। न चार्थात्तासामेव विनियोगो युक्त इति। तदुक्तम्—

क्रतुकार्यविशेषोऽयं मन्त्रस्यास्योपदिश्यते।
सामान्यप्राप्त्यपेक्षश्च विशेषो नित्यमिष्यते॥ इति।

(तं. वा., पृ. ७७८)

तेन सिद्धसामान्यसम्बन्धानामेव प्रकृतानामृचामाग्नीध्रोपस्थाने विनियोगो न तु कल्पनीयसामान्यसम्बन्धानामप्रकृतानामिति सिद्धम्।

प्रयोजनम्—पत्तोक्तम्। सूत्रन्तु—तदाख्यो ज्योतिष्टोमीयत्वेन य आख्यायते तस्यैवायं मन्त्रस्य विनियोगः प्रकरणात् प्रकृतत्वोपपत्तेरिति॥

इत्यष्टममाग्नेय्यधिकरणम्॥ ८॥

## अथ नवमं भक्षाधिकरणम्

### ( भक्षपेटिका )

### लिङ्गसमाख्यानाभ्यां भक्षार्थतानुवाकस्य ॥३.२.२५॥

( विषयसंशयसङ्गतयः )

भक्षमन्त्रः श्रूयते—"भक्षेहि मा विश दीर्घायुत्वाय शन्तनुत्वाय, एहि वसो पुरोवसो प्रियो मे हृदोऽस्यश्विनोस्त्वा बाहुभ्यां सध्यासंरायस्पोषाय वर्चसे सुप्रजास्त्वाय, नृचक्षसं त्वा देव सोम सुचक्षा अवख्येषम्, 'हिन्व मे गात्रा हरिवो गणान्मे मा वितीतृषः, शिवो मे सप्तर्षीनुपतिष्ठस्व मा मे वाङ्नाभिमतिगाः, 'मन्द्राभिभूतिः केतुर्यज्ञानां वाग्जुषाणा सोमस्य तृप्यतु, वसुमद्गणस्य रुद्रवद्गणस्यादित्यवद्गणस्य सोम देव ते मतिविदः प्रातस्सवनस्य, माध्यन्दिनस्य सवनस्य, तृतीयस्य सवनस्य गायत्रच्छन्दसस्त्रिष्टुप्छन्दसो जगतीच्छन्दसोऽग्निष्टुत इन्द्रपीतस्य नराशंसपीतस्य पितृपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामि' ( तै. ३. २. ५. ) इत्येवमादि । तत्र सन्देहः—कृत्स्न एवानुपाको भक्षणे विनियोजनीयः ? उत कश्चिदस्यावयवोऽन्यत्रापि ? इति । लिङ्गस्य विनियोजकत्वं सामान्यसम्बन्धसापेक्षमिति प्रतिपादनप्रसङ्गेन श्रुतेरपि सामान्यसम्बन्धसापेक्षविनियोजकत्वमिति प्रतिपाद्येदानीं लिङ्गगत एव विशेषः—किं साक्षादचोदितेष्वर्थाक्षिप्तेषु लिङ्गस्य विनियोजकत्वं न वेति निरूप्यते ।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षः—यद्यपि "भक्षेहि" इत्युपक्रमस्य "सध्यासम्" इत्यन्तस्य ग्रहणार्थत्वम्, "नृचक्षसम्" इत्युपक्रमस्य "अवख्येषम्" इत्यन्तस्यावेक्षणार्थत्वम्, "हिन्व मे गात्रा" इत्युपक्रमस्य "मा मे वाङ्नाभिमतिगाः" इत्यन्तस्य ग्रहणार्थत्वम्, "मन्द्राभिभूतिः" इत्युपक्रमस्य "भक्षयामि" इत्यन्तस्य भक्षणार्थत्वं प्रतीयते, तथापि सोमरसभक्षणस्यैव विहितत्वाल्लिङ्गस्य विहितविषयमन्त्रविनियोजकत्वाद्ग्रहणावेक्षणसम्यग्जरणानाञ्च भक्षणाक्षेपलब्धत्वेन लैङ्गिकविनियोगायोग्यत्वात्कृत्स्न एवायं मन्त्रो भक्षणे विनियुज्यते। किञ्चोपक्रमे "भक्षेहि" इति श्रूयते। उपसंहारे च "भक्षयामि" इति। तेनोपक्रमोपसंहारयोर्भक्षणकीर्त्तनाद्वैश्वानरवाक्यवत्कृत्स्नस्यैवानुवाकस्यैकवाक्यत्वाद्भक्षानुवाकसमाख्यानाच्च कृत्स्नस्यैव भक्षणार्थत्वम्। किञ्च ग्रहणादीनामर्थतो लोकदृष्ट्या प्राप्तत्वाल्लौकिक्येवेतिकर्त्तव्यता युक्ता। तेन लौकिकपदेनापि तत्प्रकाशनसिद्धेर्न वैदिकमन्त्रापेक्षा। तेन ग्रहणावेक्षणसम्यग्जरणादिपदानामपि विशिष्टभक्षणप्रकाशनार्थत्वमेव। अतश्चैकवाक्यता, एकोपक्रमोपसंहारगतभक्षणकीर्त्तनलिङ्गाद्भक्षानुवाकसमाख्यानाच्च कृत्स्न एव मन्त्रो भक्षणार्थ इति। एवं प्राप्तेऽभिधीयते—

तस्य रूपोपदेशाभ्यामपकर्षोऽर्थस्य चोदितत्वात्॥३।२।२६॥

( सिद्धान्तः )

अयमभिप्रायः—भवदेवं यद्यर्थप्राप्तविषये लैङ्गिकविनियोगो मन्त्रस्य न भवेत् । तथाहि—यद्यप्यत्र ग्रहणादयो न विधीयन्ते, तथापि भक्षणस्य ग्रहणादिना विना असम्भवाद्भक्षणविध्याक्षिप्तमेव ग्रहणमवेक्षणञ्चावश्यानुष्ठेयम् । सम्यग्जरणञ्च भक्षणस्यैव प्रतिपत्तिरूपस्य द्रव्यभक्षणपर्यन्तस्य विधानाद्भक्षणविधिविहितमेव यत्नान्तरसाध्यत्वात्पृथगनुष्ठेयम् । तेषाञ्चास्मृतानामनुष्ठानासम्भवात्तेषामपि वैदिकभक्षणविध्यर्थमवश्यानुष्ठेयत्वेनास्ति स्मृतिहेतुर्वैदिकोपायापेक्षा । शक्नोति च भक्षेत्ययं मन्त्रो ग्रहणादीन् प्रकाशयितुम् । तेन सूक्तवाकवद्यथालिङ्गं ग्रहणादिषु विभज्यैव मन्त्रः प्रयोक्तव्य इति ।

यत्तूपक्रमोपसंहारयोर्भक्षणकीर्त्तनादेकवाक्यत्वात्कृत्स्नस्यैव भक्षणार्थत्वमित्युक्तम् । तदयुक्तम्; विप्रकृष्टत्वात् । तथाहि—उपक्रमोपसंहारैकरूप्यादेकवाक्यत्वम्, तदनुरोधाच्चासमर्थस्य वाक्यस्य लाक्षणिकसामर्थ्यरूपं लिङ्गं कल्पनीयम्, ततोऽपि श्रुतिरिति विप्रकर्षः । ग्रहणाद्यभिधानसामर्थ्यात्साक्षादेव श्रुतिकल्पनमिति सन्निकर्षाद्यभिधानसामर्थ्यादेव विभज्यविनियोग इति । समाख्या च लिङ्गाद्दुर्बला लौकिकी चैकदेशद्वारेणाप्युपपन्नेति न किञ्चिदनुपपन्नम् ।

प्रयोजनम्—पक्षोक्तम् । सूत्रन्तु—तस्य मन्त्रस्य भागशो भक्षादपकर्षरूपाल्लिङ्गाद्ग्रहणादेरुपदिष्टत्वाच्च कथमश्रुतस्योपदिष्टत्वम् ? तत्राह—अर्थस्य भक्षणाक्षेपस्य चोदितत्वादिति ॥

इति नवमं भक्षाधिकरणम् ॥ ९ ॥

अथ दशमं मन्द्राभिभूत्यधिकरणम्

गुणाभिधानान्मन्द्रादिरेकमन्त्रः स्यात्तयोरेकार्थसंयोगात् ॥ ३. १. २७ ॥

( विषयसंशयसङ्गतयः )

भक्षानुवाके मन्द्रादिर्भक्षयाम्यन्तो भागः श्रूयते । तत्र सन्देहः—किं मन्द्रादिस्तृप्यत्वित्यन्त एकः, वसुमद्गणादिरपरः ? उत मन्द्रादिर्भक्षयाम्यन्त एक एव मन्त्रः ? इति । पूर्वापवादत्वेनेदमारभ्यते ।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षिणोऽभिसन्धिः—यथा पूर्वाधिकरणे भक्षणप्रकाशनलिङ्गेन भक्षानुवाकस्य विभज्य विनियोगो दर्शितः, तथा तृप्तेरपि भक्षणाक्षिप्तत्वात्तत्प्रकाशनलिङ्गेन मन्द्रादेस्तृप्यत्वित्यन्तस्य विभज्य तृप्तौ विनियोग इति । न च वाच्यम्—

ज्योतिष्टोमाङ्गस्य मन्त्रस्य कथं ज्योतिष्टोमानङ्गभूता तृप्तिर्द्वारमिति। यतो न ह्यङ्गमेव सर्वत्र मन्त्रद्वारं भवति। अनङ्गीभूतफलप्रकाशकस्य मन्त्रस्यानङ्गत्वप्रसङ्गात्। किन्तर्हि? सम्बन्धमात्रम्। अस्ति चात्राप्यङ्गभूतभक्षणाद्वारेण सम्बन्ध इति। तेन मन्द्रादिस्तृप्यत्वित्यन्तो विभज्य तृप्तौ प्रयोक्तव्य इति। एवं प्राप्ते—

अभिधीयते—भवेदेवं यद्यनुनिष्पन्नायास्तृप्तेः प्रकाशनं केनाप्यंशेनोपयुज्यते। तथाहि—अनुष्ठानोपयुक्तमन्त्रस्य प्रकाशनमनुष्ठानोपयोगितावदेकानुष्ठेयफलप्रकाशनेन? तदप्रकाशनेन वा? यथा खल्वनुष्ठेयमप्रकाशितं नानुष्ठीयते, तथा निष्फलमपि नानुष्ठीयत एव। तेन फलप्रकाशनमप्यनुष्ठानोपयुक्तमेव। तृप्तिस्तु नानुष्ठेया, नाप्यनुष्ठेयं फलम्। किन्तूपयुक्तविशिष्टसोमरसप्रतिपत्त्यर्थमनुष्ठानाङ्गभक्षणादनुनिष्पन्नासौ न मन्त्रेण प्रकाशनीयेति न तत्प्रकाशनार्थं विभज्य मन्त्रस्य प्रयोग इति। तदुक्तम्—

येषां पृथगनुष्ठानमर्थाक्षिप्तं प्रतीयते।
तेषां मन्त्रप्रकाश्यत्वं नानुनिष्पादिनां भवेत्॥ इति।

(तं. वा., पृ. ७८६)

तेन यद्यपि तृप्यत्विति पृथक्पदमाख्यातार्थः स्वतन्त्रः प्रतीयते, तथापि पृथक्प्रकाशनानर्हत्वात्प्रार्थनायां प्राप्तकालतायां वा लोट्प्रत्ययो वर्णनीयः। तदयमर्थः—अनेन भक्षणेन वागिन्द्रियं तृप्तं

भविष्यतीति प्रार्थना । अथवानेन भक्षणेन वागिन्द्रियतृप्तेः प्राप्तः काल इति । एवं मन्द्रादिर्भक्षयाम्यन्त एक एवायं मन्त्रो भक्षणे प्रयोक्तव्य इति सिद्धम् ।

प्रयोजनम्—पक्षोक्तम् । सूत्रन्तु—भक्षणगुणत्वेन तृप्तेरविधानान्मन्द्रादिर्भक्षयाम्यन्त एको मन्त्रः । तयोस्तृप्तिभक्षणप्रकाशकयोर्भागयोरेवार्थसंयोगादेकभक्षणार्थसंयोगादित्यर्थः ॥

इति दशमं मन्द्राभिभूत्यधिकरणम् ॥ १० ॥

## अथैकादशमिन्द्रपीताधिकरणम्

लिङ्गविशेषनिर्देशात्समानविधानेष्वनैन्द्राणाममन्त्रत्वम्

॥ ३. २. २८ ॥

( विषयसंशयौ )

एष एव मन्त्र उदाहरणम् । इह च प्रदानान्यैन्द्राण्यनैन्द्राणि च विद्यन्ते । तेषां भक्षणान्यपि सन्ति । तत्र सन्देहः—किमैन्द्रेष्वनैन्द्रेषु च मन्त्रः ? उतैन्द्रेष्वेव मन्त्रः अनैन्द्राणाममन्त्रकं भक्षणमिति । लिङ्गसमाख्याभ्यां भक्षणशेषभूतो मन्त्र इति तावन्निरूपितम् । इन्द्राद्यनेकदेवताभ्यस्तस्य सोमरसप्रदानस्य शेषभक्षणान्यपि प्रतिप्रधानमभ्यसनीयानीत्यपि स्थितम् । तत्र किमैन्द्रप्रदान-

शेषभूतभक्षण एवायं मन्त्रोऽङ्गम्? उतैन्द्रानैन्द्रभक्षणाङ्गमितीदानीं प्रसङ्गाच्चिन्त्यते।

( पूर्वपक्षः )

तत्रायं पूर्वपक्षिणोऽभिसन्धिः—तत्र खलु मन्त्रे "सोमस्य प्रातस्सवनस्येन्द्रपीतस्य भक्षयामि" इति श्रूयते। तत्र प्रातस्सवनस्य यस्सोमस्तस्याहं भक्षयामीति तावद्वैयधिकरण्यं व्यवस्थितम्। इन्द्रपीतस्येति पदस्य तु किं सोमसमानाधिकरण्यम्? उत सवनसामानाधिकरण्यमिति सन्देहे सवनसामानाधिकरण्यम्—इन्द्रेण पीतः सोमो यस्मिन्सवने तदिन्द्रपीतं सवनमिति। (१)......रसो यः सोमश्चानेकपदविक्षिप्तत्वादिन्द्रेण पीत इति तृतीयान्ततत्पुरुषसमासाद्दुर्बलः। तेन समासबलीयस्त्वात् प्राधान्याच्च सोमस्य तस्यैवेन्द्रपीतपदेनाभिधानम्। न चानैन्द्रः सोम इन्द्रपीतशब्देनाभिधातुं शक्यत इति लिङ्गेनैन्द्रप्रदानशेषभूतसोमभक्षण एवायं मन्त्रो विनियुज्यते। न चानैन्द्रेषूहेन प्रयोग इति वक्तव्यम्। प्रकृतावूहासम्भवात्। तेनेन्द्रपीतस्येति लिङ्गविशेषनिर्देशात्समानविधानेषु प्रकृतिविकारभावरहितेषु प्रदानेष्वनैन्द्राणाममन्त्रत्वमिति। एवमुपक्रम्य पूर्वपक्षान्तरमभिधीयते—

यथादेवतं वा तत्प्रकृतित्वं हि दर्शयति ॥३. २. २९॥

अस्यायमभिप्रायः—यद्यप्यनैन्द्रेषु मन्त्रोऽयमसमवेतार्थः, तथाप्यूहेनैव तेषु प्रयोक्तव्यः। कर्मैकत्वेऽपि प्रदानानां भिन्नानां प्रकृतिविकारभावोपपत्तेः। तथाहि—उपदिष्टधर्मो हि सर्वः प्रकृतिर्भवेत्। अनुपदिष्टधर्मश्च साकाङ्क्षा विकृतिः। इह च "इन्द्राय त्वा वसुमत" इति मन्त्रेण सोमग्रहणमानयोरैन्द्रप्रदानार्थत्वमेवावगम्यते। यत्र सोमस्तद्धर्मोऽपि तत्रैवेत्यनैन्द्राणां प्रदानानां सोमधर्मवत्त्वम्, इतराणि तु साकाङ्क्षाण्यतिदेशेन गृह्णन्ति। चोदनासामान्यात्तद्विकारत्वेन धर्मप्राप्तौ सत्यां यथादेवतमूहेनैव मन्त्रप्रयोग इति। ननु "सोमेन यजेत" इत्युत्पत्तेः सर्वेन्द्रवाय्वादिग्रहणसाधारणत्वात्सोमप्राप्तेरनैन्द्रेष्वपि सोमः तद्वारेण सोमधर्मश्च प्राप्त एव। अतः प्रकृतिविकारत्वासम्भवेनोहाभावादमन्त्रकमेवानैन्द्राणां ग्रहणं मानञ्च भविष्यति। मैवम्; साधनभूतमन्त्रवशादेव सामान्यश्रुतस्यापि सोमस्य नियमोपपत्तेः, विद्यारूपसाधनवशादिव तत्साध्यभूतस्याग्निहोत्रादेस्त्रैवर्णिकनियतत्वमिति। तेनानैन्द्रेष्वतिदेशादेव सोमधर्मप्राप्तिर्वक्तव्या। तथा च सति यथादेवतमूहेनैव मन्त्रप्रयोगः। 'तत्प्रकृतित्वं हि दर्शयति' इत्यनेन सूत्रावयवेन लिङ्गदर्शनमुक्तम्। तच्च भाष्यवार्त्तिकयोरेव सुव्यक्तमिति॥

इत्येकादश इन्द्रपीताधिकरणैकदेशः॥ ११॥

अथ द्वादशं पुनरभ्युन्नीताधिकरणम्

## पुनरभ्युन्नीतेषु सर्वेषामुपलक्षणं द्विशेषत्वात् ॥३.२.३०॥

( विषयसंशयौ )

अत्र विषयभाष्यमविषयत्वाद्विस्तरत्वाच्चोपपाद्यते । तदर्थ एव लिख्यते । ज्योतिष्टोम ऐन्द्राश्चमसाः । तेषु ब्रह्मादीनामृत्विजां चत्वारश्चमसाः । ते वषट्कारानुवषट्कारा ऐन्द्रग्रहणमानाभ्यामिन्द्रे पर्यवसिताः । अपरे च मैत्रावरुणादीनामृत्विजां षट् चमसाः । तेषु चेन्द्रोद्देशेन वषट्कारमात्रे हुते अर्द्धावशिष्टे च द्रोणकलशान्मित्रावरुणाद्युद्देशेन गृहीतः सोमरसोऽभ्युन्नीतः । तेन च मित्रावरुणाद्या देवताः षडिज्यन्ते । तानि च मित्रावरुणाद्युद्देशेन क्रियमाणानि प्रदानानीन्द्रप्रदानविकृतिभूतानीति पूर्वन्यायेनैव सिद्धम् । तेषां षट्चमसानां शेषभक्षणमन्त्रे सन्देहः—किं मित्रावरुणपीतस्येत्यूहः कर्त्तव्यः ? उतेन्द्रमित्रावरुणपीतस्य ? इति । इदानीं पूर्वपक्षोक्तन्यायानुसारेणैव कृत्वाचिन्तयोहविषयविशेषश्चिन्त्यते ।

अत्र सिद्धान्तेनोपक्रमते । इन्द्रोद्देशेन हुतशेषवत्सु चमसेषु देवतान्तरार्थं द्रोणकलशादानीय निक्षिप्तः सोमरसः पुनरभ्युन्नीत इत्युच्यते । तस्य देवतान्तरोद्देशेन होमेऽपि सति तच्छेषत्वादूहेन सर्व एवेन्द्रमित्रावरुणादय उपलक्षणीया इति ।

अपनयाद्वा पूर्वस्यानुपलक्षणम् ॥ ३. २. ३१ ॥

( पूर्वपक्षः )

अत्रायं पूर्वपक्षः—यद्यपि चमसेष्वैन्द्रशेषत्वमस्ति, तथापि मित्रावरुणोद्देशेन प्रक्षिप्तरससंसर्गादेकतापन्नो रसः कृत्स्न एव मित्रावरुणार्थाश्रावणप्रत्याश्रावणाभ्यामपनीतेन्द्रसम्बन्धः प्रदानकाले मित्रावरुणार्थ एव जातः। तेन पूर्वेन्द्रसम्बन्धस्यापनीतत्वात्प्रकृतौ चापनीतदेवतासम्बन्धस्यानुपलक्षणान्नेन्द्र उपलक्षयितव्यः, किन्तु मित्रावरुणावेव। तेनेन्द्रस्यापनयान्नेन्द्र उपलक्षणीय इति। एवं प्राप्तेऽभिधीयते—

अग्रहणाद्वाऽनपायः स्यात् ॥ ३. २. ३२ ॥

अयमभिप्रायः—भवेदेवं यदीन्द्रसम्बन्धोऽपनीतो भवेत्। देवतान्तरसम्बन्धेन हि पूर्वदेवतासम्बन्धो नापनीतः। देवतान्तरसम्बन्धश्च द्रोणकलशादभ्युन्नीयमानस्यैव सोमरसस्य। तस्यैव ग्रहणवेलायां देवतान्तरसम्बन्धस्य शास्त्रेण प्रतिपादितत्वात्। यथागृहीतस्यैव द्रव्यस्य देवतोद्देशेन त्यागात्। आश्रावणप्रत्याश्रावणयोरपि तदर्थत्वमेव। तदुक्तम्—

देवतां यां यदुद्दिश्य द्रव्यं स्वत्वेन गृह्यते।
तस्यास्तदेव सम्बन्धि नान्यत्तन्मध्यपात्यपि ॥ इति।

( तं. वा., पृ. ७६० )

तेन यद्यपि संसर्गिद्रव्यत्वेन द्रव्यस्य विभागो नावगम्यते, तथापि शास्त्रागतस्य विभागस्य विद्यमानत्वादिन्द्रार्थगृहीतस्य वचनमन्तरेण मित्रावरुणाद्यर्थत्वेन सङ्कल्पयितुमशक्यत्वान्नानेन सम्बन्धोऽपनीत इति इन्द्रशेषस्यापि विद्यमानत्वात्सोऽप्युपलक्षयितव्य इति । तस्मादिन्द्रमित्रावरुणपीतस्येत्येवमूहः कर्त्तव्य इति ।

ननु प्राकृतपदोद्धारेण तस्य स्थाने पदान्तरनिक्षेपः खलूहः । इन्द्रमित्रावरुणपीतस्येति तु प्रयोगे प्राकृतमिन्द्रपदं विद्यत एवेति कथमूहः ? उच्यते—इन्द्रमित्रावरुणशेषयोर्भिन्नत्वाद्भेदेन भक्षणमन्त्रस्यापि प्रयोगो भवेत्, स नैवोचितः । तत्रेन्द्रशेषत्वलक्षणार्थेन्द्रपदस्थाने मित्रावरुणादिपदोहो नैव युक्तः । किन्तु शेषयोर्मिश्रितत्वात् तन्त्रे सत्युभयोरपि तन्त्रेणैवात्र प्रयोगः । तत्रेतरपदानां साधारणत्वाद्भवतु तन्त्रोच्चारणम् । देवतावाचकस्य तु यथावस्थितेन्द्रपदव्यवहितमित्रावरुणपदस्यैव भिन्नत्वेन तन्त्रोच्चारणासम्भवादूहितानूहितपदयोरावृत्तमेवोच्चारणमिति न दोषः । तेनेन्द्रमित्रावरुणपीतं भक्षयामीत्येवंरूप एव मन्त्रप्रयोग इति सिद्धम् । कृत्वाचिन्ताधिकरणत्वान्नात्र पृथक् प्रयोजनम् ।

सूत्रन्तु—इन्द्रार्थस्य शेषस्य मित्रावरुणार्थमग्रहणो तत्रेन्द्रस्य देवताया अनपायः स्यादिति ॥

इति द्वादशं पुनरभ्युन्नीताधिकरणम् ॥ १२ ॥

## अथ त्रयोदशं पात्नीवताधिकरणम्

### पात्नीवते तु पूर्ववत् ॥ ३. २. ३३ ॥

( विषयसंशयौ )

अस्ति पात्नीवतो ग्रहः—"यदुपांशुपात्रेण पात्नीवतमाग्रयणात् गृह्णाति" इति । द्विदेवत्यानां हि शेषा आग्रयणस्थालीमुन्नीताः, ततः पात्नीवतो गृह्यते । अथ हुते पात्नीवते तच्छेषे भक्ष्यमाणे भवति सन्देहः—किमैन्द्रवायवाद्या उपलक्षयितव्याः ? उत न ? इति । पूर्वापवादत्वेनेदमारभ्यते ।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षः—यद्यपि ज्योतिष्टोम आग्रयणस्थालीनामधेयं सोमपात्रम्, तथाप्यभिषुतः पूतः सोमरसो द्रोणकलशेष्वेव निक्षिप्तः समस्ति । तत्रैव च द्विदेवत्यानामैन्द्रवायवादीनां हुतशेषः सोमरसो वचनान्निक्षिप्तः । ततः श्रूयते—"आग्रयणादुपांशुपात्रेण पात्नीवतं गृह्णाति" इति । अत्र वचनेनाग्रयणसम्बन्धिनः सोमरसस्य पात्नीवते ग्रहणं विधीयते । तत्र द्विदेवत्यसम्पातायातस्य तेन तस्यानपनीतपूर्वदेवतात्वाच्च पूर्वाधिकरणन्यायेनैव शेषभक्षणे इन्द्रवायुपत्नीवत्पीतस्येत्येव ऊहेन मन्त्रप्रयोगः कर्त्तव्य इति । एवं प्राप्तेऽभिधीयते—

### ग्रहणाद्वापनीतं स्यात् ॥ ३. २. ३४ ॥

( सिद्धान्तः )

अयमभिप्रायः—भवदेवं यद्याग्रयणपात्रसम्बन्धित्वमत्र पत्नीसम्बन्धित्वे निमित्तमिति श्रूयेत, किन्त्वाग्रयणादित्यपादानश्रुतेराग्रयणादपेतत्वमात्रम् । तच्च द्विदेवत्यशेषस्यापि सम्पातायातस्यास्तीति तदपि पत्नीवद्देवतार्थमेव । तदुक्तम्—

योऽपैत्याग्रयणात्सोमः स पात्नीवत इष्यते ।
शेषश्चैव ततोऽपैति तेन सङ्कल्प्यते तदा ॥ इति ।

( तं. वा., पृ. ७६१. )

पूर्वाधिकरणे तु मित्रावरुणाद्यर्थग्रहणं भवेत्, किन्तु गृहीतस्य पश्चात्सम्पातायातस्य तत्संसर्गः । अतोऽनपनीतपूर्वदेवतासम्बन्धस्येन्द्रशेषस्य भवतु पूर्वदेवतोपलक्षणम् । इह तु पत्नीवद्देवतोद्देशेन मिश्रितस्यैव वचनवशेन देवतान्तरार्थग्रहणाद्यथागृहीतस्यैव च सङ्कल्पनाद्युक्तः पूर्वदेवतापनयः । तदुक्तम्—

यस्य ग्रहणवेलायां सन्निधिः सोऽपनीयते ।
संहृतेन हि सङ्कल्पः कर्त्तव्यस्तत्र चोद्यते ॥ इति ।

( तं. वा., पृ. ७६१ )

तेन पत्नीवत्पीतस्येत्येतावन्मात्रमेवोहनीयमिति ।

प्रयोजनम्—न वक्तव्यमेव । सूत्रन्तु—पत्नीवदर्थं यद्द्विदेवत्यस्यापि शेषस्य ग्रहणादपनीतं द्विदेवतासम्बन्धित्वमिति ॥

इति त्रयोदशं पात्नीवताधिकरणम् ॥ १३ ॥

## अथ चतुर्दशं त्वष्ट्रधिकरणम्

### त्वष्टारं तूपलक्षयेत्पानात् ॥ ३. २. ३५ ॥

( विषयसंशयौ )

अस्ति पात्नीवतः सोमः । तत्र मन्त्रः—"अग्ना इ पत्नीवन् सजूर्देवेन त्वष्ट्रा सोमं पिब" इति । तत्र सन्देहः—किं त्वष्टोपलक्षयितव्यः ? उत न ? इति । तस्मिन्नेव पात्नीवते किं त्वष्टुरपि मान्त्रवर्णिकं देवतात्वमस्ति नास्तीति तत्प्रसङ्गाच्चिन्त्यते ।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षः—यद्यपि "उपांशुपात्रेण पात्नीवतं गृह्णाति" इति निरपेक्षस्यैव पत्नीवतस्तद्धिताद्देवतात्वमवगम्यते, तथाप्यस्य मन्त्रस्य तावदयमर्थः—हे अग्ने पत्नीवन् त्वं सोमं पिबेति । न च परमार्थतः पत्नीवतोऽग्नेः सोमपातृत्वं सम्भवति, किन्तूद्देश्यत्वम् । तेन सम्भवादुद्देश्यगतमेव सहभावमवेक्ष्य स प्रतिपाद्यत इति गम्यते । न च सहभावे सति तद्धितावगतनिरपेक्षपत्नीवद्देवताविरोधः । यजेतेत्याख्याताधिगतनिरपेक्षयजमानकर्तृत्वस्येव वचनात् पत्न्यनुप्रवेशवदुपपत्तेः । तेन त्वष्ट्रा सहितस्य पत्नीवतः शेषं भक्षयामीत्यूहे सति त्वष्टाप्युपलक्षयितव्य इति । एवं प्राप्तेऽभिधीयते—

### अतुल्यत्वात्तु नैवं स्यात् ॥ ३. २. ३६ ॥

अयमभिप्रायः—भवेदेवं यदि तद्धितमन्त्रयोस्तुल्यवद्देवताप्रतिपादकत्वं भवेत् । न त्वेवमस्ति । तद्धितेन हि देवतात्वं निरपेक्षस्य पत्नीवतोऽभिधानेनैव प्रतिपाद्यते । मन्त्रवर्णात्त्वनुपपत्त्या कल्पनीयम् । न च श्रौतकाल्पनिकयोस्तुल्यत्वमस्ति । एवमपि यथाकथञ्चित्कल्प्येतापि यद्यन्यसापेक्षा तद्धितोत्पत्तिर्भवेत् । न च मन्त्रस्यापि त्वष्टृदेवतात्वार्थकल्पनामन्तरेणानङ्गत्वम् । पत्नीवदभिधानेनैवाङ्गत्वोपपत्तेः । न च सहपातृत्वनिर्देशान्यथानुपपत्त्या त्वष्टुरपि देवतात्वम् । सहपातृत्वनिर्देशस्य तद्धितविरोधिनः स्तुत्यर्थत्वेनाप्युपपत्तेः । नाप्येकक्रियान्वयेनैव सहशब्दप्रयोगोऽयमैकान्तिकः । 'सहैव दशभिः पुत्रैर्भारं वहति गर्दभी' इत्यादिषु व्यभिचारात् । तत्र ह्येतावानर्थोऽवगम्यते—सत्सु दशसु पुत्रेषु सैव गार्दभी भारं वहति । तदुक्तम्—

मन्त्रचोदकयोस्तावदतुल्यत्वं बलाबले ।
पातृत्वेनाप्यतुल्यत्वं सहमात्राभिधानतः ॥ इति ।

(तं. वा., पृ. ७६३)

यजेतेत्यत्र त्वेकवचनेन कर्तुरेकत्वमवगम्यते । न तु तद्धितान्तादिवाक्यनिरपेक्षत्वम् । न च पत्नीसहभावविधानञ्चान्यथोपदर्शयितुं शक्यते । तेन तत्र भवतु सहभावेन पत्न्यनुप्रवेशः । इह तु न तथेति वैषम्यम् । अतो न त्वष्टोपलक्षणीय इति ॥

प्रयोजनम्—न वक्तव्यमेव । सूत्रन्तु—अतुल्यत्वात्तद्धितमन्त्रयोर्न त्वष्टुर्देवतात्वमिति ॥

इति चतुर्दशं त्वष्ट्रधिकरणम् ॥ १४ ॥

अथ पञ्चदशं त्रिंशदधिकरणम्

त्रिंशच्च परार्थत्वात् ॥ ३. २. ३७ ॥

( विषयसंशयौ )

तस्मिन्नेव पात्नीवते मन्त्रे—"एभिरग्ने सरथं याह्यर्वाङ् नानारथं वा विभवो ह्यश्वाः । पत्नीवतस्त्रिंशतं त्रींश्च देवाननुष्वधमावह मादयस्व" इति । तत्र संशयः—किं त्रयस्त्रिंशतो देवानामुपलक्षणम् ? उत न ? इति । पूर्वन्याय एवोदाहरणान्तरे अधिकाशङ्कां निराकर्त्तुमतिदिश्यते ।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षः—अयं ह्यत्र मन्त्रार्थः—हे अग्ने एभिर्देवैः सहार्वाचीनं समं वा रथमारुह्यायाहीति । आटो व्यवहितसम्बन्धः सम्भवति । ते अश्वाः प्रभावयुक्ता भवन्ति । आगत्य च पत्नीवतस्त्रयस्त्रिंशद्देवाननुष्वधमावह, आहूय मादयस्व तर्पय एभिर्विशिष्ट इति यावत् । तेनात्र त्रयस्त्रिंशद्देवानां तर्पणीयत्वेन प्राधान्यावगमात्तेषां देवत्वमेव । पूर्वाधिकरणे तु 'सहयुक्तेऽप्रधाने' (पा. सू. २. ३. १९)

इत्यप्राधान्यानुशिष्टतृतीयानिर्देशात्त्वष्टुर्न देवतात्वम्, किन्तु स्तुत्यर्थत्वम्। स्वभावकीर्त्तनमेवेति शेषः। न चात्राग्नेरपि परिवेष्टृत्वेनाभोक्तृत्वात्त्वष्टृवददेवतात्वमिति वाच्यम्। परिवेष्टृत्वस्य भोक्तृत्वाविरोधात्। यथा लोकेऽपि गणभोक्तैव कश्चिद्भुक्तवान् भोक्ष्यमाणो वा परिवेष्टा भवतीति। न च "आग्रयणात्पात्नीवतं गृह्णाति" इतिवद्वा कश्चिद्विशेषोऽस्ति, येनाग्नेर्देवतात्वं नान्यस्येत्येवं निश्चीयते। तेन "पात्नीवतं गृह्णति" इत्यत्र तद्धितेन पत्नीवन्मात्रस्यैव देवतात्वाभिधाने सति कोऽसौ (?) पत्नीवत्सम्बन्धावगमात्समुच्चितयोरपि देवतात्वम्। तेनाग्निवत्त्रयस्त्रिंशद्देवा अप्युपलक्षणीया इति। एवं प्राप्ते—

( सिद्धान्तः )

अभिधीयते—भवेदेवं यदि तद्धितान्तपात्नीवतपदमेकस्मिन्नग्नौ त्रयस्त्रिंशति देवेषु च तुल्यवत्प्रवर्त्तेत। न त्वेतदस्ति। तथाहि—पत्नीवान् देवता अस्येति यदि विग्रहस्तदा शीघ्रप्रतीतिवशादेक एवाग्निर्देवता। अथ पत्नीवन्तो देवता अस्येति विग्रहः, तदा त्रिंशतो देवतानां प्रत्येकसमवेतैकैकत्वत्रयस्त्रिंशतो देवतापर्यालोचनेन भिन्नपदोपात्ताग्निपर्यालोचनेनाच्छिप्तविलम्बितप्रतीतिर्भवेत्। न च शीघ्रप्रतीतिसम्भवे विलम्बितप्रतीतिरात्मानं लभते। तेनाग्निरेव पत्नीवद्देवतेति। न च मन्त्रवर्णावगतभोक्तृत्वान्यथानुपपत्या त्रयस्त्रिंशतो देवानामपि देवतात्वम्। पारमार्थिकभोक्तृत्वाभा-

वेन स्तुतिपरत्वे सति विधिवाक्यपर्यालोचनेन विहिताग्नेरैश्वर्यप्रका-
शनपरत्वेनोपपत्तेः—एवंभूतोऽयमग्निः त्रयस्त्रिंशद्देवान् भोजयतीति ।
तदुक्तम्—

चोदनार्थानुरोधेन मन्त्रः सर्वः प्रवर्त्तते ।
तेन त्वष्टृवदेवात्र त्रिंशताग्नेरभिष्टुतिः ॥ इति ।

( तं. वा., पृ. ७६५ )

तस्मात्त्वष्टृवदेव त्रयस्त्रिंशदपि नोपलक्षणीया इति ।

प्रयोजनम्—न वक्तव्यम् । सूत्रन्तु—त्रिंशदपि नोपलक्षणीयाः परार्थत्वाद्विहिताग्निस्तुत्यर्थत्वादित्यर्थः ॥

इति पञ्चदशं त्रिंशदधिकरणम् ॥ १५ ॥

अथ षोडशमनुवषट्काराधिकरणम्

वषट्कारश्च कर्त्तृवत् ॥ ३. २. ३८ ॥

( विषयसंशयौ )

अस्त्यत्र वषट्कारदेवता "सोमस्याग्ने वीहीत्यनुवषट्करोति" इति । तत्र सन्देहः—किमनुवषट्कारदेवतोपलक्षणीया नेति । अत्रापि स एव न्यायः केनचिद्विशेषेणोदाहरणान्तरेऽतिदिश्यते ।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षिणोऽभिसन्धिः—भवतु त्रयस्त्रिंशतो देवतानां

देवतात्वाभावादनुपलक्षणम्। इह तु "सोमस्याग्ने वीहि" इत्यस्य होममन्त्रस्य करणत्वेनानुवषट्कारे विनियोगादग्नेश्चोदनया मन्त्रवर्णाच्चानुवषट्कारदेवतात्वमैकान्तमेव । तस्मादनुवषट्कारशेषभूतसोमभक्षणे अग्निरप्युपलक्षणीय एवेति । एवं प्राप्ते—

( सिद्धान्तः )

अभिधीयते—भवेदेवं यदि द्रोणकलशादनुवषट्कारदेवतार्थं सोमो गृह्यते । किन्तर्हि ? प्रधानदेवतार्थेन । अनुवषट्कारो हि प्रतिपत्तिकर्म, तेन हि प्रधानदेवतार्थमाहृतमेव द्रव्यं प्रतिपाद्यते । अतो यथा पूर्वतः पाताध्वर्युर्होता वा इतरपानान्तरेण प्रतिपत्तिकर्मसम्बन्धित्वेन नोपलक्ष्यते, तथानुवषट्कारदेवतापि । तदा ह्युपलक्ष्येत यदि च प्रकृतावैन्द्रप्रतिपत्तिसम्बन्धिन उपलक्षणं कृतं भवेत् । न चैवमस्ति । तदुक्तम्—

यथा पश्चात्तनः पाता पूर्वपात्रुपलक्षणम् ।
अप्राकृतं न कुर्वीत तथैनामपि देवताम् ॥ इति ।

(तं. वा., पृ. ७६७)

तेन त्वष्टृवत्तूयस्त्रिंशद्वदनुवषट्कारदेवताप्यग्निर्नोपलक्षणीय एवेति ।

प्रयोजनम्—न वक्तव्यमेव । सूत्रन्तु—पानकर्तृवदनुवषट्कारदेवतापि नोपलक्षणीयेति ॥

इति षोडशमनुवषट्काराधिकरणम् ॥ १६ ॥

## अथ सप्तदशमनैन्द्राणाममन्त्रकभक्षणाधिकरणम्

### छन्दः प्रतिषेधस्तु सर्वगामित्वात् ॥ ३.२.३९. ॥

स्थितादुत्तरमुच्यते । नैतदस्ति, यदुक्तमूहेन मन्त्रवद्भक्षणं कर्त्तव्यमिति । द्वेधा हि पूर्वपक्षितम्—अमन्त्रकं भक्षणम् , ऊहेन वा । तत्रोहपूर्वपक्षाभ्युपगमेनैव पञ्च विचारान् परिसमाप्येदानीमूहपूर्वपक्षमेव निराचष्टे ।

अयमत्र सिद्धान्तिनोऽभिसन्धिः—प्रकृतिविकारभावे हि सत्यूहो भवति । न चैकस्यैव ज्योतिष्टोमस्य प्रकृतिविकारभावः सम्भवति । न च ग्रहणाभ्यासाः पृथक्कर्माणि, येन तेषां प्रकृतिविकारभावो भवेत् । न च तेषां मध्ये केषाञ्चिदेव सोमसमत्वमन्येषाञ्च प्रकृतिविकारभावः सम्भवति । सर्वेषामेव यागद्वारेण युगपत्सर्वधर्मत्वात् । तदुक्तम्—

तुल्यप्रकरणा ह्येषा ज्योतिष्टोमक्रियेष्यते ।
प्रकृतिर्विकृतिश्चेष्टा न चात्मैवात्मनः क्वचित् ॥ इति ।

(तं. वा., पृ. ७४८)

ननु "इन्द्राय वसुमते त्वा गृह्णामि" इति मन्त्रस्य ग्रहणद्वारेणेन्द्रप्रदानार्थत्वात्तद्वशेनैन्द्रप्रदान एव सोमधर्मनियमः, आहवनीयसम्बन्धवशेनेव त्रैवर्णिकस्याग्निहोत्रादिनियम इत्युक्तम् । मैवम् ; भवत्वनारभ्योत्पन्नस्याहवनीयस्य "यदाहवनीये जुह्वति"

इत्यनेनानारभ्यवादेन सर्वहोमार्थस्य त्रैवर्णिकमात्रसम्बन्धस्य होमनियामकत्वम्, आहवनीयव्यतिरेकेण होमासम्भवात् तस्य च त्रैवर्णिकमात्रव्यवस्थितत्वात्। न चास्य तद्वत्सोमार्थत्वम्, येन मन्त्रेण विनान्यः सोमो ग्रहीतुमेव न शक्यते, किन्तु लिङ्गप्रकरणाभ्यामैन्द्रसोमार्थत्वमेव मन्त्रस्य। तेनैन्द्र एव सोमो मन्त्रेण गृह्यते। इतरेषाञ्चामन्त्रकं ग्रहणमिति प्रथम एव पूर्वपक्षः साधीयानिति।

सूत्रन्तु—पूर्वोक्तलिङ्गदर्शनसमाधानार्थत्वाच्च भाष्यवार्तिकयोस्सुव्यक्तमिति ॥

इति सप्तदशमनैन्द्राणाममन्त्रकभक्षणाधिकरणम् ॥ १७ ॥

अथाष्टादशमैन्द्राग्नभक्षस्यामन्त्रकत्वाधिकरणम्

**ऐन्द्राग्ने तु लिङ्गाभावात्स्यात् ॥ ३. २. ४० ॥**

अस्ति तत्रैन्द्राग्नः सोमः—"ऐन्द्राग्नं गृह्णाति" इति। तत्र सन्देहः—मन्त्रवद्भक्षणममन्त्रकं वेति। ऐन्द्राणां समन्त्रकं भक्षणमनैन्द्राणाममन्त्रकमिति प्रथमपूर्वपक्षे स्थिते इदानीं क्त्वाचिन्तया-विचारान्तरमारभ्यते।

(पूर्वपक्षः)

अत्रायं पूर्वपक्षिणोऽभिसन्धिः—भवत्वनैन्द्राणाममन्त्रकं

भक्षणम्। ऐन्द्राग्ने त्विन्द्रकर्तृकस्य यागस्य विद्यमानत्वाच्छेषभक्षणे मन्त्रः प्रयोक्तव्य एव। ननु द्विदेवत्यस्यैकेन व्यपदेशः चतुर्द्धाकरण एव निराकृतः। तथाहि—तत्र सापेक्षस्याग्नेराग्नेय इति तद्धितेनोपन्यस्तत्वादग्नीषोमीययोः पुरोडाशयोर्नाग्नेयशब्देनोपादानम्। तथेन्द्रपीत इति समासस्यापि सापेक्षादिन्द्रपदानुपादानान्नाग्निसापेक्षेन्द्रविषयत्वमिति। तेनैव गतत्वान्नारब्धव्यमिदमधिकरणम्। नैवम्; एवमत्र पूर्वपक्षवादी मन्यते—अग्निरस्य देवतेत्याग्नेयः। देवतात्वञ्चोद्देशरूपयजमानसङ्कल्पविषयत्वम्। तच्चाग्नेयतद्धितेनास्य निरपेक्षाग्नेरेवोपात्तमिति द्विदेवत्यपुरोडाशं न प्रतिपादयतीत्युक्तम्। इन्द्रेण पीत इत्यत्र तु सम्प्रदानकृतयागरूपव्यापारविषयत्वम्। तच्चोभयोद्देशपरित्यक्तस्यापि स्वकीयभागेऽन्यनिरपेक्षस्यापि सम्भवत्येव। तथैन्द्राग्ने मन्त्रलिङ्गसद्भावादिन्द्रपीतस्येति मन्त्रः प्रयोक्तव्य एवेति। एवं प्राप्तेऽभिधीयते—

एकस्मिन्वा देवतान्तराद्विभागवत् ॥ ३. २. ४१. ॥

( सिद्धान्तः )

अयमभिप्रायः—भवेदेवं यदीन्द्रपीतशब्दोऽयं मुख्यो भवेत्। न चैतत्सम्भवति। देवतायाः सोमरसपानासम्भवात्। पानेऽपि च हुतावशिष्टस्यापीतत्वेन इन्द्रपीतव्यपदेशानर्हत्वात्। न

चान्यस्मिन् पीते अन्यः पीत इति व्यपदेष्टुं शक्यते। तेन लक्षणया सङ्कल्पपरोऽयम्। इन्द्रपीतस्येतीन्द्राय सङ्कल्पित इत्यर्थः। तथाच सति कृत्स्नस्यैवेन्द्राय सङ्कल्पितत्वात् शेषोऽपि व्यपदेष्टुं शक्यत इति। तदुक्तम्—

योऽ हि तावद्धुतः सोमः स नैवमभिधीयते।
न च तस्येन्द्रपीतत्वादहुतस्त्विन्द्रपीतता॥ इति।

(तं. वा., पृ. ८००)

न चैन्द्रप्रदानस्य मिश्रसङ्कल्पितस्यान्यतरव्यपदेशः समासवृत्तेन्द्रपदेन सम्भवति। तद्धितसापेक्षसमासनिषेधात्। तस्मादैन्द्राग्नस्याप्यमन्त्रकमेव भक्षणमिति।

प्रयोजनम्—न वक्तव्यम्। सूत्रन्तु—एकस्मिन्नैन्द्रे देवतान्तरादग्नेर्विच्छिद्य मन्त्रः प्रयोक्तव्यः। चतुर्द्धाकरणरूपपुरोडाशविभाग इवेति॥

इत्यष्टादशमैन्द्राग्नभक्षस्यामन्त्रकत्वाधिकरणम्॥ १८॥

अथैकोनविंशं भक्षमन्त्रस्य गायत्रान्यच्छन्दस्केऽपि विनियोगाधिकरणम्

छन्दश्च देवतावत्॥ ३. २. ४२॥

(विषयसंशयौ)

तस्मिन्नेव मन्त्रे "गायत्रच्छन्दसः" इत्युच्यते। तत्र सन्देहः—

किमेकच्छन्दसि सोमे मन्त्रः ? उत नानाच्छन्दस्यपि ? इति । पूर्वापवादत्वेनेदमारभ्यते ।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षः—यथेन्द्रपीतस्येति सापेक्षत्वदोषान्न सम्भवति, तथो गायत्रच्छन्दस इत्यपि नानाच्छन्दसि सापेक्षत्वदोषादेव न सम्भवति । तेन यद्यपि ज्योतिष्टोमे केवलगायत्रच्छन्दाः सोमो नास्ति, तथापि यत्र केवलगायत्रच्छन्दाः सोमोऽस्ति, तत्रैवास्य मन्त्रस्य प्रयोगः । अतः छन्दोऽपि देवतावन्निरपेक्षमेव विशेषणमिति । एवं प्राप्तेऽभिधीयते—

सर्वेषु वाभावादेकच्छन्दसः ॥३. २. ४३॥

( सिद्धान्तः )

अयमभिप्रायः—भवेदेवं यदि गायत्रच्छन्दाः क्वचिदपि वेदे भवेत् । न त्वेतदस्ति । त्रयाणामपि वेदानां क्वचित्साधनांशे छन्दोन्तरस्यावश्यंभावित्वात् । अतो रथन्तरसामवतस्त्वयोगव्यवच्छेदेनैव गायत्रच्छन्दस इति विशेषणत्वम्, नान्ययोगव्यवच्छेदेन । तेन सापेक्षमसमर्थमित्येतदपि न नित्यसापेक्षविषयम् । यत्र नैरपेक्ष्यमपि सम्भवति, तद्विषयमेवैतत् । तदुक्तम्—

यत्र नामोपपद्येत निरपेक्षं विशेषणम् ।
सापेक्षस्याग्रहस्तत्र न तु यत्रापि नास्ति तत् ॥ इति ।

(तं. वा., पृ. ८०१)

अतोऽत्र केवलगायत्रच्छन्दसोऽभावान्नानाच्छन्दस्केऽपि सोमे प्रयोक्तव्य एवायं मन्त्र इति ।

प्रयोजनम्—न वक्तव्यमेव । सूत्रन्तु—सर्वेषु नानाच्छन्दस्केषु मन्त्रः, गायत्र्येकच्छन्दसः सोमस्याभावादिति ॥

इत्यष्टादशं भक्षमन्त्रस्य गायत्रान्यच्छन्दस्केऽपि
विनियोगाधिकरणम् ॥ १८ ॥

अथ विंश इन्द्रपीताधिकरणशेषः

सर्वेषां त्वैकमन्त्र्यमैतिशायनस्य भक्तिपानत्वात् सवनाधिकारो हि ॥ ३.२. ४४. ॥

( इन्द्रपीताधिकरणसिद्धान्तः )

यदुक्तमैन्द्राणाममन्त्रकं भक्षणमिति, नैतत् ; सर्वेषां समन्त्रकमिति । यथा समाम्नातश्च मन्त्रः स्यात् । एवं तावत्तृतीयातत्पुरुषसमासाश्रयणेनेन्द्रपदसामानाधिकरण्यमिति कृत्वा ऐन्द्राणां समन्त्रकं भक्षणमनैन्द्राणाममन्त्रकमिति प्रथमपूर्वपक्षनिरासेन पारमार्थिकः सिद्धान्तोऽभिधीयते । अयमभिप्रायः—भवेदेवं यदि इन्द्रपीतस्येति पदं तृतीयासमासेन सोमसमानाधिकरणं

भवेत् । किन्तर्हि ? बहुव्रीहिसमासाश्रयणेन सवनसमानाधिकरणमिदम् । इन्द्रेण पीतस्सोमो यस्मिन्सवने तद्भवतीन्द्रपीतं सवनम् । तस्य सवनस्य यस्सम्बन्धी सोमः सोऽनिन्द्रपीतोऽपि शक्यत एवेन्द्रपीतस्येति व्यपदेष्टुमित्यविकृत एव मन्त्रस्सर्वः शेषभक्षणे प्रयोक्तव्यः । तदुक्तम्—

इन्द्रेण यस्मिन्सवने पीतस्सोमो निरूप्यते ।
तस्य योऽन्योऽपि सम्बन्धी स एवं व्यपदिश्यते ॥ इति ।

( तं. वा., पृ. ८०२ )

ननु बहुव्रीहिसमासस्यानेकपदविवक्षितत्वात्तृतीयासमासाद्दुर्बलत्वमित्युक्तम् । तत्कथं सवनसमानाधिकरणमिति । उच्यते—इन्द्रपीतस्य सोमस्येति षष्ठ्यन्तस्य भक्षणक्रियासम्बन्धानुपपत्तेरन्यभक्षणोपदेशाच्चेन्द्रपीतस्य सोमस्यावयवं भक्षयामीत्यवयवपदमवश्यमत्राध्याहर्त्तव्यम् । न च भक्षणीयो विद्यमानः शेष इन्द्रेण पीतः, इन्द्राय वा दत्तः । तेन विद्यमानत्वाच्छेषो नेन्द्रपीतशब्दार्थः । न चेन्द्रोद्देशत्यक्तस्य भागस्येन्द्रपीतत्वाद्विद्यमानस्य च तदेकदेशत्वादविद्यमान एवेन्द्रपीतशब्देनाभिधीयत इति वाच्यम् । यतः सम्बन्धसामान्ये सोमस्येति षष्ठी । न चाविद्यमानस्य सम्बन्धोऽत्रोपलक्षणत्वेनाश्रयणीयः । न विद्यमानसम्बन्धे सम्भवति भूतपूर्वसम्बन्धाश्रयणम् ।

किञ्च यद्यसौ कृत्स्न एवैकेन भक्ष्यते (?) इन्द्रपीतावयवत्वात्। न हि कपालावयवो घटावयवो भवति। तेनौपचारिक एवायं तदवयवव्यपदेशः। न च मुख्ये सम्भवत्यौपचारिकाश्रयणं युक्तम्। यदा त्विन्द्रेण पीतं यस्मिन् सवने तस्य सवनस्य यः सोम इति व्युत्पत्या विद्यमानशेष एवाभिधीयते, तदा तदवयवभक्षणे सति नातीतसम्बन्धोपलक्षणत्वम्। नाप्यनवयवेऽवयवशब्द इति बहुव्रीहिसमास एव युक्तः। ननु बहुव्रीहिसमासेऽपि मुख्यपीतशब्दे-नेन्द्रोद्देशेन त्यागो लक्षणीयः, तदत्रेन्द्रोद्देशेन ग्रहणमेव लक्ष्यताम्। तथाच सति विद्यमानस्यापि शेषस्येन्द्रोद्देशेन गृहीतत्वान्न पूर्वोक्त-दोषप्रसङ्ग इति। मैवम्; लक्षितलक्षणादोषात्। तथाहि—पानेन त्यागो लक्षणीयः। त्यागेन च तदुद्देशेन ग्रहणम्। बहुव्रीहिपक्षे तु त्यागमात्रलक्षणम्। किञ्चापेक्षावशात्प्रकरणविशेषा-च्चैतदेवोचितम्। तथाहि—धर्मप्रदानान्येव शेषभक्षणे तत्प्रकाशकं मन्त्रमपेक्षन्ते। प्रकरणञ्च ज्योतिष्टोमस्याविशिष्टमेव। बहुव्रीहिसमा-साश्रयणेन सर्वेषामेव समन्त्रकं भक्षणमिति सिद्धम्।

प्रयोजनम्—पक्षोक्तम्। सूत्रन्तु—ऐन्द्राणां ग्रहाणां सर्वेषां चैकमन्त्र्यमिति ऐतिशायनस्याचार्यस्य मतम्। यतः सवननिर्देशोऽ-यमिन्द्रपीतस्येति। अन्यथापीत एव गौणः पीतशब्दप्रयोगः सम्प्रसज्येतेति।

इतीन्द्रपीतये ह्ययं श्रुतिर्यूथान्मयाधुना ।
उद्घाटिता च दासस्य गृह्यतामर्थलोलुपा ॥

इति विंश इन्द्रपीताधिकरणशेषः ॥ १६ ॥

( इति भक्तपेटिका )

इति श्रीबालवलभीभुजङ्गापरनाम्नो भट्टभवदेवस्य कृतौ तौताततमततिलके तृतीयस्याध्यस्य द्वितीयः पादः ॥

अथ तृतीयाध्यास्य तृतीयः पादः

तत्र प्रथममुपक्रमाधिकरणम्

श्रुतेर्जाताधिकारः स्यात् ॥ ३. ३. १. ॥

( विषयसंशयसङ्गतयः )

जोतिष्टोमे श्रूयते—"उच्चैरृचा क्रियते, उच्चैः साम्ना, उपांशु यजुषा" इति । तत्र सन्देहः—किमृगादिजातिमधिकृत्यैते शब्दाः प्रवृत्ताः ? अथवा वेदमधिकृत्य ? इति । एवं लिङ्गविनियोगं प्रतिपाद्येदानीमवसरप्राप्तो वाक्यविनियोगः प्रस्तूयते । अत्रोच्चैस्त्वादिधर्मो विधीयमानः किमृगादिजातिशेषतया विधीयते ? किमृग्वेदादिविषयतया ? इति । ननु मन्त्रब्राह्मणात्मको वेदः, एक एव च ऋङ्मन्त्रो वेदत्रयेऽपि पठ्यते । अतस्तस्य वेदत्रयरूपत्वादनध्यवसायो विकल्पो वा भवेत् । जातधर्मत्वे तु पादबद्धऋक्सम्ब-

न्धान्नानध्यवसायो नापि विकल्प इति जातधर्मत्वमेव युक्तम् । तदुक्तम्—

जातस्य हि व्यवस्थानाच्छक्यं धर्मावधारणम् ।
सङ्कीर्णत्वात्तु वेदानां भवेत्तद्धर्मसङ्करः ॥ इति ।

( तं. वा., पृ. ८०४ )

अतः सन्देहाभावात्कथमत्र विचार इति । उच्यते— स्यादेवं यदि ऋग्वेदेन यत्प्रकाश्यते तदुच्चैरुच्चारितेनेति सिद्धान्तवचनव्यक्तिर्भवेत् । किन्तर्हि ? यदृग्वेदेन विधीयते तदुच्चैरिति । एकस्य च मन्त्रस्य वेदत्रयपाठेऽपि न सर्वत्र विधानमस्ति । येन येनैव यो मन्त्रो विधीयते तद्धर्मत्वमेव तस्य । अथ कश्चिद्वेदद्वयेन विधीयते, तदा तुल्यत्वादगत्या विकल्प एवेति । तदयं सन्देहार्थः—किमृग्जातेन यत्प्रकाश्यते तदुच्चैःस्वरेणानुष्ठातव्यम् ? उत सामवेदेन यद्विधीयते, तदुच्चैः स्वरेणानुष्ठातव्यमिति । सिद्धान्तयुक्तिबलेन तु याज्यानुवाक्यासु विहितस्वरूपेणैव स्वरानुष्ठानं कर्मसु च प्रकाशकमन्त्रद्वारेणैवेति विवेक्तव्यम् । तदर्थश्च भाष्यवार्तिकयोः कारणसन्देहोऽयमुपन्यस्तः—किमृक्छन्दो जातपरः ? अथवा वेदपरः ? इति ।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षः—'तेषामृग्यत्रार्थवशेन पादव्यवस्था' इत्या-

दिषु एकार्थावच्छिन्नपादसमूहात्मको मन्त्र ऋक्छब्दार्थः एकार्थावच्छिन्नपदसमूहात्मकश्च मन्त्रो यजुःशब्दार्थः । ऋगाश्रितः स्वरसमूहात्मकश्च गीतिविशेषः सामशब्दार्थ इति निरूपितमेव । तेन "उच्चैर्ऋचा क्रियत" इत्यादिषु श्रौतऋगाद्युद्देशेनैवोच्चैष्ट्वादिधर्मो विधीत इति जातधर्मत्वमेव ।

नन्वर्थवादोपक्रममिदं वाक्यम् । तत्र च प्रथमं वेदः श्रूयते । तथा हि "प्रजापतिर्वा इदमेक आसीत् स तपोऽतप्यत तस्मात्तेपानात्त्रयो देवा असृज्यन्त—अग्निर्वायुरादित्यः । ते तपोऽतप्यन्त, तेभ्यस्तपस्तेपानेभ्यस्त्रयो वेदा असृज्यन्त—अग्नेर्ऋग्वेदः, वायोर्यजुर्वेदः, आदित्यात्सामवेदः" इति । तत्र श्रूयते—"उच्चैर्ऋचा क्रियते, उच्चैः साम्ना उपांशु यजुषा" इति । तेनोपक्रमानुरोधादृगादिपदं लक्षणया वेदपरमेव युक्तम् । न च लक्षणैव दोषः, वेदे उपक्रमेऽपि मन्त्रपरत्वेन लक्षणास्वीकारात् । किञ्च यत्रोपसंहारस्थार्थवादानुरोधेनाऽपि "अक्ताः शर्करा उपदधाति" इत्यत्र विध्युद्देशार्थवर्णनम्, तत्रोपक्रमस्थार्थवादानुरोधे सुतरामेवोचितमिति कथमृगादिपदानां जातपरत्वमिति । उच्यते— 'अक्ताः शर्करा" इत्यादिको हि विध्युद्देशः सन्दिग्धतया तत्रार्थवादमपेक्षताम्, इह त्वृगादिपदानां निस्सन्दिग्धजातवचनात्वान्नार्थविशेषमवधारयितुमपेक्षा समस्ति, येनार्थवादमपेक्षेरन् । किञ्च विधिशेषो ह्यर्थवादो विवक्षितलक्षणा-

वृत्तश्च। तेन प्रधानभूतविध्युद्देशानुरोधेन तस्यैव लक्षणावृत्तत्वमुचितम्, न तु विध्युद्देशस्य। किञ्च "अक्ताः शर्कराः" इत्यत्र विध्युद्देशाद्विज्ञाञ्जनसाधनद्रव्यसामान्यस्य, नापि विधीयमानाञ्जनक्रियायाः "तेजो वै घृतम्" इति वाक्यशेषस्थघृतग्रहणे कश्चिद्विरोधः समस्ति। इह तु विध्युद्देशगतस्य ऋगादिपदस्य स्वार्थपरित्यागेन वेदपरत्वमिति भवति विरोधः। तदुक्तम्—

यथा च द्रव्यसामान्यं क्रिया वा न विरुध्यते।
विशेषैर्वाक्यशेषस्थैर्नैवं वेदैर्ऋगादयः॥ इति।
(तं. वा., पृ. ८०३)

किञ्च जातधर्मत्वे ज्योतिष्टोमप्रकरणमप्यविरुद्धं भवति। जातरूपस्य मन्त्रस्य ज्योतिष्टोमे कात्स्न्र्येनैव विद्यमानत्वात्। वेदधर्मत्वे तु मन्त्रब्राह्मणवाक्यसमूहात्मकस्य वेदस्य ज्योतिष्टोमे कात्स्न्र्येनाभावादन्यत्रापि ऋग्वेदेन यद्विधीयते, तदुपांशु कर्त्तव्यमिति प्रकरणबाधः। तदुक्तम्—

प्रतिसङ्ख्यातवर्त्तित्वाज्जातं प्रकरणेऽस्ति नः।
वेदो महासमूहत्वात्प्रकृतौ न समाप्यते॥ इति।
(तं. वा., पृ. ८०४)

तेन ऋगादिपदानां श्रुत्यनुरोधाज्जातधर्मत्वमेवोच्चैष्ट्वादीनामिति। एवं प्राप्तेऽभिधीयते—

वेदो वा प्रायदर्शनात्॥ ३. ३. २.॥

( सिद्धान्तः )

अयमभिप्रायः—भवेदेवं यद्युपक्रमस्थार्थवादे वेदः श्रूयमाणो नावगम्येत। तथाहि—वेदस्तावदुपक्रमे प्रतीयते। स्तुतिविषयश्च स एव भवति, यो विधीयते। यत्र वान्यद्विधीयते, तत्र वेदस्य स्वार्थप्रतिपादने सामर्थ्यतः प्राप्तत्वात्किमत्र विधेयमित्याकाङ्क्षायां तदेकवाक्यतापन्नेन "उच्चैर्ऋचा क्रियते" इत्यनेनोच्चैष्ट्वादि विधीयमानं वेदसम्बन्धित्वेनैव प्रतीयते। न च "उच्चैर्ऋचा क्रियते" इति ऋङ्मन्त्रावगमान्न वेदविषयत्वमिति वाच्यम्। उपक्रमानुरोधेन विध्युद्देशगतऋगादिपदानामपि लक्षणया वेदपरत्वात्।

ननु विशेषो ह्यर्थवादोऽस्वार्थपरश्च। अतः प्रथमावगतेऽपि प्रधानभूतविध्युद्देशानुरोधेन तस्यैव लक्षणया ऋगादिमन्त्रपरत्वमुचितम्। विपरीतन्तु कुतः? उच्यते—स्यादेवं यदि ऋगादिसम्बन्धेनोच्चैष्ट्वादिविधिर्लब्धात्मको भवेत्। इह तु प्रथमं स्तूयमानवेदावरुद्धबुद्धिना विध्युद्देशगतमपि चरमं प्रतीयमानमृगादिपदं वेदपरमेव प्रतीयत इत्यर्थवादविपरीतार्थत्वाभावान्नार्थवादस्थवेदशब्दस्य लक्षणया ऋगादिपरत्वमिति। तेन यद्यपि विध्युद्देशार्थवादयोः प्रधानगुणभावेन बलाबलमस्त्येव, तथाप्युक्तन्यायेनोपक्रमस्थवेदज्ञानस्यैव बलवत्वाद्विध्युद्देशगतऋगादिपदानामेव वेदलक्षणार्थत्वम्।

तदुक्तम्—

विध्यर्थवादसम्बद्धमन्यदेव बलाबलम् ।
मुख्यपश्चात्तनत्वेन ज्ञानानामन्यदेव तत् ॥ इति ।

( तं. वा., पृ. ८०६ )

यत्र पुनः पूर्वज्ञाननिरपेक्षमेवोत्तरं ज्ञानं पूर्वविपरीतमुत्पद्यते, तत्र पूर्वाबाधेनोत्तरस्यात्मलाभाभावाद्भवतु पूर्वज्ञानस्यैव बाधः । यथा—शुक्ताविदं रजतं नेदं रजतमिति ज्ञानयोः । तदुक्तम्—

पूर्वात् परबलीयस्त्वं तत्र नाम प्रतीयताम् ।
अन्योन्यनिरपेक्षाणां यत्र जन्म धियां भवेत् ॥ इति ।

( तं. वा., पृ. ८०६ )

न च विध्युद्देशे लक्षणादोषः, अनुवादगतत्वेनादुष्टत्वात् । यथा खल्वन्यत्रार्थवादानामनुवादकत्वाल्लक्षणावृत्तिरदुष्टा, तथात्रार्थवादावगतवेदविषयाणामृगादिपदानामप्यनुवादकत्वाल्लक्षणावृत्तत्वमविरुद्धम् । किञ्चेयं लक्षणा वेदेनैवाश्रिता । यथा—"ऋग्भिः पूर्वाह्ने दिवि देव ईयते यजुर्वेदे तिष्ठति मध्ये अह्नः, सामवेदेनास्तमये महीयते वेदैरशून्यस्त्रिभिरेति सूर्यः" इति । अत्र हि यजुःसामगतवेदशब्दसाहचर्यादन्ते च वेदैरिति बहुवचननिर्देशादुपक्रमस्थर्क्पदस्यापि वेदविषयत्वमेव निर्णीयते । अतो न ऋगादिपदेभ्यो वेदप्रतीतिवैमुख्यम् ।

यत्तु वेदधर्मत्वे ज्योतिष्टोमप्रकरणं बाध्यत इत्युक्तम्, तदनु-

मन्यामह एव, बलवता वाक्येन सर्वत्रैव प्रकरणबाधस्येष्टत्वात् । अपि च जातधर्मत्वे "उच्चैः साम्ना" इति वाक्यमनर्थकमेव स्यात् । "ऋच्यध्यूढं साम गायति" इति साम्नामृगाश्रयत्वेन ऋचामेवो-च्चैष्ट्वेन साम्नामप्युच्चैष्ट्वसिद्धेः । वेदधर्मत्वे तु ऋग्वेदेनाप्यन्यद्धि-धीयते सामवेदेनाप्यन्यदिति नायं दोषः । तदयमर्थो भवति— "उच्चैरृचा क्रियते" इति ऋग्वेदेन यत्क्रियते ऋग्यजुस्सामरूपं तदुच्चैस्स्वरेणानुष्ठातव्यम् । अथ च ऋग्वेदविहितोऽर्थो मन्त्रद्वारेणै-वोच्चैःस्वरेणानुष्ठातव्यः । न त्वृङ्मन्त्रेण यत्क्रियत इति सिद्धम् ।

प्रयोजनम्—पक्षोक्तम् । सूत्रन्तु—प्रायदर्शनाद्वेद एवोच्चैष्ट्वा-दिविधाने ऋगादिशब्दैरुद्दिश्यते, प्रायदर्शनादुपक्रमे कीर्त्तनादिति ॥

इति प्रथममुपक्रमाधिकरणम् ॥ १ ॥

## अथ द्वितीयं गुणमुख्यव्यतिक्रमाधिकरणम्

### गुणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन वेदसंयोगः ॥ ३. ३. ९. ॥

( विषयसंशयसङ्गतयः )

अस्त्याधानम्—"य एवं विद्वानग्निमाधत्ते" इति । तद्याजु-र्वैदिकम् । तत्र सामगानमामनन्ति—"य एवं विद्वान् वारवन्तीयं गायति, य एवं विद्वान् यज्ञायज्ञीयं गायति, य एवं विद्वान्

वामदेव्यं गायति" इति। तत्र सन्देहः—किमाधाने सामगानमुच्चैः ? उतोपांश्विति। पूर्वमुच्चैष्ट्वादीनां वेदधर्मत्वं प्रतिपादितम्। इदानीं यत्र वेदान्तरविहितस्य प्रधानस्य वेदान्तरविहितमङ्गं भवति, तत्र कतमो वेदधर्मः स्यादिति प्रसङ्गान्निरूप्यते। अत्र यद्यपि वामदेव्यादिसाम्नां सामवेदे पाठ एवोत्पत्तिः, न तु पृथगुत्पत्तिविधिरस्ति, तथाप्युत्पत्ति-विधिरस्तीति कृत्वाचिन्तयायं विचारः। वेदान्तरेऽनुरूपमङ्गमुत्प-द्यते वाक्येन वेदान्तरीयप्रधाने विनियुक्तं तदीयप्रयोगवचनेन गृह्यते, तत्र फलिष्यति।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षिणोऽभिसन्धिः—पूर्वं हि "उच्चैः साम्ना क्रियते" इति सामवेदेन यद्विधीयते तदुच्चैः कर्त्तव्यमिति निरूपितम्। वामदेव्यगानादीनाञ्च सामवेदाम्नातानां सामवैदिकोत्पत्तिविधिवि-विषयत्वम्। याजुर्वैदिकाधानाङ्गत्वेन याजुर्वैदिकप्रधानीयप्रयोग-विधिविषत्वम्। तत्रान्यतरस्वरपरिग्रहे कतरः स्वरः परिगृह्यतामिति सन्देहे उत्पत्तिविधेः प्रथमावगतत्वादसाधारणत्वाच्च प्रयोगविधेश्चर-मावगतत्वात्साधारणत्वाच्च उत्पत्तिविधेः स्वरपरिग्रह एवोचितः। नानाविधाङ्गप्रधानसाधारणो हि प्रयोगविधिः। उत्पत्तिविधिस्तु वामदेव्यादिगानप्रत्यर्थप्रतिनियतः। तेनैषामुत्पत्तिविधिनिमित्तकः स्वरो युक्त इति। एवं प्राप्ते—

( सिद्धान्तः )

अभिधीयते—भवेदेवं यद्यङ्गधर्मानुष्ठाने प्रधानधर्मबाधदोषो न भवेत् । तथाहि—प्रधानमगुणं भवतीत्यङ्गान्यनुष्ठीयन्ते । यद्यङ्गधर्मानुरोधेन प्रधानधर्मो बाध्यते, तदा यदर्थमङ्गानुष्ठानं तदेव हीयेत । अङ्गस्य तु वैगुण्येऽपि तत्सगुणत्वस्याचिकीर्षितत्वात्प्रधानसगुणत्वस्य च सिद्धत्वान्न कश्चिद्दोषः । तेन यद्यपि वारवन्तीयादिसाम्नः स्वरूपसिद्धमुच्चैष्ट्वं याजुर्वैदिकप्रयोगविधेश्च सामप्रधानविषयत्वेन प्रधानद्वारप्राप्तमुपांशुत्वम्, तथापि तस्य प्रधानधर्मत्वेनैव बलीयस्त्वाद्गुणधर्मबाध एवेति । तदुक्तम्—

गुणे स्वरूपतो धर्मः प्रधानद्वारतोऽपरः ।
यत्र स्यात्तत्र विज्ञेयं गुणधर्मस्य बाधनम् ॥ इति ।

( तं. वा., पृ. ८१० )

नन्वेवं सति याजुर्वैदिकप्रयोगविधिविहितानां वारवन्तीयादिसाम्नां स्वत एवोपांशुत्वप्राप्तेः कथं गुणमुख्यव्यतिक्रमन्यायविषयत्वम् । उच्यते—स्यादेवं यदि याजुर्वैदिकः प्रयोगविधिः साक्षात्प्रधानमिवाङ्गमपि स्पृशेत् । स ह्यङ्गविशिष्टं प्रधानमनुष्ठेयतया विदधद्विशिष्टविधिन्यायेन कल्पितविधिविहितविशेषणविशिष्टमेव प्रधानं विधत्ते । न च कल्पितविशेषणविधीनां याजुर्वैदिकत्वम्, तत्र तेषामपठितत्वात् । प्रधानस्यैव स्वतः सिद्धमुपांशुत्वं न त्वङ्गानाम् ।

कथं तर्ह्यङ्गानामुपांशुत्वम्? उच्यते—साङ्गस्य हि प्रधानस्य याजुर्वैदिकप्रयोगविधिविहितत्वेनोपांशुत्वमनुष्ठेयम्। यद्यङ्गानां नानुष्ठीयेत, तदा साङ्गस्य नानुष्ठितं भवतीति प्रधानसगुणत्वार्थमेवाङ्गेष्वनुष्ठीयते। अन्यथा प्रधानमेव विगुणं भवतीति। नन्वङ्गधर्माणामुत्पत्तिविधिनिमित्तत्वेन प्रथमोपनिपातात्प्रत्यात्मनियतत्वेन चासाधारणत्वात्प्रबलप्रधानधर्मस्य तु प्रधानद्वारेण परम्परया प्राप्तत्वाच्चरमभावित्वाच्च दुर्बलत्वम्। अतस्तदेव बाध्यत इति युक्तम्। मैवम्; उक्तमेवैतत्पूर्वाधिकरणे निरपेक्षोत्पन्नयोर्विरोधे विज्ञानयोः पूर्वबाधेनोत्तरस्योत्पत्त्यसम्भवाच्चरमभाविनाप्युत्तरेण पूर्वस्यैव बाधः। तेनैकस्मिन्वाक्ये पूर्वपदार्थसापेक्षत्वादुत्तरपदार्थावधारणस्य भवतु पूर्वस्यैव बलवत्त्वम्। इह तु भिन्नवाक्यत्वेन निरपेक्षत्वाच्छुक्तिरजतवदुत्तरस्यैव बलीयस्त्वम्। अतः प्रधानधर्मेणोपांशुत्वेनाङ्गधर्म एवोच्चैष्ट्वं बाध्यत इति।

प्रयोजनम्—पक्षोक्तम्। सूत्रन्तु—गुणप्रधानधर्मयोर्विरोधे प्रधानत्वाद्गुणस्य प्रधानार्थसम्बन्धिवेदवशेनैव गुणस्य धर्मसम्बन्ध इति।

तदेतद्यथाभाष्यमधिकरणं वार्तिककारपादा नानुमन्यन्ते, 'अङ्गगुणविरोधे च तादर्थ्यात्' इत्यनेनैव न्यायेन गतत्वात्। ननु 'य इष्ट्या पशुना सोमेनाग्रयणेन वा यजेत सोऽमावास्यायां

पौर्णमास्यां वा' इत्यनेनैकस्यैवामावास्याकालस्य तत्र सोमाङ्गदीक्षणीयाङ्गत्वं प्रधानसोमयागाङ्गत्वञ्च प्राप्तम्। तत्र दीक्षणीयाकालानुरोधे सति प्रधानकालबाध एव भवेत्, नाङ्गकालः। तत्र न्यायः—प्रधानं हि सगुणं कर्त्तुमङ्गगुणः क्रियते। दीक्षणीयाकालानुरोधेन च प्रधानकालातिक्रमे प्रधानमेव विगुणं भवेदिति दीक्षणीयाकाल एव बाध्यते। तदिहाप्यौत्पत्तिकाङ्गस्वरानुरोधेन प्रधानस्वरबाधे प्रयोगविधिविहितसंसर्गिप्रधानगतोपांशुत्वातिक्रमे प्रधानमेव विगुणं भवेदिति न कश्चिद्विशेषः। किञ्च "य एवं विद्वान्वारवन्तीयं गायति" इत्यादिविनियोगविधयो याजुर्वैदिका इति भाष्यकारेण स्वयमुदाहृताः। उत्पत्तिविधिश्च विनियोगार्थत्वाद्विनियोगस्य च प्रयोजनप्रत्यासत्तेर्विनियोगविधिवशेनैवौत्पत्तिकस्वरबाधे सति प्रयोगवचनमाश्रित्य गुणमुख्यव्यतिक्रमन्यायोपन्यासेन स्वाभिहितमपि विस्मृतं भाष्यकारेणेति।

तेनेत्थमिदमधिकरणं वर्णनीयम्—किं वारवन्तीयादिसाम्नां सामवैदिकोत्पत्तिविधिवशेनोच्चैष्ट्वधर्मः? उत याजुर्वैदिकविनियोगविधिवशेनोपांशुत्वमिति। तत्र प्रथमावगतत्वादिना पूर्वोक्तन्यायेनोत्पत्तिस्वरो ग्राह्य इति प्राप्ते—

अभिधीयते—भवेदेवं यद्युत्पत्तिविधेर्न विनियोगविधिर्बलवान्

भवेत्। तथाहि—अनुत्पन्नस्य विनियोक्तुमशक्यत्वाद्विनियोगार्थैवोत्पत्तिः। विनियोगस्तु प्रधानत्वान्मुख्यः। तेन गुणमुख्ययोरुत्पत्तिविनियोगविध्योर्विरोधे गुणस्योत्पत्तिविधेर्मुख्यभूतविनियोगविध्यर्थत्वान्मुख्यविनियोगविधिसम्बन्धिना स्वरेणैव वारवन्तीयादीनामुपांशुत्वेन सम्बन्ध इति। प्रयोजनम्—पक्षोक्तम्। सूत्रं व्याख्यातमेवेति ॥

इति द्वितीयं गुणमुख्यव्यतिक्रमाधिकरणम् ॥ २ ॥

अथ तृतीयं ज्योतिष्टोमस्य याजुर्वैदिकताधिकरणम्

भूयस्त्वेनोभयश्रुति ॥ ३. ३. १० ॥

( विषयसंशयौ )

यजुर्वेदे ज्योतिष्टोमं समामनन्ति—"ज्योतिष्टोमेन स्वर्गकामो यजेत" इति। तथा सामवेदेऽप्येवं समाम्नातम्—"ज्योतिष्टोमेन स्वर्गकामो यजेत" इति। सकृच्च कृतायां क्रियाबुद्धौ द्वितीयं गुणार्थं श्रवणं भवति। तत्र सन्देहः—किं याजुर्वैदिकं गुणार्थम्? उत विपरीतमिति। पूर्वमङ्गेष्वौत्पत्तिको वेदधर्मो विनियोगविधिवशेनापद्यत इति प्रतिपाद्येदानीं प्रधानमेव यत्रोभयत्वेन श्रूयते, तत्र कतरस्य वेदस्य सम्बन्ध उच्चैष्ट्वादिधर्मोऽत्रानुष्ठातव्य इति सन्देहे सत्यधिकार-

वाक्यद्वयस्योभयत्राविशेषाद्यत्रोत्पत्तिस्तत्रैवानुष्ठातव्य इति स्थिते उत्पत्तिविधिरेव कुत्रेति विचार्यते।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षिणोऽभिसन्धिः—न तावदेकत्रोत्पन्नस्यान्यत्राङ्गसम्बन्धार्थं श्रवणम्। उभयत्रैवाङ्गश्रवणाविशेषात्। नापि फले विनियोगार्थं, फलस्याप्युभयत्र श्रवणाविशेषात्। अतोऽध्येतृभेदेन विकल्पेनैवोत्पादकत्वम्। यत एकस्य नाम वेदाध्ययनसम्भवे सति स्वशाखा तावत्प्रथममस्याध्येतव्या। तेन यद्वेदगता शाखा येन प्रथममधीता स एव वेदस्तस्योत्पादक इति शाखान्तरवद्वेदसमुच्चयोऽपि व्यवस्थिततये विकल्प एवेति। एवं प्राप्ते—

( सिद्धान्तः )

अभिधीयते—भवेदेवं यद्यङ्गभूयस्त्वश्रवणेन विशेषावगतिर्न स्यात्। यजुर्वेदे हि ज्योतिष्टोमस्य दीक्षणीयादिकेतिकर्त्तव्यता भूयसी श्रूयते, न तथा वेदान्तरे। इतिकर्त्तव्यतायाः प्रकरणग्राह्यत्वाद्यत्रेतिकर्त्तव्यता तत्रैव प्रकरणम्। यत्र च प्रकरणं तत्रैव कर्त्तव्यतावगमादुत्पत्तिः। इतरत्र च गुणार्थं श्रवणमिति। तदुक्तम्।

गुणानां यत्र भूयस्त्वमितिकर्त्तव्यतात्मकम्।
तत्र तेनैव लिङ्गेन तस्य कर्त्तव्यतेष्यते॥ इति।

( तं. वा., पृ. ८९५ )

प्रयोजनम्—पद्धोक्तम् । सूत्रन्तु—उभयश्रुति यत्कर्म तस्याङ्गभूयस्त्वेनोत्पत्तिनिर्णय इति ।

तदस्य यथाभाष्यं सिद्धान्तहेतुं वार्त्तिककारपादा नानुमन्यन्ते । यदि खल्वितिकर्त्तव्यतोत्पत्त्यवगतौ लिङ्गं तदा तदल्पत्वभूयस्त्वयोः को विशेषः ? न हि धूमत्वेनावधारितोऽल्पीयान् धूमोऽग्निं नानुमापयति । तदुक्तम्—

यद्यस्य गमकत्वेन स्वशक्तेरवधारितम् ।
तदल्पं बहु वा तस्य प्रतीतौ न विशिष्यते ॥ इति ।
यादृशस्य हि धूमस्य गमगत्वावधारणा ।
स तादृग्बहुरल्पो वा वह्निं गमयति ध्रुवम् ॥ इति ।

(तं. वा., पृ. ८१६)

अतो यथावार्तिकमेव सिद्धान्तहेतुर्वर्णनीयः । प्रतिकर्म विशेषस्वरूपविज्ञानमुत्पत्तिः । द्रव्यदेवतेन च कर्मविशेषनिरूपणं भवति । ज्योतिष्टोमस्य च द्रव्यदेवतं कृत्स्नमेव यजुर्वेदे समाम्नायते । तेन तत्रैव कर्मोत्पद्यते । इतरत्र वेदे कर्मस्वरूपमात्रमनुकीर्त्य स्तोत्रशस्त्रमात्रविधानात् गुणार्थमेव श्रवणम् । नन्वनेकेऽपि गुणाः प्रतिवेदं विधीयन्ते । तेषां प्रतिवाक्यं कर्मानुवादेन न विधयः श्रूयन्ते । नाप्येकेन कर्मानुवादेन सर्वेषां विधानमवगम्यते । अतो न तावद्वाक्येनानेकगुणविधानम् ।

नापि प्रकरणेनानूद्यमानस्य, प्रकरणाभावात् । कर्त्तव्यस्य हीतिकर्त्तव्यताकाङ्क्षा प्रकरणम् । न चानुवादे कर्त्तव्यता सम्भवति । अतः प्रकरणेनाप्यङ्गसम्बन्धासम्भवात्कथं गुणार्थं श्रवणमिति । उच्यते—न हि स्वरूपेणानूद्यमानमितिकर्त्तव्यता-काङ्क्षापरिपन्थि । किन्तर्हि ? विधातुमुद्देश्यत्वेनानूद्यमानत्वम् । इह तु यादृशं कर्मोत्पत्तिविधाववगतं तेन यद्येतद्वेदान्तरे शुद्धस्यैव श्रवणमध्ययनविधिकारितं तदस्य प्रयोजनम् । स तु सन्निधि-समाम्नातेतिकर्त्तव्यतासम्बन्धावगमार्थमेवेति निर्णीयते । अतो यजुर्वेद एव ज्योतिष्टोमस्योत्पत्तिः । वेदान्तरे गुणसम्बन्धार्थमेव श्रवणमिति सिद्धम् ।

प्रयोजनम्—पक्षोक्तम् । सूत्रन्तु—द्रव्यदेवतादिव्यञ्जक-भूयस्त्वेन यजुर्वेद एव ज्योतिष्टोमस्योत्पत्तिरुभयवेदश्रवणेऽपीति स्थितम् ॥

इति तृतीयं ज्योतिष्टोमस्य याजुर्वैदिकताधिकरणम् ॥ ३ ॥

अथ चतुर्थं प्रकरणाधिकरणम्

असंयुक्तं प्रकरणादितिकर्तव्यतार्थित्वात् ॥३. ३. ११॥

( विषयसंशयसङ्गतयः )

उक्तानि विनियोगकारणानि श्रुतिर्लिङ्गं वाक्यमिति । श्रुतिः— "ऐन्द्या गार्हपत्यमुपतिष्ठते" इति द्वितीयाविभक्तिः । लिङ्गं मन्त्रेषु वचनसामर्थ्यम्—"बर्हिर्देवसदनं दामि" इति । वाक्यम्— "अरुणया पिङ्गाक्ष्या क्रीणाति" इति । अथ किमेतावन्त्येव विनियोगे कारणानि ? उत नेति । श्रुतिलिङ्गवाक्यानां विनियोजकप्रमाणानां स्वरूपस्य विनियोगसामर्थ्यस्य च लोकसिद्धत्वात्तदुपेक्षया तद्गतं विशेषमेव परमापूर्वसाधने श्रुतिर्विनियुङ्क्ते ? किं वावान्तरापूर्वसाधने ? तथा किं मुख्ये विनियोजकं सामर्थ्यम् ? किं वा गौणेऽपीति । एवं किमुपसंहारापेक्षितार्थसमर्पणेनोपक्रमस्य तदेकवाक्यता विपरीतं वेति निरूप्येदानीं प्रकरणादीनां स्वरूपस्य विनियोगसामर्थ्यस्य च लोकाप्रसिद्धत्वत् तत्स्वरूपं विनियोगसामर्थ्यञ्च निरूप्यते । विशेषणनिरूपणञ्च बलाबलाधिकरण एव भविष्यति ।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षः—चोदनालक्षणो हि धर्मः । तेन श्रुतेः श्रावणशब्दरूपाया लिङ्गस्य चार्थगतशब्दाभिधानसमर्थस्य वाक्यस्य चाकाङ्क्षितयाग्यार्थपदान्तरसमभिव्याहाररूपस्य शब्दान्तर्गतत्वाद्-

भवतु शेषविनियोगे प्रामाण्यम् । प्रकरणादीनान्तु शब्दानन्तर्गत्वान्न शेषविनियोगे प्रामाण्यम् ।

ननु प्रकरणमपि शब्दान्तर्गतमेव । करणोपकारभावेनापर्यवसितार्थस्य साध्यभावेनापर्यवसितानामङ्गवाक्यानां परस्पराकाङ्क्षा हि प्रकरणम् । अतस्तस्यापि शब्दान्तर्गतत्वात् कथमप्रामाण्यम् ? उच्यते—स्यादेतदेवं यद्याकाङ्क्षामात्रं सम्बन्धे कारणं भवेत् । तथा सति प्रकरणान्तराम्नातेनापि सम्बन्धप्रसङ्गात् । किन्तु सन्निधानमपि । तच्च यथाप्रकरणान्तराम्नातेन सह नास्ति, तथानेकवाक्यव्यवहितैः प्रयाजादिभिरपि दर्शपूर्णमासयोर्नास्ति इत्यसम्बन्धान्न प्रकरणं प्रमाणमिति । एवं प्राप्ते—

( सिद्धान्तः )

अभिधीयते—भवेदेवं यद्यव्यवधानेनैव सम्बन्धो भवेत्, व्यवधानेयत्तानियमो वा भवेत् । न त्वेतदस्ति, सर्वथा सम्बन्धोपलब्धेः । किञ्चाकाङ्क्षाऽनिवृत्तौ सत्यां तत्पूरणसमर्थेनोपलब्धेनैव सम्बन्धो भवति । स चाव्यवहितेन यथा भवति, तथैवासम्बद्धव्यवायाभावे सति व्यवहितेनापि भवत्येव । न च प्रयाजादीनां दर्शपूर्णमासासम्बद्धपदव्यवायोऽस्ति, येन प्रकरणान्तराम्नानतुल्यत्वं भवेत् । तत्र यदा प्रधानं निराकाङ्क्षं साकाङ्क्षमङ्गं प्रधानाकाङ्क्षामुत्थाप्य सम्बध्यते, तथा प्रधानाकाङ्क्षाकल्पनाव्यवहितः

सम्बन्धो न प्राकरणिकः, किन्तु क्रमनिबन्धन एव। यदा तु प्रधानमङ्गमुभयमपि साकाङ्क्षं तदोभयाकाङ्क्षानिबन्धनः सम्बन्धः प्राकरणिकः शीघ्रं भवति। न चात्रोभयाकाङ्क्षा नास्ति। तथाहि—दर्शपूर्णमासाभ्यां स्वर्गं भावयेदित्यत्र कथमित्याकाङ्क्षायामविच्छिन्नायामेवाश्रुतप्रयोजनानि प्रयाजादीनि श्रूयन्ते। न चान्यत्किञ्चिदुपकारान्तरं प्रयोजनान्तरं वानयोः प्रतीयते। न च कल्पयितुमपि शक्यते, श्रुतहान्यश्रुतकल्पनागौरवप्रसङ्गात्। तेनोभयोः साकाङ्क्षयोर्नष्टाश्वदग्धरथवत्प्राकरणिक एव सम्बन्ध इति। तदुक्तम्—

> अविच्छिन्ने कथम्भावे यत्प्रधानस्य पठ्यते।
> अनिर्ज्ञातफलं कर्म तस्य प्रकरणाङ्गता॥ इति।

(तं. वा., पृ. ८१७)

तेन सिद्धमुभयाकाङ्क्षालक्षणं प्रकरणम्। तच्च विनियोजकमिति।

प्रयोजनम्—पूर्वपक्षे दर्शपूर्णमासानङ्गत्वात्प्रयाजादीनां प्रयोगाद्बहिरेवानुष्ठानम्। सिद्धान्ते तु दर्शपूर्णमासप्रयोग एवेति।

सूत्रन्तु—यच्छ्रुतिलिङ्गवाक्यैरसंयुक्तम् तदितिकर्त्तव्यतार्थित्वलक्षणात्प्रकरणात्प्रकृतस्य कर्मणोऽङ्गमिति॥

इति चतुर्थं प्रकरणाधिकरणम्॥ ४॥

अथ पञ्चमं क्रमाधिकरणम्

क्रमश्च देशसामान्यात् ॥ ३. ३. १२ ॥

( विषयसंशयौ )

अथ किमेतावन्त्येव विनियोगकारणानि ? नेत्युच्यते । अत्र क्रमस्यापि प्रकरणवदेव स्वरूपस्य विनियोगासामर्थ्यस्य च लोकप्रसिद्धत्वात्तदेव निरूप्यते । विशेषनिरूपणञ्च बलाबलाधिकरण एव भविष्यति ।

अत्रेयं विषयशुद्धिः—दर्शपूर्णमासयोः खलु प्रकरणे आग्नेयादीनि कर्माणि क्रमेण विहितानि । तेनैव क्रमेण मन्त्रकाण्डे अनुमन्त्रणमन्त्राः समाम्नाताः । तत्रेतरेषां स्पष्टलिङ्गानां मन्त्राणां प्रकरणेन सामान्यसम्बन्धे सति लिङ्गेनैवाग्नेयादिषु विनियोगः सिध्यतीति न क्रमोदाहरणत्वम् । दब्धिमन्त्रस्य त्वस्पष्टलिङ्गस्योपांशुयाजक्रमपठितस्य लिङ्गविनियोगाभावात्किं क्रमेणोपांशुयाजशेषत्वमस्ति ? नास्तीति निरूप्यते ।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षिणोऽभिसन्धिः—श्रुतिलिङ्गवाक्यप्रकरणानि विनियोगकारणान्युक्तानि । तत्रानुमन्त्रणमन्त्राणां प्रकरणेन सर्वार्थत्वावगमेऽपि लिङ्गस्य बलवत्त्वाद्भवत्वितरेषामाग्नेयादिविशेषवि-

षयत्वम् । "दब्धिर्नामासि" इत्यस्य तु विशेषलिङ्गाभावादसिशब्दस्य च प्रकरणसन्निहितमात्रपरामर्शकत्वेन साधारणत्वात्पाठक्रममात्रस्य च दुर्बलत्वेन बलवति प्रकरणे परिपन्थिन्यात्मलाभासम्भवात्प्रकरणात्सर्वार्थत्वमेव । तत्र यदाप्याग्नेयादयः स्पष्टलिङ्गानि, तदा "दब्धिर्नामासि" इत्यादीनामनिवृत्तियागभावित्वेनैवादृष्टार्थत्वात्समुच्चयो भविष्यति । अथ कृतयागप्रत्यवेक्षणेन दृष्टार्थत्वं तदा अगत्या विकल्पो भविष्यतीति नास्ति क्रमाख्यं विनियोजकं प्रमाणमिति । एवं प्राप्ते—

( सिद्धान्तः )

अभिधीयते—भवेदेवं यदि क्रमस्य विनियोजकत्वं न भवेत् । देशसामान्यलक्षणो हि क्रमः । देशसामान्यञ्च द्विविधम्—पाठसादेश्यमनुष्ठानसादेश्यञ्च । तत्र यद्यपि "दब्धिर्नामासि", इत्यस्य मन्त्रस्य प्रकरणं साधारणं लिङ्गं स्पष्टम् । क्रमश्च प्रकरणाज्जघन्यः, तथापि योऽस्य मन्त्रस्योपांशुयाजेन सह पाठसादेश्यलक्षणः क्रमोऽध्ययनविधिकारितः तेनास्योपांशुयाजशेषत्वमेवोन्नीयते । न च बलीयसा प्रकरणेन सर्वार्थत्वम् । मन्त्रस्य हि विनियोगः प्रकाशनसामर्थ्योन्मीलनेनैव प्रकरणेनापि कर्त्तव्यः । तत्र यदि सर्वसाधारणमेव सामर्थ्यमस्य प्रकरणमुन्मीलयेत्, तदेह विस्पष्टलिङ्गानां मन्त्राणां विशेषविषयत्वेन शीघ्रप्रवृ-

त्त्वादृब्धिमन्त्रगतस्य चासिशब्दस्य साधारणत्वेन विलम्ब्यप्रवृत्तत्वात्स्वभावतोऽष्टदोषदुष्टो विकल्पो विषमशिष्टश्चापद्येत । किञ्चोपांशुयाजे मन्त्रान्तराभावात् नित्यवदस्य विनियोगः । आग्नेयादिषु तु पाक्षिक इति वैषम्यञ्च भवेत् । क्रमस्य तु लिङ्गोन्मीलकत्वे सति न विकल्पः, नापि विनियोगवैषम्यम् । तेनापेक्षितविधानानुरोधेनासिशब्दोऽयं क्रमसन्निधापितोपांशुयाजविषय एवेति निर्णीयते । तदुक्तम्—

न वा विज्ञातलिङ्गानां प्रक्रिया विनियोजिका ।
असीत्यस्य च सामर्थ्यं सन्निधावुपसंहृतम् ॥ इति ।

( तं. वा., पृ. ८२० )

अनुष्ठानसादेश्यलक्षणस्तु क्रमः पशुधर्माणामुपाकरणादीनामग्नीषोमीये पशौ विनियोजकः, न तु तत्र पाठसादेश्यलक्षणः क्रमः सम्भवति । अग्नीषोमीयस्य दीक्षाकाले दशम्यामुत्पत्त्यर्थं पाठात् अङ्गानां चतुर्दश्यामुत्पन्नत्वात्, किन्त्वनुष्ठानार्थमग्नीषोमीयस्य चतुर्दश्यां पाठात्तत्रैवाङ्गानामपि पाठे सत्यनुष्ठानसादेश्यं विनियोगस्य कारणम् ।

प्रयोजनम्—पक्षोक्तम् । सूत्रन्तु—क्रमोऽपि प्रकरणवद्विनियोजकः, देशसामान्यात् समानदेशत्वादित्यर्थः ॥

इति पञ्चमं क्रमाधिकरणम् ॥ ५ ॥

अथ षष्ठं समाख्याधिकरणम्

आख्याचैवं तदर्थत्वात् ॥ ३. ३. १३. ॥

( संशयसङ्गती )

अथ किमेतावन्त्येव विनियोगकारणानीति । नेत्युच्यते। अत्र समाख्यायाः प्रकरणक्रमवदेव स्वरूपस्य विनियोगसामर्थ्यस्य च लोकाप्रसिद्धत्वात्तदेव निरूप्यते। विशेषनिरूपणञ्च बलाबलाधिकरण एव भविष्यति।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षः— आध्वर्यवादिशब्दा हि कर्मविशेषेषु वेदे प्रयुक्ताः। तेषु च कर्तृविशेषापेक्षायामाध्वर्यवादिसमाख्याभिरध्वर्य्वादय एव कर्तृत्वेन विनियुज्यन्त इति हि समाख्याया विनियोजकत्वम्। न चैतत्सम्भवति। अध्वर्योरिदं कर्माध्वर्यवमिति यौगिकत्वे सत्यासां समाख्यानां विनियोजकत्वम्। न च प्रागप्रसिद्धसम्बन्धानां यौगिकशब्दानां प्रयोगः। यथा पाचकपाठकादिशब्दानाम्। न चालौकिकत्वादत्र समाख्यातः प्राक्सम्बन्धावगतिरस्ति। अथास्ति तदा तत एव विनियोगसिद्धेः किं समाख्यया? अथ समाख्यात एव सम्बन्धावगतिः, तथा च सतीतरेतराश्रयत्वप्रसङ्गः। सिद्धे हि सम्बन्धे समाख्याप्रवृत्तिः,

समाख्याप्रवृत्तौ च सम्बन्धावगतिरिति । तेन रूढैवेयमश्वकर्णादिवदाध्वर्यवादिसमाख्येति न विनियोजिकेति ।

ननु रूढत्वे ऽप्याध्वर्यवशब्दस्य समाख्यया विनियोजकत्वं न विरुद्धमेव । तथाहि—आध्वर्यवसमाख्यया विनियोजकत्वं यस्मिन् कर्मणि प्रयुक्तं, तस्य कर्मणः कर्त्रपेक्षायां वर्णसारूप्यादध्वर्युरेवोपतिष्ठते, नोद्गात्रादिः । तेन रूढत्वेऽपि सारूप्यात्समाख्यैव विनियोजिकेति । मैवम्; व्युत्पत्त्यभावात् । न हि सादृश्योपस्थितस्य शब्दस्यार्थः सदृशशब्दान्तरेण सम्बध्यते इति व्युत्पत्तिरस्ति । न हि लोके हालिकमानयेत्युक्ते किंजातीयोऽसावित्यपेक्षायां शब्दसादृश्यादुपस्थितो मालिकः सम्बध्यते । तेन प्रकरणेनाध्वर्यवादीनां सर्वकर्मार्थत्वादन्यवस्थयैव कर्त्तृत्वमिति । एवं प्राप्ते—

( सिद्धान्तः )

अभिधीयते—भवेदेवं यदि यौगिकी समाख्या विनियोजिका व्यवस्थाकारणं न भवेत् । तथाहि—सर्वत्र खल्वसम्भवः प्रतीयमानयोगपरित्यागकारणम् । यथाश्वकर्णादौ । न चात्राध्वर्युर्नास्ति, कर्म वाध्वर्युकर्त्तृकं न सम्भवति । तेनाध्वर्योरिदं कर्माध्वर्यवमिति शब्दप्रवृत्तिनिमित्तयोगसम्भवाद्यौगिकत्वमेवाध्वर्यवादिशब्दानाम् । न च प्रागप्रसिद्धसम्बन्धत्वान्न यौगिकः समाख्याप्रयोग इति साम्प्रतम् । लौकिके हि शब्दप्रयोगे पर्यनुयोगोऽयं

युज्यते, न तु वैदिके, अनादिशब्दप्रयोगस्यैवंविधपर्यनुयोगानर्हत्वात्। तेन यथासमाख्याप्रयोगोऽनादिस्तथा तत्कल्पितः सम्बन्धोऽप्यनादिरेवेति यौगिक्येवेयं समाख्या। तथा चाध्वर्योरिदं कर्मेति योगव्युत्पत्तिवशात्परस्परापेक्षया कर्तृक्रिययोः समाख्याप्रमाणकः शेषशेषिभावलक्षणः सम्बन्धः सम्पद्यत इति भवति समाख्यापि विनियोजिकेति। तदुक्तम्—

यौगिकी या समाख्या सा सम्बन्धप्रतिपादिनी।
सोऽपि बुद्धावुपस्थाप्य शेषसम्बन्धबोधकः॥ इति।

(तं. वा., पृ. ८२०)

प्रयोजनम्—पक्षोक्तम्। सूत्रन्तु—समाख्यापि प्रकरणक्रमवद्विनियोजिका विनियोगार्थत्वादिति॥

इति षष्ठं समाख्याधिकरणम्॥ ६॥

अथ सप्तमं बलाबलाधिकरणम्

श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये
पारदौर्बल्यमर्थविप्रकर्षात्॥ ३. ३. १४.॥

(विषयसंशयसङ्गतयः)

उक्तानि विनियोगकारणानि—श्रुतिर्लिङ्गं वाक्यं प्रकरणं

स्थानं समाख्यानमिति । एषां समवाये किं बलीय इति चिन्त्यते । श्रुत्यादीनि विनियोगप्रमाणानि प्रतिपाद्येदानीं तेषामेकार्थसमवाय-विरोधे बलाबलं निरूप्यते । तत्र प्रथमं श्रुतिलिङ्गयोरेव तावद्बला-बलं विचार्यते । तत्रोदाहरणम्—"कदाचन स्तरीरसि नेन्द्र सश्चसि" इति मन्त्रः इन्द्रप्रकाशनसमर्थोऽयम् "ऐन्द्र्या गार्हपत्यमुपतिष्ठते" इति श्रुत्या गार्हपत्यप्रकाशने विनियुक्तः ।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षः—यथा हि श्रुतिर्विनियोगे प्रमाणं, तथा लिङ्गमपि विनियोगे प्रमाणमिति प्रतिपादितमेव । न च प्रमाणस्य प्रमाणान्तरेण बाधः सम्भवति, तादृशस्य बाधस्याभासविषयत्वात् । ननु न स्वतो लिङ्गस्य प्रामाण्यम्, किन्तु श्रुत्यनुमानद्वारेण । न च प्रत्यक्षश्रुतिविरुद्धाल्लिङ्गाच्छ्रुत्यनुमानं सम्भवति । अग्नाविव शैत्यानुमानम् । तेनोत्पत्तिप्रतिबन्धलक्षणस्य बाधस्य विद्यमान-त्वान्न तुल्यबलत्वम् । मैवम्; न हि श्रुतेनाप्यशक्तस्य विनियोगः सम्भवति । न चैन्द्रीमन्त्रस्य गार्हपत्यप्रकाशनसामर्थ्यमस्ति, किन्तु श्रुतिवशात्सामर्थ्यं कल्पनीयम् । तेन यावता कालेन श्रुतिरैन्द्री-मन्त्रस्य गार्हपत्यप्रकाशनसामर्थ्यं कल्पयिष्यति, तावता लिङ्गरूपा-दपि सामर्थ्याच्छ्रुतिकल्पनासम्भवान्नोत्पत्तिविरोधलक्षणो बाध इति तुल्यबलत्वमेव ।

तदुक्तम्—

विक्षेपो यावता लिङ्गे स्याच्छ्रुतेरनुमापके ।
लिङ्गानुमानभूतायां तावतैव श्रुतावपि ॥ इति ।

(तं. वा., पृ. ८३१)

अतः श्रुतिलिङ्गयोस्तुल्यबलत्वोद्विकल्प एव । तेन कस्मिंश्चित्प्रयोगे गार्हपत्यप्रकाशने प्रयोक्तव्यः, कस्मिंश्चित्प्रयोगे चेन्द्रप्रकाशन इति । अथवा गार्हपत्येन्द्रोभयशेषत्वान्मन्त्रस्य प्रतिप्रधानं गुणावृत्तिन्यायेन समुच्चय एव । तेनैकस्मिन्नेव प्रयोगे आवृत्त्या मन्त्रः प्रयोक्तव्यः । अथवा अभ्युपेत्यवादोनोक्तं लिङ्गस्य श्रुत्यनुमानद्वारेण श्रुतिसापेक्षस्य विनियोजकत्वम् । वस्तुतस्तु श्रुतिनिरपेक्षस्यापि विनियोजकत्वे न किञ्चिद्बाधकं प्रमाणमस्ति । श्रुतेस्त्ववश्यं लिङ्गसापेक्षमेव विनियोजकत्वम् । असमर्थस्य श्रुतिशतेनापि विनियोक्तुमशक्यत्वात् । तेन बलवता लिङ्गेनैव श्रुतेर्बाधितत्वादैन्द्रीमन्त्रेण नियमेनेन्द्रः प्रकाशनीयो न गार्हपत्य इति । एवं प्राप्ते—

( सिद्धान्तः )

अभिधीयते—भवेदेवं यदि श्रुतिनिरपेक्षस्य लिङ्गस्य विनियोजकत्वं भवेत् । न त्वेतदस्ति । तथाहि—'चोदनालक्षणोऽर्थो धर्मः' इत्यत्र चोदनैव धर्मे प्रमाणमित्युक्तम् । न च लिङ्गं चोदना,

अशब्दरूपत्वात् । तत्रेन्द्रादिः शब्दः सोऽपि स्वार्थमेवाभिधत्ते, न शेषत्वं प्रतिपादयति । किन्तर्हि ? प्रकरणेन लब्धसामान्यसम्बन्धो मन्त्रः कथमुपकुर्यादित्यपेक्षायां सामर्थ्यपर्यालोचनेनैन्द्रप्रकाशनसमर्थश्चायं मन्त्रः । तेनानेन मन्त्रेणेन्द्रं प्रकाशयेदिति श्रुतिरवश्यमनुमान्या । गार्हपत्यशेषत्वन्तु "ऐन्द्र्या गार्हपत्यमुपतिष्ठते" इत्यक्षरश्रुतिमात्रादेव प्रतीयत इति श्रुतिकल्पनाविप्रकृष्टं लिङ्गं प्रत्यक्षश्रुत्या बाध्यत इति ।

ननु श्रुतेरपि लिङ्गानुमानविप्रकर्षाविशेषात्तुल्यबलत्वमित्युक्तम् । नैतत्, विनियोगे हि सन्निकर्षविप्रकर्षौ बलाबलं प्रत्युपयुज्येते । न च श्रुतेः सामर्थ्यावगमसापेक्षं विनियोजकत्वम्, किन्तु शब्दश्रवणमात्रेणावगते विनियोगे पश्चात्तदनुरोधेन सामर्थ्यमपि कल्प्यते । लिङ्गस्य तु श्रुतिमननुमाय विनियोजकत्वासम्भवाच्छ्रुत्यनुमानविप्रकृष्टं विनियोजकत्वमिति भवति विप्रकर्षाच्छ्रुतितो दुर्बलत्वम् । तदुक्तम्—

विनियोगाभिधानस्य द्वारत्वाद्दुर्बलत्वधीः ।
तच्च पूर्वानुमायां स्यान्नोत्तरत्र कथञ्चन ॥ इति ।

( तं. वा., पृ. ८१७ )

तेनार्थविप्रकर्षाल्लिङ्गमेव श्रुत्या बाध्यते । एवं लिङ्गवद्वाक्यप्रकरणस्थानसमाख्या अपीति सिद्धम् ।

अथ वाक्यलिङ्गयोर्विरोधे किमुदाहरणम्? "स्योनन्ते सदनं करोमि घृतस्य धारया सुशेवं कल्पयामि। तस्मिन्सीदामृते प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमानः" इति। अत्र सन्दिह्यते—किं कृत्स्नो मन्त्र उपस्तरणे पुरोडाशसादने च प्रयोक्तव्यः? उत कल्पयाम्यन्त उपस्तरणे, तस्मिन्सीदेत्ययं पुरोडाशसादनं प्रति?

(पूर्वपक्षः)

अत्रायं पूर्वपक्षः—भवतु श्रुतेः प्रत्यक्षाल्लिङ्गाद्बलीयस्त्वम्। लिङ्गवाक्ययोस्त्वनुमीयमानश्रुतिद्वारेण विनियोजकत्वाविशेषात्कथं बलाबलम्। तदिह यथा कल्पयाम्यन्तस्य सदनकरणप्रकाशनसामर्थ्यं, तस्मिन्सीदेत्यन्तभागस्य च पुरोडाशप्रतिष्ठापनप्रकाशनसामर्थ्यम्, तथा सदनकरणस्य प्रयोजनापेक्षत्वात्तस्मिन्सीदेति तच्छब्दस्य च पूर्वोक्तसापेक्षत्वात्सापेक्षसमभिव्याहृतानां पदानामेकवाक्यतैव प्रतीयते। अतो लिङ्गवाक्यानुरोधेनावृत्त एव मन्त्रः सदनकरणे पुरोडाशप्रतिष्ठापने च प्रयोक्तव्य इति। एवं प्राप्ते—

(सिद्धान्तः)

अभिधीयते—भवेदेवं यदि लिङ्गादेर्वाक्यस्याव्यवहितं श्रुत्यनुमानं भवेत्। तथाहि—सर्वत्रैव मन्त्रे किञ्चिदेव पदं प्रयोगसमवेतार्थप्रकाशकम्। इतराणि तु दृश्यमानैकवाक्यतानुरोधेन समवेतार्थ-

प्रकाशनसामर्थ्यं परिकल्प्य स्वार्थमुपसर्जनीकृत्य तद्विशिष्टसमवेतार्थ-प्रकाशनतया सम्बध्यन्ते । ततः श्रुतिमनुमाय विनियुज्यन्ते । एतच्चाविरोधे सति भवति । इह तु "स्योनं त" इति "तस्मिन्सीद" इति पूर्वोत्तरयोर्विभिन्नार्थसामर्थ्यं कृत्वा यावदेकवाक्यत्वानुरोधेन पूर्वस्योत्तरत्र उत्तरस्य च पूर्वत्र सामर्थ्यं कल्प्यते, तावदेव पूर्वोत्तरयोः प्रसिद्धसामर्थ्यद्वयेन कल्पितश्रुतिद्वारेण विनियोगसिद्धेरन्वयभेदेनै-कत्वबुद्धिरेव भ्रान्तेति कुतो विनियोजकत्वं वाक्यस्येति । तदुक्तम्—

एकवाक्यतया यावत्सामर्थ्यमनुमीयते ।
सामर्थ्येन श्रुतिस्तावत्कल्प्यते विनियोजिका ॥ इति ।

( तं. वा., पृ. ८२२. )

तस्माच्छ्रुतिकल्पनायां लिङ्गविप्रकृष्टत्वाद्वाक्यस्य लिङ्गमेव बलीय इति सिद्धम् ।

अथ वाक्यप्रकरणयोर्विरोधे किमुदाहरणम् ? सूक्तवाकनिगदः । तत्र हि पौर्णमासीदेवताशब्दा अमावस्यादेवताशब्दाश्च समाम्नाताः । ते च भिन्नार्थत्वान्न परस्परमेकवाक्यतामुपगच्छन्ति । किन्तु विभज्य यथायोगं पौर्णमास्याममावास्यायाञ्च प्रयोक्तव्या इति स्थितम् । इदानीं तत्समभिव्याहृतविशेषणादिषु सन्देहः—किं प्रकरणानुरोधेनोभयत्र प्रयोक्तव्यानि ? उत वाक्यानुरोधेन यथाविशेष्यम् ? इति ।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षः—भवतु देवतापदानां समवेतार्थानां यथादेवतं लिङ्गानुरोधेन विभज्य प्रयोगः। इतरेषान्तु प्रकरणेन सर्वार्थत्वावगमादुभयत्रैव प्रयोग इति। एवं प्राप्ते—

( सिद्धान्तः )

अभिधीयते—भवेदेवं यदि वाक्यमननुमाय प्रकरणं विनियोजकं भवेत्। न त्वेतदस्ति। स्वार्थबोधसमाप्तानामङ्गाङ्गिवाक्यानामुपकार्योपकारकाकाङ्क्षा हि प्रकरणम्। तत्रोभयाकाङ्क्षावदेकवाक्यत्वं कल्पनीयम्। ततो लिङ्गम्, ततश्च श्रुतिः। वाक्ये तु प्रत्यक्षः सम्बन्धः, तेनास्य श्रुतिकल्पनं लिङ्गमात्रव्यवहितमिति विप्रकर्षाद्भवति प्रकरणं दुर्बलम्, वाक्यमेव बलीय इति। तदुक्तम्—

प्रत्यक्षासङ्गतिर्वाक्ये न तु प्रकरणेऽस्त्यसौ।
आकाङ्क्षातोऽनुमातव्या तावता विप्रकृष्टता॥ इति।

( तं. वा., पृ. ८१६ )

अतः सिद्धं प्रकरणाद्वाक्यं बलीय इति।

अथ प्रकरणक्रमयोर्विरोधे किमुदाहरणम्? राजसूयमहाप्रकरणे अभिषेचनीयक्रमे शौनश्शेपाख्यानमाम्नातम्। यदि प्रकरणं बलवत्सर्वेषां तर्ह्ययं शेषः। यदि क्रमः, अभिषेचनीयस्यैव।

( पूर्वपक्षः )

पूर्वपक्षस्तु—राजसूयप्रकरणसमाम्नातशौनःशेपाख्यानं प्रधानसाकाङ्क्षं क्रमरूपात्सन्निधिविशेषादभिषेचनीयाङ्गत्वेन विज्ञायते । ननु प्राकृताङ्गनिराकाङ्क्षोऽभिषेचनीयः । क्रमेणाकाङ्क्षामुत्थाप्य तत्र शौनश्शेपाख्यानं सम्बन्धनीयम्, राजसूयस्य तु स्वत एव साकाङ्क्षत्वादुभयाकाङ्क्षाकृतस्य सम्बन्धस्य शीघ्रभावित्वात्प्रकरणेन राजसूयाङ्गत्वमेवोचितम् । कथमभिषेचनीयाङ्गत्वम्? उच्यते—स्यादेवं यदि राजसूयोऽभिषेचनीयादिभ्योऽर्थान्तरं भवेत् । किन्तर्हि? अभिषेचनीयादीनामधिकृतकर्मसमूहात्मकोऽसौ । तेन यथाभिषेचनीयः प्राकृताङ्गनिराकाङ्क्षः, तथा विकृत्यन्तरस्यापीति राजसूयप्रकरणाभावाच्छौनश्शेपाख्यानस्य क्रमेणाकाङ्क्षामुत्थाप्याभिषेचनीयाङ्गत्वमेवेति । एवं प्राप्ते—

( सिद्धान्तः )

अभिधीयते—भवेदेवं यद्यभिषेचनीयाद्यपूर्वेभ्यो राजसूयापूर्वं भिन्नं न भवेत् । इह त्वारादुपकारकाङ्गसहिताभिचषेनीयादिकर्मजन्यमन्यदेव स्वाराज्यफलकं राजसूयापूर्वम् । न चाभिषेचनीयाद्यपूर्वनैराकाङ्क्ष्ये राजसूयापूर्वं निराकाङ्क्षं भवति । तेन क्रमादभिषेचनीयापूर्वस्याकाङ्क्षा कल्पनीया । राजसूयस्य तु क्लृप्ताकाङ्क्षत्वम् । अतो यावत्क्रमेणाभिषेचनीयस्याकाङ्क्षा कल्प्यते,

तावत्प्रकरणेन राजसूयस्यैकवाक्यता। ततो लिङ्गम्, ततः श्रुतिरिति सन्निकर्षात्सर्वार्थत्वं शौनश्शेपाख्यानस्येति सिद्धम्। तदुक्तम्—

आकाङ्क्षातः प्रभृत्येके श्रुत्यर्थं प्रति गच्छति।
तामपि त्वन्यतो लब्ध्वा श्रुतिरेकस्य कल्प्यते॥ इति।

(तं. वा., पृ. ८३३)

तेनार्थविप्रकर्षात्प्रकरणेन क्रमो बाध्यत इति सिद्धम्।

अथ क्रमसमाख्ययोर्विरोधे किमुदाहरणम्? किञ्च बलवत्तरमिति। पौरोडाशिकमिति समाख्याते काण्डे सानाय्यक्रमे "शुन्धध्वं दैव्याय कर्मणे" इति शुन्धनार्थो मन्त्रः समाम्नातः। तत्र सन्दिह्यते—किं समाख्यानस्य बलीयस्त्वात्पुरोडाशपात्राणां शुन्धध्वमिति मन्त्रो विनियोक्तव्यः? अथ सान्नाय्यपात्राणामिति।

(पूर्वपक्षः)

अत्रायं पूर्वपक्षः—समाख्यापि शब्दरूपत्वाच्छ्रुतितुल्यैव। अतः क्रमं बाधित्वा समाख्यानिबन्ध एव समर्थो बलवानिति। तेनात्र पुरोडाशस्यायमित्यस्मिन्नर्थे प्रवर्त्तमाना पौरोडाशिकसमाख्या क्रमप्राप्तसान्नाय्यपात्रसम्बन्धं बाधित्वा पुरोडाशपात्रशुन्धन एव "शुन्धध्वं दैव्याय कर्मणे" इति मन्त्रं विनियुङ्क्त इति। एवं प्राप्ते—

( सिद्धान्तः )

अभिधीयते—भवेदेवं यदि समाख्या श्रुतिवच्छेषशेषिसम्बन्धमभिदध्यात्। कल्पनायामपि वा शेषशेषिसम्बन्धं कल्पयेत्। किन्त्वत्र पौरोडाशिकसमाख्या पुरोडाशविशिष्टमन्त्रमभिधत्ते। तद्वशेन कल्पना सम्बन्धमात्रं कल्पयति, न तु शेषशेषिरूपम्। क्रमस्तु सादेश्यलक्षणसम्बन्धरूपो वेदकल्पित एव। तेन यावत्समाख्यया सम्बन्धः कल्प्यते, तावत्क्रमेण सम्बन्धिन्याकाङ्क्षा, आकाङ्क्षया चैकवाक्यत्वं, ततो लिङ्गं, ततः श्रुतिरित्येकान्तरितत्वेन समाख्याया विप्रकृष्टत्वात्क्रमेण समाख्या बाध्यते। तदुक्तम्—

अन्य एव हि सम्बन्धः कल्प्यते यः समाख्यया।
अन्यच्च शेषशेषित्वं यच्छ्रुत्या प्रतिपाद्यते॥ इति।

(तं. वा., पृ. ८३४)

तदयं सङ्क्षेपार्थः—श्रुतिः पञ्चानामपि लिङ्गवाक्यप्रकरणस्थानसमाख्यानां बाधिका, समाख्या च श्रुत्यादिपञ्चकस्य बाध्या। लिङ्गवाक्यप्रकरणक्रमाणान्तु चतुर्णां पूर्वपूर्वापेक्षया बाध्यत्वमुत्तरोत्तरापेक्षया बाधकत्वमिति। तदुक्तम्—

बाधिकैव श्रुतिर्नित्यं समाख्या बाध्यते सदा।
इतरेषान्तु बाध्यत्वं बाधकत्वमपेक्षया॥ इति।

( तं. वा., पृ. ८५८ )

प्रयोजनम्—सर्वत्रैव पत्तोक्तम् । सूत्रन्तु—व्याख्यातमेवेति । अयञ्च श्रुत्यादिभिर्वार्त्तिककारपादैरप्राप्तबाध इत्युक्तम् । सामान्यशास्त्रस्य तु विशेषशास्त्रेणातिदेशस्य चोपदेशेन प्राप्तबाध इति । तदयुक्तम्; सर्वत्रैवाप्राप्तबाधहेतोरर्थविप्रकर्षस्याविशेषात् । यथा हि लिङ्गं श्रुतिं कल्पयितुं प्रवृत्तं प्रत्यक्षया श्रुत्या अपहृतविषयं न प्रवर्त्तते, तथा सामान्यशास्त्रमपि समान्यद्वारेण विशेषावतरणप्रवृत्तं विशेषशास्त्रेणापहृतविषयं न प्रवर्त्तते । एवमतिदेशशास्त्रमपीति कथमनयोः प्राप्तबाधोदाहरणत्वम् ? अथ सामान्यद्वारेण विशेषशास्त्राभासरूपा विषयबुद्धिर्जाता बाध्यत इति प्राप्तबाध इत्युच्यते । सा किं विशेषशास्त्रदर्शिनः ? तददर्शिनो वा ? तत्र विशेषशास्त्रदर्शिनः श्रुतिदर्शिन इव लिङ्गाभासबुद्धिरपि न जायते एव । अथ विशेषशास्त्रादर्शिनः, तदा प्रत्यक्षश्रुत्यदर्शिनो लिङ्गादप्याभासबुद्धिर्जायत एवेति कोऽनयोर्विशेषः ? । उच्यते—सत्यमेवमुत्पत्तिप्रतिबन्धलक्षण एव सर्वत्र बाधः । स एव क्वचित्प्राप्तस्य । तथाहि—प्रत्यक्षश्रुतिविरोधे लिङ्गाच्छ्रुतिकल्पना न प्रवृत्तैव । तेन तत्र शास्त्रमप्राप्तमेव । सामान्यशास्त्रन्तु न प्राप्तमेव, विशेषशास्त्रावरुद्धे विशेषरूपे विषये न प्रवर्त्तत इति प्राप्तबाध एवेति विवेकः । तेन प्राप्ताप्राप्तशब्दोऽयं शास्त्रगोचर एव न बाध्यविषयगोचर इत्यवधातव्यमिति । तदुक्तमजिताकारेण—'यदा तु सामा-

न्यबोधकं शास्त्रं तद्रूपा व्यक्तिरिति व्यवहितव्यक्तिविषयं कल्प्यते, तदैकमेव शास्त्रं ताद्रूप्यविशेषात् सर्वार्थं भवेत् अनन्यगतिविशेष-शास्त्रदर्शनात्तदितरविषयार्थं कल्प्यत इति न शास्त्रस्यैव चाप्रामाण्यम्' इति ।

इति सप्तमं बलाबलाधिकरणम् ॥ ७ ॥

अथाष्टममहीनाधिकरणम्

अहीनो वा प्रकरणाद्गौणः ॥ ३. ३. १५ ॥

( विषयसंशयसङ्गतयः )

ज्योतिष्टोमं प्रकृत्य समामनन्ति—"तिस्र एव साह्नस्योपसदः कार्याः, द्वादशाहीनस्य यज्ञस्य सवीर्यत्वाय" इति । तत्र सन्देहः—किं द्वादशोपसत्ता ज्योतिष्टोमस्य ? उताहीनस्येति । विरोधे सति श्रुत्यादीनां बलाबलं प्रतिपाद्येदानीं विरोध एव कुत्रास्ति कुत्र नास्तीति विचारावसरे प्रकरणस्य तावच्छ्रुतिलिङ्गवाक्यैः सहेतः प्रभृति पञ्चाधिकरणं यावद्यथासम्भवं विरोधाविरोधौ सम्प्रधार्येते । तदुक्तम्—

बलाबलविभक्तानां श्रुत्यादीनामतः परम् ।
विरोधः क्वास्ति नास्तीति विषयः परिशोध्यते ॥ इति ।

( तं. वा., पृ. ८६२ )

( पूर्वपक्षः )

अत्रायं पूर्वपक्षः—"तिस्र एव साह्नस्योपसदः कार्याः" इत्यत्र यथा सहाह्ना समाप्यत इति साह्नशब्दाभिहितस्य ज्योतिष्टोमस्यैवोपसत्त्रित्वं प्रकरणानुरोधेनाङ्गीकृतम्, तथा "द्वादशाहीनस्य" इत्यत्र न कुतश्चिदह्नाद्धीन इति व्युत्पत्त्या अहीनशब्देन ज्योतिष्टोमाभिधायिना सम्भवदुपसद्द्वादशत्वमपि प्रकरणानुग्रहाय ज्योतिष्टोमार्थमेवाङ्गीकर्त्तुमुचितम्। तेन यद्यपि 'अहः खः क्रतुसमूहे' इत्यनुशासनेन समूहसम्बन्धे द्वादशाहक्रतुवचनोऽप्ययं सम्भाव्यते, तथापि प्रकरणाविरोधाय नञ्समासाश्रयणमेव युक्तम्। एवञ्च सति ज्योतिष्टोमे उपसद्द्वादशत्वत्रित्वयोर्विकल्प एव। न च कथं विषमशिष्टो विकल्प इति वाच्यम्। 'एका देया षड्देया द्वादश देयाः' इतिवत्षोडशिग्रहणाग्रहणवच्च फलभूयस्त्वार्थित्वादेवोपपत्तेः। तथा च सति "तिस्र एवोपसदः कार्या" इत्येवकारोऽपि पाक्षिकद्वादशत्वव्यावर्त्तक एव। तेनाहीनशब्दोऽयं प्रकरणानुरोधादह्नोरूपगुणयोगाद्यौगिकः। स च ज्योतिष्टोमवचनः। अतो द्वादशोपसत्त्वमपि तस्यैव विधीयत इति। एवं प्राप्तेऽभिधीयते—

असंयोगात्तु मुख्यस्य तस्मादपकृष्येत ॥३. ३. १६॥

( सिद्धान्तः )

अयमभिप्रायः—भवेदेवं यदि नञ्समासान्तोऽयमहीनशब्दो भवेत् । न त्वेवस्ति । नञ्समासे हि सति नञोऽव्ययत्वेनोदात्तस्वरत्वम् । अव्ययस्य पूर्वपदस्य प्रकृतिस्वर इत्यनुशासनादहीनपदमाद्युदात्तं प्राप्नोति । मध्योदात्तं चैतत्समाम्नायते । तच्च खप्रत्ययान्तत्वे सत्युपपद्यते । खप्रत्ययस्य च 'अह्नः खः क्रतुसमूहे' इत्यह्नः समूहसम्बन्धे क्रतुवचनत्वाज्ज्योतिष्टोमस्य चैकाहसाध्यत्वेनानेवंरूपत्वादहीनस्येति षष्ठीश्रुत्या अहर्गणसम्बन्धावगमात् द्वादशोपसत्त्वस्योत्कर्ष एवेति । किञ्च यदि हि द्वादशोपसत्तापि ज्योतिष्टोमस्यैव तदा प्रकरणादेवोपसत्त्रित्वद्वादशत्वयोर्ज्योतिष्टोमार्थत्वसिद्धेः साह्नस्येत्यहीनस्येति च पदद्वयमनर्थकं स्यात् । अहीनपदवशात्त्वहर्गणसम्बन्धे द्वादशोपसत्वस्योपसत्त्रित्वस्याप्यनुषङ्गेण द्वादशाहक्रतुसम्बन्धो मा भूदिति भ्रमापनोदार्थं साह्नस्येति ज्योष्टोमवाचकं पदमर्थवदिति श्रुतिबलादुत्कर्ष एव । तदुक्तम्—

द्वादशत्वमहीनेन षष्ठीश्रुत्यैव सङ्गतम् ।
अहीनोऽहस्समूहश्च ज्योतिष्टोमे हि साह्नता ॥ इति ।

(तं. वा., पृ. ८६३)

प्रयोजनम्—पत्रोक्तम् । सूत्रन्तु—मुख्यस्य ज्योतिष्टोमस्याहीनशब्देनासम्बन्धात्तस्मान्मुख्यज्योतिष्टोमादपकृष्येतेति ॥

इत्यष्टममहीनाधिकरणम् ॥८॥

अथ नवमं प्रतिपदधिकरणम्

द्वित्वबहुत्वयुक्तं चोदनात्तस्य ॥ ३. ३. १७ ॥

( विषयसंशयसङ्गतयः )

ज्योतिष्टोमे श्रूयते—"युवं हि स्थः स्वर्पती इति द्वयोर्यजमानयोः प्रतिपदं कुर्यात्, एते असृग्रमिन्दव इति बहुभ्यो यजमानेभ्यः" इति। तत्र सन्देहः—किं ज्योतिष्टोम एव निविशेते प्रतिपदौ ? उत द्वियज्ञेषु द्विरात्रादिषूत्कृष्येते ? इति। अत्रापि श्रुतिप्रकरणयोर्विरोधाविरोधसंशयेऽधिकाशङ्कां निवर्त्तयितुं पूर्वन्यायोऽतिदिश्यते। यथा ज्योतिष्टोमस्याहीनशब्दाभिधेयत्वासम्भवादुपसद्द्वादशत्वविधानमुत्कृष्टं, तथा ज्योतिष्टोमे यजमानद्वित्वबहुत्वाभावात्तद्युक्तं प्रतिपद्विधानमप्युत्कृष्यत इति सिद्धान्तेनोपक्रम्य पूर्वपक्षं गृह्णाति—

पक्षेणार्थकृतस्येति चेत् ॥ ३. ३. १८ ॥

( पूर्वपक्षः )

अत्रायं पूर्वपक्षः—न तावदत्राहीनशब्दवदप्रकृतयज्ञसम्बन्धाभिधायकः शब्दोऽस्ति। न च "द्वयोर्यजमानयोः" इत्यनेनैव शब्देन यज्ञान्तरोपस्थितिः, शाब्दाशब्दयोः सम्बन्धासम्भवेन लक्षणाप्रसङ्गात्। नापि यजमानवद्द्वित्वविशेषत्वेनैव प्रतिपद्विधानम्,

विध्यानर्थक्यप्रसङ्गात् । तेन यजमानद्वित्वनिमित्तकं ज्योतिष्टोमप्रकृतियाग एव मन्त्रविशिष्टप्रतिपद्विधानं वक्तव्यम् । न च निमित्तं न सम्भवति, नैमित्तिकावश्यकर्त्तव्यज्योतिष्टोमप्रयोगे एकस्याशक्तौ सत्यामङ्गान्तरवत्कर्त्रैक्यहानेन द्विकर्तृकत्वोपपत्तेः । अथवा "क्षौमे वसानावग्निमादधीयाताम्" इतिवत्पत्न्यभिप्रायेण ज्योतिष्टोमस्यैव द्वियजमानत्वोपपत्तेर्नोत्कर्षः । अतो नैमित्तिकज्योतिष्टोमप्रयोगे एकस्याशक्तौ सत्यां यजमानद्वित्वस्यासम्भवात्प्रकरण एव मन्त्रविशिष्टप्रतिपद्विधानमिति । एवं प्राप्तेऽभिधीयते—

न वा प्रकृतेरेकसंयोगात् ॥ ३. ३. १९ ॥

( सिद्धान्तः )

भवेदेवं यदि यजमानद्वित्वबहुत्वे ज्योतिष्टोमे कथमपि सम्भवतः। तथाहि—नैमित्तिककाम्यसाधारणं यजेतेत्याख्यातोपात्तमुपादीयमानकर्तृगतमेकत्वं विवक्षितमत्र प्रतीयते । न च तत्परित्यागकारणं किञ्चिदस्ति । न च नैमित्तिकावश्यकर्तव्यज्योतिष्टोमप्रयोग एकस्यासामर्थ्ये सतीतराङ्गवदेकत्वपरित्यागेन द्विबहुयजमानत्वं भविष्यतीति वाच्यम् । यतः शक्त्यधीनोपादानं खल्वङ्गमशक्त्या हीयते । न च कर्तुरेकत्वं शक्त्यधीनोपादानम् । तेन यथैकः शक्नुयात्तथा कुर्यादिति नैमित्तिके शक्त्यधीनमङ्गहीनत्वमितराङ्ग-

विषयं विज्ञायते । यथा कालाशौचयोरसामर्थ्येऽपि शक्त्याधीनत्वादपरित्यागः, तथा कर्त्रैकत्वस्यापीति । नापि पत्न्यभिप्रायेण यजमानद्वित्वम् । अपत्नीकयागनिषेधे सति पत्नीसहभावस्य नित्यत्वेन निमित्तत्वासम्भवात् । न च "बहुभ्यो यजमानेभ्यः" इत्यत्र द्विपत्न्यभिप्रायेण । निमित्तत्वादंशे 'सरूपाणामेकशेषः' (पा. सू., १. २. ६४) इत्यनुशासने विरूपाणामेकशेषनिषेधात् तत्र 'पुमांस्त्रिया' (पा. सू., १. २. ६७) इति स्मरणात् भवतु यजमानयोरिति कथञ्चिदंशरूपस्यैकशेषः । यजमानेभ्य इति तु 'पुमांस्त्रिया' इत्येकवचननिर्देशात् लक्षणानुगमाभावेन सम्भवत्येव।

किञ्चोभयत्रापि स्वरसतः पुंद्वित्वबहुत्वप्रतीतौ सत्यां स्त्रिया सह द्वित्वप्रतीतिर्लक्षणया वक्तव्या । न च सम्भवन्त्यां गतौ लक्षणाश्रयणमुचितम् । "क्षौमे वसानौ" इत्यत्रागत्या लाक्षणिकमपि द्वित्वमाश्रितम् । न हि तत्र द्विपुरुषकमाधानं क्वचिदभिहितम् । इह तु कुलाययज्ञस्य "एतेन राजपुरोहितौ यजेयाताम्" इति द्वियजमानस्य क्रतोः प्राप्तत्वाद्बहुयजमानानाञ्च त्रित्वादीनां विद्यमानत्वात्तत्सम्बन्धेन मुख्यार्थेनैवोपपत्तौ न लक्षणाकारणमस्तीत्युत्कर्ष एव । किञ्च "उपास्मै गायता नरः इति प्रतिपदं कुर्यात्" इति नित्यभूतमपि प्रतिपदन्तरमत्रास्ति । तद्यद्यपत्नीकयागनिषेधेन नित्यप्राप्तपत्नीसाहित्येऽपि एकपत्नीकप्रयोगस्य नैमित्तिकत्वं, तदा

तस्य प्रतिपदन्तरावरुद्धेनापत्नीकप्रयोगाभावात् नित्यभूतप्रतिपदन्तरविधानमप्यनित्यमेव स्यात् । नित्यनैमित्तिकयोर्विषमशिष्टो वा विकल्प आपद्येत । यत्त्वप्रकृतक्रतुसम्बन्धेऽस्य प्रमाणं नास्तीत्युक्तम्, तन्न; प्रतिपच्छब्दादेवाव्यभिचारात् प्रतिपद्युक्तक्रतूपस्थितौ सत्यां यजमानद्वित्वबहुत्ववशेन क्रतुविशेषप्रतीतिसिद्धेर्नात्र प्रकरण एव मन्त्रविशिष्टप्रतिपद्विधानं, किन्तु द्विबहुयजमानकक्रतुगतातिदिष्टप्रतिपदनुवादेनैवोत्कर्षान्मन्त्रयोर्विधानमिति सिद्धम् ।

ननु यजमानस्य द्वित्वस्य च नित्यत्वेनानिमित्तत्वान्मृष्यामहे हविषा विशेषणमितिवत् द्वित्वविशिष्टस्यैव यजमानस्य भवतु निमित्तत्वेनोद्देश्यत्वम् । किन्तु प्रतिपदप्यत्र मन्त्रविधानायोद्देष्टव्या । तदत्रोद्देश्यभेदादावृत्तिलक्षणो वाक्यभेदः । इह तु प्रतिपदा मन्त्रः सम्बध्यते । यजमानद्वित्वादीनां निमित्ते कर्त्तव्यता सम्बध्यते । तदयमर्थः—प्रतिपन्मन्त्रस्य कर्त्तव्यता यजमानद्वित्वे निमित्ते प्रत्येतव्येति । भिन्नविषयत्वादुद्देशयोर्न वाक्यभेदः । उद्देश्यत्वञ्च निमित्तस्य । तन्न किञ्चिद्विधानायोपयुज्यते । किन्तर्हि ? समन्त्रैवान्यत्र ? विधीयमानस्याकर्त्तव्यताज्ञानायेति न किञ्चिदनुपपन्नम् ।

प्रयोजनन्तु—पत्नोक्तम् । सूत्रन्तु—प्रकृते ज्योतिष्टोमे प्रतिपदोर्विधानायोगादिति ॥

इति नवमं प्रतिपदधिकरणम् ॥ ९ ॥

अथ दशमं जाघन्यधिकरणम्

जाघनी चैकदेशत्वात् ॥ ३. ३. २०. ॥

( विषयसंशयसङ्गतयः )

दर्शपूर्णमासयोः श्रूयते—"जाघन्या पत्नीः संयाजयन्ति" इति। तत्र संशयः—किमेतद्विधानं दर्शपूर्णमासयोः ? उत पशाविति। प्रकरणं बाधित्वा श्रुतिबलेनोत्कर्षं प्रतिपाद्येदानीं तदपवादः क्रियते।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षः—यद्यपि जाघन्येति तृतीयाश्रुत्या जाघन्या गुणभावावगमात्पत्नीसंयाजेष्वेव जाघनी गुणत्वेन विधीयत इत्युचितम्, तथापि दर्शपूर्णमासयोः पत्नीसंयाजानामाज्यद्रव्यावरुद्धत्वात्तेषु च जाघनीविधावष्टदोषदुष्टविकल्पप्रसङ्गात् "प्रयाजशेषेण हवींष्यभिघारयति" इतिवद्विनियोगभङ्गेन जाघनीसंस्कारत्वेनैव पत्नीसंयाजा विधीयन्त इति। सा च लोकस्था निष्प्रयोजनत्वेन न संस्कारार्हा, नापि दर्शपूर्णमासयोः कृतोपयोगपश्वेकदेशभूता संस्कारार्हा जाघनी समस्ति। नापि जाघन्यैव पश्वपेक्षा, एकदेशद्रव्याणामप्रयोजकत्वस्य स्थितत्वात्। तेनाग्नीषोमीयपशुयागगतैव कृतप्रयोजना प्रतिपत्तिरूपसंस्कारसापेक्षा पत्नीसंयाजैः प्रतिपाद्यत

इत्युत्कर्ष एव। किञ्चैवं सत्यग्नीषोमीयपशावतिदेशप्राप्तानां पत्नीसंयाजानां जाघनीप्रतिपत्त्यर्थत्वेन दृष्टार्थत्वं सामवायिकत्वञ्च भवति। इतरथा प्रकृताविवादृष्टार्थत्वमारादुपकारकत्वञ्च। अदृष्टार्थत्वाच्च दृष्टार्थत्वम्, आरादुपकारकत्वाच्च सामवायिकत्वं बलीयः। तथा जाघन्या पत्नीसंयाजविधाने सन्निहितस्वपदार्थविषयो विधिर्भवति। पत्नीसंयाजेषु च जाघनीविधाने व्यवहितपरपदार्थविषयो विधिरिति। सन्निहितार्थविधिसम्भवे च न विप्रकृष्टार्थविधानमित्यतोऽप्युत्कर्षः पत्नीसंयाजानाम्। तेषामग्नीषोमीये पशावतिदेशेनैव प्राप्तत्वात्, किन्तु दर्शपूर्णमासयोः श्रुतमिदं वाक्यमग्नीषोमीये पशावतिदेशप्राप्तान् पत्नीसंयाजान् जाघनीसंस्कारत्वेन विदधातीत्युत्कर्षः। तेन दर्शपूर्णमासयोरदृष्टार्थमेव पत्नीसंयाजा अनुष्ठीयन्ते। अग्नीषोमीये तु प्रतिपत्तित्वेन दृष्टार्थमेव। तस्माज्जाघन्या उत्कर्षकारणमग्नीषोमीय एव तस्याः कृतोपयोगपश्वेकदेशत्वमिति। एवं प्राप्तेऽभिधीयते—

चोदना वापूर्वत्वात्॥ ३. ३. २१.॥

( सिद्धान्तः )

अयमभिप्रायः—भवेदेवं यदि जाघनी पत्नीसंयाजसंस्कार्यत्वेन प्रतीयते। किन्तर्हि? तृतीयाश्रुत्या पत्नीसंयाजगुणत्वेनैवोपा-

दीयमाना प्रतीयते । न च प्रयाजशेषवद्द्वितीयार्थे तृतीयेति वक्तव्यम् । कृतप्रयोजनद्रव्यैकदेशत्वानवगमात् । प्रयाजशेषो हि कृतप्रयोजनद्रव्यैकदेशभूत एव प्रयाजशेषशब्दादवगम्यते । तेन तस्य प्रतिपत्तिरूपसंस्कारापेक्षित्वाद्भवतु द्वितीयार्थे तृतीया, जाघनी त्वत्रापूर्वैव विधीयते । तदुक्तम्—

जाघन्युद्दिश्यमाना स्यात्संस्कार्योत्कर्षकारणम् ।
इहोपादीयतेऽङ्गत्वाद्यागेष्वाज्यवदेव सा ॥ इति ।

(तं. वा., पृ. ८६६)

न च प्रकृतावाज्येन सह विकल्पभिया यत्र कृतप्रयोजनद्रव्यैकदेशभूता जाघनी पशुयागे तत्रैवायं विधिरुत्कृष्यत इति वक्तव्यम् । विकल्पस्यापि प्रमाणबलायातस्य विनियोजकभङ्गेनोत्कर्षकारणासम्भवात् । एवञ्च सति प्रमाणबलायातं प्रकृताविव विकृतावप्यदृष्टार्थत्वं पत्नीसंयाजानां न दोषाय । नापि परपदार्थविधानदोषः । सर्वत्रैव विशिष्टविधिगौरवभयात्पदार्थोत्कर्षे सति परपदार्थविधानस्यालङ्कारार्थत्वात् । ननु प्रकरणेऽपि पत्नीकर्तृकयागानुवादेन जाघनीविधाने विशिष्टानुवादाद्वाक्यभेदः प्राप्नोति । नैवम्; शब्दतात्पर्यं विनाप्यधिकारादेव पत्नीसम्बन्धिविशेषितयागप्राप्तेः । तथा च यत्संयाजयति, तज्जाघन्येत्येतावत्येव विधीयमाने पत्नीसंयाजानामेव प्राप्तत्वान्न विशिष्टानुवाददोष इति ।

इदन्त्विह वक्तव्यम्—कथं सामान्यविहितेनाज्येन विशेषविहिताया जाघन्या विकल्पः ? सर्वत्र सामान्यविशेषशास्त्रयोर्बाध्यबाधकभावाभावप्रसङ्गात् । नैतत्; द्वयोरेव विशेषशास्त्रत्वाविशेषात् । तथाहि—यदि खल्वाज्यविधौ यज्ञायेत्येतावन्मात्रं श्रूयेत अत्र च पत्नीसंयाजरूपो विशेषस्तदा भवत्येव सामान्यविशेषन्यायः । किन्तु "सर्वस्मै वा एतद्यज्ञाय गृह्यते यद्ध्रुवायामाज्यम्" इति यज्ञायेति सामान्यमभिधायापि पुनस्तत्समानाधिकरणसर्वशब्दोच्चारणम् । तेनैतज्ज्ञायते—तदुत्पत्तिशिष्टद्रव्यानवरुद्धप्रकृतसकलयागविषयत्वमेवाध्ययनविध्यभिमतं यज्ञशब्दस्येति । तेन द्वयोरपि विशेषविषयत्वाद्विकल्प इति ।

प्रयोजनम्—पूर्वपक्षे केवलाज्यद्रव्यकमेव दर्शपूर्णमासयोः पत्नीसंयाजानुष्ठानम् । सिद्धान्ते तु जाघन्या सह विकल्पेनानुष्ठानमिति । सूत्रन्तु—जाघन्या एव चोदना विधानमपूर्वत्वात् प्रयाजशेषवद्द्रव्यैकदेशत्वेनाप्रतीतपूर्वत्वादित्यर्थः ॥

इति दशमं जाघन्यधिकरणम् ॥ १० ॥

## अथैकादशं सन्तर्दनाधिकरणम्

### सन्तर्दनं प्रकृतौ क्रयणवदनर्थलोपात् स्यात् ॥३.३.२४.॥

( विषयसंशयसङ्गतयः )

ज्योतिष्टोमेऽधिषवणफलके प्रकृत्य श्रूयते—"दीर्घसोमे सन्तृद्याद्धृत्यै" इति। तत्र सन्देहः—किं सन्तर्दनं ज्योतिष्टोम एव? अहोस्विद्दीर्घकालेषु सोमेषु? इति। श्रुत्या सह प्रकरणस्य विरोधाविरोधौ प्रतिपाद्येदानीं वाक्यप्रकरणयोर्विरोधाविरोधौ विचार्येते। अत्र यद्यपि "दीर्घसोमे सन्तृद्यात्" इति सप्तमीश्रुतिरस्ति, तथापि शेषिणि खल्वियं सप्तमी। न चेयमधिकरणाभिधायिनी गुणविभक्तिः प्रधान्यरूपं शेषित्वं वदति। अधिकरणत्वञ्च तदभिधेयं न कर्मणस्सम्भवति। अतः श्रुतेरसमत्वात् "अमावास्यायां पूर्वेद्युर्वेदिं करोति" इतिवद्वाक्यलक्षण एवायमन्वय इति वाक्यप्रकरणविरोधाविरोधचिन्तेयमिति।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षः—न तावत्सन्तर्दनं नाम प्रकृतकर्मसम्बन्धानर्हमर्थान्तरम्। किन्तर्हि? अभिषूयमाणसोमाधारफलकयोर्दीर्घार्थमेकस्योपर्यपरस्य स्थापनम्। तत्तावत्प्रकरणे सम्भवत्येव। न च प्रकृतस्य कर्मणो दीर्घसोमत्वं न सम्भवति। सोमो हि ज्योति-

ष्टोमः । स चेष्टिपशुबन्धाद्यपेक्षया दीर्घकालत्वाद्दीर्घ एव । ननु "असन्तृण्णे भवतः" इत्यसन्तर्दनमपि फलकयोः श्रूयते । सत्यम् ; अत एव व्रीहियववद्विकल्पो भविष्यति । एवञ्च सति वाक्यप्रकरणयोरविरोधो भवति । न च स्वल्पसोमत्वाज्ज्योतिष्टोमस्य फलकयोर्दार्ढ्यार्थमसन्तर्दनेऽपि अभिषवसम्भवात्सन्तर्दनविधानमनर्थकमिति वाच्यम् । क्रयणावदुपपत्तेः । यथा हि स्वल्पत्वेन सोमस्याल्पमूल्यत्वेऽपि एकयापि गवा क्रयणसिद्धौ वासःप्रभृतीनां विधानादभ्युदयकारीति विज्ञायते, तथा फलकासन्तर्दनेऽपि सोमाभिषवसिद्धौ सन्तर्दनविधानादवगम्यते सन्तर्दनेन दृढीकृतयोरेव फलकयोः सोमाभिषवोऽभ्युदयकारी भवतीति । तस्मात्सन्तर्दनं प्रकृतौ ज्योतिष्टोम एव विधीयते, न तूत्कृष्यत इति । एवं प्राप्तेऽभिधीयते—

उत्कर्षो वा ग्रहणाद्विशेषस्य ॥ ३. ३. २५. ॥

अयमभिप्रायः—भवेदेवं यदीष्टिपशुबन्धाद्यपेक्षया सोमस्य दीर्घत्वमत्र प्रतीयते । न त्वेतदस्ति, विजातीयत्वात् । सर्वत्र खलु सजातीयव्यावर्तनेन विशेषणमर्थवद्भवति । विजातीयस्य विशेषस्य पदोपात्तजातिव्यावर्त्तितत्वात् । यथा पटः शुक्ल इति पटत्वेनैव पटजातिव्यावृत्तौ कृष्णादिपटान्तरव्यावृत्तिफलमेव शुक्लविशेषणम् । न चात्र सोमयागान्तरस्याभावाद्विजातीयापेक्षयापि कथञ्चिद्दीर्घत्व-

मन्त्रधार्यते, यदि शब्दोपात्त एव विजातीयो भवेत् । न चात्रेष्टिपशुबन्धादयः केनचिच्छब्देनोपात्ताः प्रतीयन्ते । तेनाग्निष्टोमसंस्थस्यैव ज्योतिष्टोमस्य प्रतीतिः । एतस्य द्विषष्ट्यभ्यासरूपत्वेन स्वल्पत्वादुक्थ्यादिसंस्थान्तराणाञ्चाधिकग्रहणविवृध्या दीर्घत्वात् सत्रादीनाञ्च ज्योतिष्टोमविकाराणामनेकाहसाध्यानां प्रत्यहमावृत्त्या ग्रहचमसानुष्ठानेन सुतरां दीर्घत्वाद्दीर्घसोमेषु वाक्येन विधीयमानं सन्तर्दनं प्रकरणं बाधित्वा तेष्वेवोत्कृष्य विधीयते । तदुक्तम्—

दृष्ट्वा ह्रस्वं सजातीयं दीर्घबुद्धिः प्रवर्त्तते ।
तस्मात्सोमस्य दीर्घत्वं भवेत्सोमान्तरेक्षया ॥ इति ।

( तं. वा., पृ. ८७२ )

ननु कर्मधारयसमासपक्षे ह्येवं भवति । यदा तु दीर्घस्य यजमानस्य सोमो दीर्घसोम इति षष्ठीतत्पुरुषसमासाश्रयणम्, तदा प्रकरण एव सन्तर्दनविधानोपपत्तेर्नोत्कर्ष इति । मैवम् ; षष्ठ्यर्थलक्षणाया विलम्बितप्रतीतेस्तत्पुरुषसमासात्समानाधिकरणत्वेन शीघ्रप्रतीतेः कर्मधारयसमासस्य बलीयस्त्वात् । तस्मात्सर्वेष्वेव दीर्घसोमेषूत्कर्ष इति सिद्धम् । ननूक्थ्यादिसंस्थासु ग्रहपात्रविवृद्धावपि त्रिपर्वदशमुष्टिपरिमितस्यैव सोमस्याभिषवात्सन्तर्दनमदृष्टार्थमेव भवेत्, "धृत्या" इत्यर्थवादानुपपत्तेश्च । अधिकसोमाभिषवे हि दारणाशङ्कायां धारणाशासनाद्धारणार्थवादोपपत्तेः । तेन यत्रैव

सत्रादिषु प्रत्यहं त्रिपर्वदशमुष्टिपरिमितस्य सोमस्याभिषवस्तत्रैव सन्तर्दनस्य दृष्टार्थत्वमर्थवादोपपत्तिश्चेति तेष्वेवोत्कृष्य विधानं युक्तमिति। मैवम्; तथाहि—सोमस्तावद्द्विविधः, स्वल्पपर्वा दीर्घपर्वा च। तयोश्च प्रयोजनवशादुपादाने प्रदानविवृद्धेश्च प्रदेय-विवृद्धिमन्तरेणासम्भवादर्थाद्दीर्घपर्वा ग्रहीष्यते। तथा सत्यभिषोत-व्यसोमातिरेकात्सन्तर्दनमपि दृष्टार्थम्, अर्थवादश्चोपपन्नो भविष्यति। त्रिपर्वदशमुष्टिपरिमाणातिक्रमश्च न भविष्यतीति किमनुपपन्नम्?

नन्वेवं तर्हि प्रकरण एव दीर्घसोमस्य विद्यमानत्वादुक्थ्यादि-संस्थास्वेव निवेशोऽस्य भविष्यति। किं सत्रादिष्वनेकाहेषूत्कर्षग्र-हणेनेति। उच्यते—स्यादेवं यदि संस्थासु व्यवस्थापकं प्रकरणं भवेत्। न तावत्प्रकरणम्, अग्निष्टोमसंस्थस्य हि ज्योतिष्टोमस्य प्रकरणं, न संस्थान्तराणाम्; तेषां विकृतित्वेन प्रकरणाभावात्। नापि क्रमः, तत्सन्निधिपाठाभावात्। वाक्यस्य च दीर्घसोमोल्लेखेन प्रवृत्तस्य सर्वसाधारणत्वात्। तेन यथा "य एतेनानिष्ट्वाथान्येन यजेत" इत्यत्रान्यशब्दो न संस्थामात्रविषयः, किन्त्वग्निष्टोमव्यति-रिक्तसकलसोमयागविषयः। तथा दीर्घसोमशब्दोऽप्यग्निष्टोमव्यति-रिक्तसकलसोमयागविषय एवेति। तदुक्तम्—

अग्निष्टोमान्यमात्रे हि दीर्घशब्दोऽवकल्पते।
अतोऽन्येनेतिवत्तस्मात्संस्थाक्रत्वन्तरग्रहः॥ इति।

(तं. वा., पृ. ८७५)

तेन यदेतद्भाष्यकारेणोक्तम्—प्रकरणानुग्रहाय संस्थास्वेव निवेश इति तद्धेयमेव ।

प्रयोजनम्—पूर्वपक्षे अग्निष्टोमेऽपि सन्तर्दनानुष्ठानम् । सिद्धान्ते तु तद्व्यतिरिक्तसोमयागेष्विति । सूत्रन्तु—प्रकृतज्योतिष्टोमादुत्कर्ष एव सन्तर्दनस्य वाक्येन दीर्घसोमविशेषग्रहणादिति ॥

इत्येकादशं सन्तर्दनाधिकरणम् ॥ ११ ॥

अथ द्वादशं प्रवर्ग्याधिकरणम्

संख्यायुक्तं क्रतोः प्रकरणात्स्यात् ॥ ३. ३. ३२ ॥

( विषयसंशयसङ्गतयः )

ज्योतिष्टोमे प्रवर्ग्यं प्रकृत्य श्रूयते—"न प्रथमयज्ञे प्रवृञ्ज्यात् द्वितीये वा तृतीये वा प्रवृञ्ज्यात्" इति । तत्र सन्देहः—किं ज्योतिष्टोमे सर्वेष्वेव प्रयोगेषु न प्रवर्जितव्यम् ? उत प्रथमे प्रयोगे प्रतिषेधः ? इति । पूर्वं वाक्यप्रकरणयोर्विरोधे प्रकरणाम्नातस्य वाक्येनोत्कर्षात्प्रकरणबाधं प्रतिपाद्येदानीमुत्कर्षेऽपि वाक्येन प्रकरणस्य बाधः प्रतिपाद्यते ।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षः—"न प्रथमयज्ञे प्रवृञ्ज्यात्" इति श्रूयते ।

यज्ञसमानाधिकरणश्च प्रथमशब्दः "एष वाव प्रथमो यज्ञानाम्" इत्यत्र ज्योतिष्टोमविषयो वेदेनैवाभ्यनुज्ञातः। प्रयोगवाचित्वे तु प्रथमशब्दस्य यज्ञसामानाधिकरण्यं विरुद्धयेत। न हि प्रयोगो यज्ञः, तदनुष्ठानरूपत्वात्। लक्षणाश्रयणे तु लक्षणैव दोषः। न हि प्रथमशब्दस्यापि यज्ञपरत्वे लक्षणादोषः। एवञ्च सति निषेधवाक्यस्य प्रकरणेन सह सामञ्जस्यं भवति। ननु "यत्प्रवर्ग्यं प्रवृञ्जन्ति" इति यद्यप्यनारभ्य श्रूयते, तथापि "पुरस्तादुपसदां प्रवर्ग्येण प्रचरन्ति" इति वाक्येनापादितज्योतिष्टोमसम्बन्धोऽयम्। निषेधस्य तु सर्वप्रयोगसम्बन्धे सति तस्य निरवकाशत्वमेव स्यात्। मैवम्; एतद्विधिप्राप्तिपूर्वकत्वान्निषेधस्य षोडशिग्रहणाग्रहणवद्विकल्पेनैवावकाशोपपत्तेः। तस्मात्प्रथमसंख्यायुक्तं प्रवर्ग्यप्रतिषेधनं सर्वप्रयोगयुक्तस्यैव क्रतोर्ज्योतिष्टोमस्य प्रकरणे स्यादिति। एवं प्राप्तेऽभिधीयते—

नैमित्तिकं वा कर्तृसंयोगाल्लिङ्गस्य तन्निमित्तत्वात्
॥ ३. ३. ३३. ॥

( सिद्धान्तः )

अयमभिप्रायः—भवेदेवं यदि प्रथमशब्दो ज्योतिष्टोममभिदध्यात्। किन्तर्हि? कर्तुरप्रवृत्तस्याद्यमनुष्ठानं प्रथमशब्देनाभिधीयते एतच्च लोकसिद्धमेव। न ह्यावृत्त्या भोजनं प्रथमं भोजनमित्युच्यते,

आवृत्तो वा यज्ञः प्रथमो यज्ञ इत्यभिजीयते। तद्योगादन्यत्र प्रथमशब्दो लाक्षणिकः। तेन क्रतावपि प्रथमशब्दः प्रथमानुष्ठानयोगाल्लाक्षणिक एव। तत्र "न प्रथमयज्ञे प्रवृञ्ज्यात्" इत्यत्र किं यज्ञशब्दानुरोधेन प्रथमशब्द एव यज्ञलक्षणार्थो भवतु ? प्रथमप्रयोगशब्दानुरोधेन वा यज्ञशब्द एव प्रथमानुष्ठानलक्षणार्थो भवत्विति सन्देहे "यो होता सोऽध्वर्युः" इतिवत्प्रथमोच्चरितप्रथमशब्दानुरोधेन यज्ञशब्द एव प्रयोगलक्षणार्थो युक्तः। न ह्यन्यत्र प्रथमप्रयोगस्य निषेधनिमित्तता सम्भवति, येन प्रथमप्रतीतोऽपि हीयेत। "एष वाव प्रथमो यज्ञानां यज्ज्योतिष्टोमः" इति ज्योतिष्टोमसमानाधिकरणेन प्रथमोच्चरितेन एषशब्देन समभिव्याहृतः प्रथमशब्दो युक्तं यल्लक्षणयाऽपि कर्मपरो भवतीति।

ननु भवतु प्रथमशब्दस्यानुष्ठानवचनत्वम्, यज्ञशब्दस्य च लक्षणया तत्परत्वम्, ज्योतिष्टोमप्रथमप्रयोगत्वन्तु कुतः ? प्रकरणस्य वाक्येन बाधितत्वात्। उच्यते—स्यादेवं यद्ययं विधिर्भवेत्। किन्तर्हि ? निषेधोऽयम्। स च प्राप्त्यपेक्षः, प्राप्तिश्च प्रवर्ग्यस्य "पुरस्तादुपसादां प्रवर्ग्येण प्रचरन्ति" इति उपसत्पूर्वभावनियमात्सोमयागादन्यत्रोपसदामभावात्तत्रापि 'प्रकृतौ वाद्विरुक्तात्' इत्यनेन न्यायेन ज्योतिष्टोमविषयत्वमेव। किञ्च प्राथम्यनिमित्तकोऽयं निषेधः, प्राथम्यञ्च "एष वाव प्रथमो यज्ञानाम्" इति वेदेन ज्योति-

ष्टोमस्यैव नियतम् । तेन वाक्येन प्रकरणं बाधित्वा ज्योतिष्टोमप्रथमप्रयोग एव प्रवर्ग्यप्रतिषेध इति सिद्धम् । तदुक्तम्—

यदि प्रथमशब्दोऽयं नाम स्याज्ज्योतिषः स्वतः ।
तत एवं भवेदेष प्रयोगस्य तु वाचकः ॥ इति ।

( तं. वा., पृ. ८७७ )

ननु तैत्तिरीयशाखायां ज्योतिष्टोमप्रकरण एवं श्रूयते— "अग्निष्टोमे प्रवृणक्ति" इति । तस्य तर्हि किंविषयत्वम् ? न तावदग्निष्टोमद्वितीयतृतीयादिप्रयोगविषयत्वम्, तत्र च प्रवृणक्तीति सामान्यवचनेनैव प्राप्तत्वात् । नापि प्रथमप्रयोगविषयत्वम्, तत्रापि सामान्यवचनेनैव प्राप्तेः । अप्राप्तौ सत्यां प्राप्तिपूर्वकस्य निषेधस्यासम्भवात् । नापि तत्रैव विकल्पप्रयोजनेनार्थवत्त्वम्, सामान्यवचनेनैव विकल्पस्यापि सिद्धत्वात् । "अग्निष्टोमे प्रवृणक्ति" इति कथमस्यार्थवत्त्वमिति वक्तव्यम् । तदुच्यते—अग्निष्टोमप्रथमप्रयोगे व्यवस्थितविकल्पार्थमेतद्वचनमिति ब्रूमः । न च सामान्यवचनेनैव तथाभूतविकल्पसिद्धिरिति वाच्यम् । यतः प्रतिषेधेनाग्निष्टोममात्रविषयत्वेनानुमतप्रामाण्येऽपि सामान्यविधिस्तावदवश्यंभावनीयः, अन्यथा विकल्पासम्भवात् । तत्र यदि प्रतिषेधोऽपि विधिवदेकप्रयोगसाधारणः स्यात्, तदा विधिनिषेधयोस्तुल्यविषयत्वादव्यवस्थयोपादानवर्जने स्याताम् । यथा

प्रथमैकप्रयोगविषयः प्रतिषेधस्तदा तद्गतसामान्यविधिबाधेनैव निषेधस्य चरितार्थत्वात् व्यवस्थितविषय एव विकल्पः। प्रथम-प्रयोगे प्रवर्ग्यानुष्ठानम्, द्वितीयादिप्रयोगे प्रवर्ग्यानुष्ठानमेव। एवञ्च सति "अग्निष्टोमे प्रवृणक्ति" इत्यस्य द्वितीयतृतीयाग्निष्टोम-प्रयोगे सामान्यवचनेनैव प्रवर्ग्यस्य प्राप्तत्वात्तत्र निरवकाशमिदं वचनम्। निषेधस्तु तमेव प्रथमप्रयोगं विकल्पार्थमालम्बते। तत्र चैकविषयत्वादेव विधिनिषेधयोर्व्यवस्थाया असम्भवात्पुरुषभेद-माश्रित्य व्यवस्थित एव विकल्पः परिदृश्यत इति। सोऽपि च श्रोत्रियानूचानब्राह्मणविषय एव। एवं हि श्रूयते—"कामन्तु योऽनूचानः श्रोत्रियः स्यात्तस्य प्रवृञ्ज्यात्" इति। अत्र कर्त्तृविशेषो-पादानेन "अग्निष्टोमे प्रवृणक्ति" इत्यस्यान्यत्रैवोपसंहारात्तेनाग्निष्टोम-प्रथमप्रयोगे श्रोत्रियब्राह्मणस्यैव विकल्पः। अश्रोत्रियब्राह्मण-क्षत्रियावैश्यानान्तु नित्यं करणमेव। तस्मात् प्रथमं "यजमानो-ऽतिरात्रेण यजेत" इति श्रवणाद्यद्यप्यतिरात्रस्यापि पाक्षिक-प्रथमप्रयोगनिमित्ता निषेधप्राप्तिरतिदेशतोऽस्ति, तथाप्यग्निष्टोमनिमि-त्तस्य प्रवर्ग्यविधानस्य निमित्तताभावेन तत्रासम्भवान्नित्यम-नुष्ठानमेव। अन्यासु तु विकृतिषु नित्यमेवानुष्ठानमिति।

प्रयोजनम्—पक्षोक्तम्। नैमित्तिकं प्रवर्ग्यप्रतिषेधनं कर्त्तुः प्रथमप्रवर्त्तकनैमित्तिकम्। कस्मात्? लिङ्गस्य प्रथमशब्दगताभि-

धानसामर्थ्यस्य तन्निमित्तत्वात् । कर्त्तुः प्रथमप्रवर्तननिमित्तत्वादिति सूत्रार्थः ॥

इति द्वादशं प्रवर्ग्याधिकरणम् ॥ १२ ॥

अथ त्रयोदशं पेषणाधिकरणम्

पौष्णं पेषणं विकृतौ प्रतीयेताचोदनात्प्रकृतौ ॥३.३.३४.॥

दर्शपूर्णमासयोः समामनन्ति—"तस्मात्पूषा प्रपिष्टभागोऽदन्तको हि सः" इति । तत्र सन्देहः—किं पौष्णं पेषणं प्रकृतौ ? उत विकृतौ ? इति । अयञ्च विचारः पूर्वोक्तसन्तर्दनन्यायेनैव गतार्थः । यतो न हि दर्शपूर्णमासयोः पूषा नाम देवता समस्ति । न च लक्षणया दर्शपूर्णमासदेवतवानेन प्रतिपाद्यते । "अदन्तको हि" इति हेतुवन्निगदसमवायात् । न ह्यग्न्यादीनामदन्तकत्वं वेदे पुराणे वा क्वचित्प्रतीतम् । पूष्णस्त्वदन्तकत्वं वेदे पुराणे च प्रतीयते । अस्ति च विकृतौ तस्य तस्य हविषः पूषा देवता । अतोऽर्थवत्त्वात्तत्रैव वाक्यबलेन पेषणमुत्कृष्यते । तदयं पूर्वन्यायसिद्धोऽप्यर्थ उत्तरविचारद्वयार्थं सङ्कीर्त्यत इति मन्तव्यम् ।

सूत्रन्तु—पूर्वसम्बन्धिपेषणं विकृतावुत्कृष्येत । प्रकृतौ तस्याचोदना अविधानमित्यर्थः ॥

इति त्रयोदशं पेषणाधिकरणम् ॥ १३ ॥

अथ चतुर्दशं पेषणस्य चरुविनियोगाधिकरणम्

तत्सर्वार्थमविशेषात् ॥ ३. ३. ३५.॥

( विषयसंशयसङ्गतयः )

पौष्णं पेषणं प्रकृतौ श्रूयमाणं विकृतावित्युक्तम् । तत्र सन्देहः—किं चरौ पशौ पुरोडाशे च ? उत चरावेव ? इति । प्रकरणं बाधित्वा वाक्यबलेनोत्कर्षं प्रतिपाद्येदानीमुत्कृष्टस्यैव पेषणस्य प्रसङ्गाद्विशेषश्चिन्त्यते । अत्रायं पूर्वपक्षः—"तस्मात्पूषा प्रपिष्टभागोऽदन्तको हि" इत्यविशेषप्रवृत्तमिदं वाक्यं यद्यत्पूषदेवत्यं हविस्तत्र तत्र पेषणं विदधाति । पूषदेवत्यश्चरुः पुरोडाशः पशुश्च । तेन त्रितयेऽसन्दिग्धमेव पेषणमिति । न चापिष्टेन पुरोडाशासम्भवात् पुरोडाशे पेषणविधानमनर्थकम् । अन्यार्थपिष्टक्रियार्थित्वेनापि पुरोडाशसिद्धौ प्रयोगगतानुष्ठानफलत्वेनैव विरोधात् । अतश्चरौ पुरोडाशे पशौ चाविशेषात्सर्वत्रैव पेषणमिति । एवं प्राप्तेऽभिधीयते—

चरौ वार्थोक्तं पुरोडाशेऽर्थविप्रतिषेधात्पशौ न स्यात्

॥ ३. ३. ३६ ॥

( सिद्धान्तः )

पुरोडाशे पशौ च पेषणं न भवति । तथाहि—पुरोडाशे

तावत्प्रयागगतानुष्ठानार्थमपि विधानमनर्थकम् । अतिदेशादेव प्रयोगगतपेषणस्य प्राप्तत्वात् । नापि पशौ, (?) अवत्तस्यैव पेषणे न विरोधपरिहारः, अवदानस्य पृथक्पदार्थत्वाभावात् । न त्ववदानं नाम पृथक् पदार्थः कर्त्तव्यत्वेन विधीयते । किन्तु स्विष्टकृदादिशेषकार्यवशेन एकदेशप्रदेपेण प्रदानावगमात्तस्य चावदानमन्त्रेणासम्भवादेकदेशप्रदानाक्षिप्तावदानानुवादेन द्वित्वमात्रं विधीयते । न प्रधानस्यैवायमारोपो (?) यदवदानं नाम । न चैकस्मिन्नुपक्रान्ते पदार्थे पदार्थान्तरेण व्यवधानं विधिरनुमन्यते । अतोऽन्यत्रावदानानन्तरं पेषणं सम्भवतीति हृदयस्यैव पेषणं वक्तव्यम् । तथा च सति हृदयापादानकमवदानं "उत्सादनदेशादवद्यति" इति विच्छेददेशादवदानमिति विप्रतिषेधात् न पशावपि पेषणमिति । ननु चरावपि विप्रतिषेधोऽस्ति । विशदशुद्धौदनवचनत्वाच्चरुशब्दस्य, पेषणे च सति वैशद्यविनाशात् । नैवम्; अनवस्रावितान्तरूष्मसिद्धत्ववचनो हि चरुशब्दः । तेन पाकविशेषस्यैव चरुशब्दप्रवृत्तिनिमित्तत्वात्तस्य च विशदसिद्धयोरविशेषात्पिष्टपक्वस्यापि चरुत्वाविरोधः । तेन प्राप्तिविप्रतिषेधयोरभावाच्चरावेव पेषणविधानमिति सिद्धम् । न च वाच्यम्—यथा पुरोडाशे तथा चरावप्यतिदेशप्राप्तमेव पेषणं न विधेयमिति । यतः पुरोडाशार्थपिण्डनिष्पत्तिः खलु द्वारमस्य प्रकृतौ, न

चरुस्तण्डुलमात्रेण निष्पद्यते । तेन द्वाराभावात्कृष्णलेष्विवावघातः पेषणं निवृत्तमपि पुनरदृष्टार्थं प्रतिप्रस्तूयत इति नानुपपन्नम् ।

प्रयोजनम्—पूर्वपक्षे चरौ पशौ च पेषणम् । सिद्धान्ते तु चरावेवेति । सूत्रन्तु—चरावेव पेषणं विधीयते, न पुरोडाशे, अतिदेशप्राप्तत्वात् । न पशौ, अर्थविप्रतिषेधादित्यर्थः ॥

इति चतुर्दशं पेषणस्य चरुविनियोगाधिकरणम् ॥१४॥

अथ पञ्चदशं पेषणस्यैकदेवत्ये निवेशाधिकरणम्

एकस्मिन्नेकसंयोगात् ॥ ३. ३. ३९ ॥

( विषयसंशयौ )

पौष्णं पेषणं विकृतौ भवति चरावेवेत्युक्तम् । अथेदानीमिदं सन्दिह्यते—किमेकदेवत्ये पौष्णं एतद्भवितुमर्हति ? उत द्विदेवत्ये ? इति । उदाहरणम्—राजसूय उत्तरे त्रिसंयुक्ते सोमापौष्ण एकादशकपाल ऐन्द्रापौष्णश्चरुः । सोमापौष्णस्य पुरोडाशत्वेनातिदेशप्राप्तत्वात्पेषणस्येदं प्रसक्तानुप्रसङ्गेन विचार्यते । तत्रैकस्मिन्नेव पूष्णि देवतायां पेषणं कर्त्तव्यम् । पूषेत्येकवचनेनैकस्यैव पूष्णः संयोगात् । "आग्नेयं चतुर्द्धा करोति" इत्येकस्मिन्ने-

वाग्नौ देवतायां चतुर्द्धाकरणमिवेति। किञ्च पूर्वपक्षे पाकवैषम्यं भवेत्। यतः पूष्णो भागस्तावदवश्यं पिष्ट्वा पक्तव्यः। इन्द्रस्य च तण्डुलात्मक एव। न च मृदुकठिनयोः पाकसाम्यं समस्ति। अथ वैषम्यप्रशमनार्थमिन्द्रस्यापि भागः पिष्येत, ततो भागसङ्करस्स्यात्। तदुक्तम्—

पिष्यादर्द्धं समस्तं वा द्विदेवत्ये चरौ भवान्।
पूर्वस्मिन् भागवैषम्यं परस्मिन् भागसङ्करः॥

(तं. वा., पृ. ८८३.)

इति सिद्धान्तेनोपक्रम्य पूर्वपक्षं गृह्णाति—

अपि वा सद्वितीये स्याद्देवतानिमित्तत्वात्॥ ३.३.४१॥

(पूर्वपक्षः)

अत्रायं पूर्वपक्षः—"पूषा प्रपिष्टभागः" इत्यत्र पूषसद्भावनिमित्तं हि पेषणमवगम्यते। न तु पूषविशेषितहविर्निमित्तम्। नापि पूषविशेषितयागसम्बन्धिहविर्निमित्तम्। तथा सति द्विदेवत्यस्य हविषो द्विदेवत्यस्य वा यागस्यान्यसापेक्षदेवताभावेन पूष्णा विशेष्टुमशक्यत्वान्न भवत्येव पेषणम्। यदा तु पूषसद्भावमात्रनिमित्तमिदं पेषणम्, तदा द्विदेवत्येऽपि पूष्णो भावात्तदुपलक्षितस्य 'समं स्यात्' इति न्यायेनार्थरूपस्य विद्यमानत्वाद्द्विदेवत्येऽपि पेषणं युक्तम्।

तदुक्तम्—

> हविर्विषेो यदि पैष्णस्य तद्यागाङ्गस्य वा भवेत् ।
> अनुक्तत्वाद्द्विदेवत्ये न भवेत्पेषणं ततः ॥ इति ।

(तं. वा., पृ. ८८५)

न चाग्नेयचतुर्द्धाकरणवन्निरपेक्षपूषदेवतासम्बन्धिन्येव हविषि पेषणमिति वाच्यम् । यतस्तत्र तद्धितान्तमाग्नेयपदम् । न च सापेक्षा तद्धितस्योत्पत्तिरिति युक्तं निरपेक्षाग्निदेवत्य एव चतुर्द्धाकरणम् । न चेह तद्धितान्तत्वमस्तीति वैषम्यम् । ननु "इन्द्रपीतस्य भक्षयामि" इत्यत्र समासोऽपि सापेक्षस्यानिषिद्ध एव । "पूषा प्रपिष्टभाग" इति च समास एव । अतः कथं द्विदेवत्यस्य ग्रहणम् । उच्यते—प्रपिष्टभागशब्दो हि समासान्तो न तु पूषेति प्रथमान्तं पदम् । अतः पूष्णोऽसमस्तत्वात्सापेक्षत्वेऽपि न विरोधः । नापि पौष्णभागपेषणे पाकवैषम्यम् । अर्द्धपक्वे तण्डुले पिष्टनिक्षेपेण पाकसाम्योपपत्तेः । अथवा असम्भवेन विभिन्नस्थालीपाकादेव पाकस्य साम्यं भविष्यतीति सद्वितीयेऽपि पूष्णि पूषसद्भावमात्रनिमित्तत्वात्पेषणं कर्तव्यमेवेति । एवं प्राप्तेऽभिधीयते—

एकस्मिन्वार्थधर्मत्वादैन्द्राग्नवदुभयोर्न स्यादचोदितत्वात् ॥ ३. ३. ४४ ॥

(सिद्धान्तः)

अयमभिप्रायः—भवेदेवं यदि पूषसद्भावनिमित्तं पेषणं

भवेत् । न त्वेवमस्ति, निमित्तस्याप्रतीतत्वात् । किन्तर्हि ? "पूषा प्रपिष्टभागः स्यात्" इति वाक्यात्पूषभागनिमित्तमेतत्पेषणं प्रतीयते । न च तदपि सम्भवति, देवताया मुख्य एवासम्भवात् । भजसेवायामित्यस्मात्कर्मसाधनोऽयं भागशब्दः । भज्यते सेव्यत इत्यर्थः । न च देवता हविः सेवते, देवताया भोक्तृत्वस्य नवमे निषेधात् । तेन लाक्षणिकोऽयं भागशब्दः । यद्धि यदुद्देशेन त्यज्यते तत्तेन भज्यत इति लोकसिद्धम् । तेन मुख्यभजनत्वासम्भवात्तत्पूर्वभाव्युद्देशत्यागो लक्ष्यते । तेनायमर्थः—पूषणमुद्दिश्य यः त्यज्यते स पूष्णो भागः । न चैन्द्रापौष्णं हविः पूषणमुद्दिश्य त्यज्यते, इन्द्रपूषव्यासङ्गित्वादुद्देशस्य । तेनैतत्पेषणं पूषमात्रप्रयुक्तं न, नापि तद्भागप्रयुक्तम् । किन्तु तदुद्देशत्यागरूपयागद्वारेण यागापूर्वप्रयुक्तम् ।

तदुक्तम्—

न ह्येष देवताधर्मो न तद्भागस्य गम्यते ।
पूषदेवत्ययागार्थं धर्मस्त्वेष प्रतीयते ॥ इति ।

( तं. वा., पृ. ८८७ )

न चेन्द्रपूषभागापूर्वपेषणं कर्त्तव्यं न तु द्विदेवत्ये (?) ।

प्रयोजनम्—पक्षोक्तम् । सूत्रन्तु—एकस्मिन्नेव पूष्णि देवतावाक्येऽर्थशब्दो भवेत् । यागात्मथमरूपार्थधर्मत्वात् । क्रतुभ-

योरिन्द्रपूष्णोर्द्वैवत्ये ऐन्द्राग्नवत् । यद्वा "आग्नेयं चतुर्द्धा करोति" इति चतुर्द्धाकरणवद्द्विदेवत्ये ऐन्द्राग्न (?) इति ॥

यो नाम कश्चिदिह संविदितं प्रमेयं
ग्रन्थान्तरे लिखति वा वदति स्वयं वा ।
मत्कर्तृतामननुकीर्त्य स कीर्त्तिलोपात्
निस्सन्ततिर्जगति जन्मशतानि भूयात् ॥

इति पञ्चदशं पेषणस्यैकदेवत्ये निवेशाधिकरणम् ॥ १५ ॥

इति श्रीबालवलभीभुजङ्गापरनाम्नो भट्टभवदेवस्य कृतौ
तृतीयस्याध्यायस्य तृतीयः पादः ॥

अथ तृतीयाध्यायस्य पञ्चमः पादः[1]

तत्र प्रथममुपांशुयाजे शेषकार्याभावाधिकरणम्

आज्याच्च सर्वसंयोगात् ॥ ३. ५. १. ॥

( विषयसंशयसङ्गतयः )

स्तो दर्शपूर्णमासौ । तत्र श्रूयते—"उत्तरार्द्धात्स्विष्टकृते समवद्यति, इडामवद्यति" इति । तथान्यान्यपि शेषकार्याणि । तत्र सन्देहः—किमाज्यादुपांशुयाजद्रव्यात्स्विष्टकृदर्थमवदातव्यम् ?

१. तृतीयाध्यायस्य चतुर्थः पादः उपलब्धमातृकायां नास्ति ।

उत नेति । सर्वप्रदानाधिकरणे शेषसद्भावः प्रतिपादितः । 'सर्वेभ्यो वा कारणाविशेषात्' (जै. सू., ३. ४. ४४.) इत्यत्र सर्वेभ्यो हविर्भ्यः शेषकार्यं कर्तव्यमिति निरूपितम् । तस्येदानीमतिप्रसक्तस्यापवादः क्रियते ।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षः—"शेषात्स्विष्टकृते समवद्यति" इत्यादिशेषकार्यविधीनामविशेषप्रवृत्तत्वादुपांशुयाजस्यापि यदाज्यद्रव्यं तत्प्रतिपत्तित्वमविशिष्टं स्विष्टकृदादिकर्मणामिति । ननु नावश्यं तावदाज्यद्रव्यस्य सर्वार्थत्वाच्छ्रुतेरप्युपांशुयाजशेषत्वेन प्रतिपत्त्यपेक्षित्वम् । नापि जौहवस्याज्यस्य ; "चतुरवत्तं जुहोति" इति वचनेन कृत्स्नस्यैव होमसम्बन्धावगमात् । अतः कथमुपांशुयाजाज्यसमर्थत्वं स्विष्टकृदादानामिति । उच्यते—यद्यपि जौहवाज्यस्य "चतुरवत्तं जुहोति" इति सम्बन्धः प्रतीयते, तथापि स्विष्टकृदादीनां प्रकरणावगतसकलप्रधानसम्बन्धनिर्वाहाय जुह्वां किञ्चिच्छेषयितव्यम् । यथा "चमसैर्जुहोति" इत्यत्र सत्यपि होमसम्बन्धे शेषकार्यवशेन शेषः स्थाप्यते, तथात्रापीति । एवञ्च "सर्वेभ्यो हविर्भ्यः समवद्यति" इति सर्वहविस्सम्बन्धानुवादोऽप्युपपत्स्यते । तेनाज्यादपि स्विष्टकृदर्थमवदातव्यम् । अविशेषेण सर्वसंयोगावगमादिति । एवंप्राप्ते—

अशेषत्वात्तु नैवं स्यात्सर्वादानादशेषता ॥ ३.४.४. ॥

( सिद्धान्तः )

अयमभिप्रायः—भवेदेवं यद्युपांशुयाजद्रव्यस्याज्यस्य शेषो भवेत्, तथाहि—ध्रुवायां तावदुपांशुयाजस्य शेषो नास्तीत्युक्तमेव। न च जुह्वामप्यस्ति। "चतुरवत्तं जुहोति" इति वचनेन कृत्स्नस्यैव होमसम्बन्धावगमात्। न च कृत्स्नस्य होमसम्बन्धेऽपि शेषकार्यवशेनैव शेषस्थापनमिति वाच्यम्। शेषकार्याणां प्रतिपत्तिरूपत्वेन द्रव्यस्थापनप्रयोजकत्वाभावात्। चमसेषु न शेषकार्यवशेन शेषस्थापनम्। किन्तु वचनवशादेव। एवं हि तत्र श्रूयते—"अल्पं जुहोति" इति। न चात्र वचनमेवंभूतमस्ति। यत्तु "सर्वेभ्यो हविर्भ्यः समवद्यति" इत्यनुवाददर्शनात्सर्वत्रैव शेषसद्भाव इत्युक्तम्, तदयुक्तम्; अनुवादत्वेन सर्वशब्दस्य यथाप्राप्तगोचरत्वात्। 'सर्वे ब्राह्मणा भुक्तवन्त' इतिवद्विद्यमानशेषविषयत्वेनोपपत्तेः। अतः शेषाभावादुपांशुयाजाज्ये नास्ति शेषकार्यमिति।

प्रयोजनम्—पक्षोक्तम्। सूत्रन्तु—अशेषत्वाच्छेषाभावान्नास्ति शेषकार्यम्। अशेषत्वञ्च सर्वस्यैव होमार्थमादानादिति॥

इति प्रथमम्रुपांशुयाजे शेषकार्याभावाधिकरणम् ॥१॥

## अथ द्वितीयं साकंप्रस्थायीये शेषकार्याभावाधिकरणम्

### साकं प्रस्थायीये स्विष्टकृदिडञ्च तद्वत् ॥३.५.१३॥

(विषयसंशयौ)

दर्शपूर्णमासौ प्रकृत्य श्रूयते—"साकम्प्रस्थायीयेन यजेत" इति। तत्र सन्देहः—किं स्विष्टकृदस्ति नास्तीति। अत्रोदाहरणान्तरेऽधिकाशङ्कां निराकर्तुं पूर्वोक्तन्यायोऽतिदिश्यते। इह च साकम्प्रस्थायीयं नाम कर्मान्तरं न विधीयते। किन्तु सान्नाय्यपात्राभ्यां दधिपयःपूर्णकुम्भीभ्यां सह प्रस्थानलक्षणो गुणः पशुरूपे फले विधीयत इति रथन्तरपादे 'अयनेषु चोदनान्तरं संज्ञोपबन्धात्' इत्यत्राधिकरणे स्थापितम्। इदानीं शेषकार्यमत्रास्ति नवेति विचार्यते।

(पूर्वपक्षः)

अत्रायं पूर्वपक्षिणोऽभिसन्धिः—कुम्भीभ्यां सह प्रस्थानलक्षणो गुणः फलाय विधीयमानः सानाय्याधिकारभूत इति तावत्सिद्धम्। प्रकृतौ च स्विष्टकृदिन्द्रप्रदानार्थसान्नाय्यादवदीयत इत्यपि सिद्धम्। तद्विकारत्वादतिदेशप्राप्त इहाप्यवदातव्यम्। न चात्रोपांशुयाजवच्छेषो नास्तीति वाच्यम्। तत्र हि ध्रौवाज्यस्य साधारणत्वाज्जौहवाज्यस्य च "चतुरवत्तं जुहोति" इति वचनेन

सर्वस्यैव होमसम्बन्धावगमात् युक्तः शेषाभावः। इह तु सान्नाय्यस्य साधारणत्वाभावात्कृत्स्नहोमविधानाभावाच्च शेषभावादतिदेशप्राप्तैः शेषकार्यैर्भवितव्यमिति। एवं प्राप्ते—

( सिद्धान्तः )

अभिधीयते—भवेदेवं यद्यत्रापि शेषः सम्भवेत्। तथा हि—यावद्धोतव्यं द्रव्यं तावतैव सहाहवनीयदेशं प्रति प्रस्थीयत इति युक्तम्। तदिह होमार्थं कुम्भीभ्यां सह प्रस्थानविधानं कुम्भीयमिति तस्यैव यदि होमसम्बन्धो विधीयते तदैव परं दृष्टार्थं भवति, इतरथा त्वदृष्टार्थत्वप्रसङ्गः। न चाहवनीयदेशात्कुम्भीभ्यां सह प्रस्थायावदाय होतव्यमिति वाच्यम्। "अग्नीधे स्रुचौ प्रदाय सह कुम्भीभिरभिक्रामन्नाह" इत्यवदानसाधनस्रुक्परित्यागेन गमनविधानासम्भवात्। तेनापि कुम्भीपरिमितस्यैव सान्नाय्यस्य होमसम्बन्धावगमेन शेषाभावान्नास्ति शेषकार्यमिति सिद्धम्।

प्रयोजनम्—पक्षोक्तम्। सूत्रन्तु साकंप्रस्थायीयेऽप्युपांशुयाजवत्स्विष्टकृदिडं न कर्त्तव्यमिति॥

इति द्वितीयं साकम्प्रस्थायीये शेषकार्याभावाधिकरणम् ॥२॥

## अथ तृतीयं सौत्रामण्यां शेषकार्याभावाधिकरणम्

### सौत्रामण्याञ्च ग्रहेषु ॥ ३. ५. १४ ॥

( विषयसंशयसङ्गतयः )

अस्ति सौत्रामणी । तत्र ग्रहाः श्रूयन्ते आश्विनसारस्वतैन्द्राः । तत्र केषाञ्चित्पिष्टप्रभवसुराद्रव्यकत्वेनाग्नेयविकारत्वाच्चोदकेन स्विष्टकृदिदं प्राप्तम् । अथेदानीं सन्देहः—किन्निवर्तते ? उत नेति । अत्राप्युदाहरणान्तरेष्वधिकाशङ्कां निराकर्तुं स एव न्यायोऽतिदिश्यते ।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षः—केषाञ्चित् पिष्टद्रव्यप्रभवसुराद्रव्यकत्वेनाग्नेयविकारत्वात् पयोद्रव्यकत्वेन च सान्नाय्यविकारत्वादतिदेशात् स्विष्टकृदादिशेषकार्यप्राप्तिस्तावदस्ति । न च शेषो नास्ति । ज्योतिष्टोमसोमचमसेष्विव वार्त्तानिकशेषसद्भावस्य प्रतीयमानत्वात् । एवं ह्यत्र श्रूयते—"उच्छिनष्टि न सर्वं जुहोति" इति । अतः शेषसद्भावादस्ति शेषकार्यमिति । ननु शेषस्य प्रतिपत्त्यन्तरं श्रूयते । तत्र ग्रहस्य तावत्—"ब्राह्मणं परिक्रीणीयादुच्छेषणस्य पातारम्" इति परिक्रीतब्राह्मणस्य पातुः, सुराग्रहशेषस्यापि "शतातृण्णायां विक्षारयन्ति" इति शतातृण्णारूपपात्रविशेषे क्षारणमिति बलीय-

सौपदेशिकप्रतिपत्त्यन्तरेणातिदेशिकप्रतिपत्तेर्बाध एवेति । मैवम्; विरोधाभावात्, स्विष्टकृदाद्यनुष्ठानावशिष्टस्यैव चतुर्द्धापुरोडाशभक्षणावत् पानविस्तारणयोरुपपत्तेः । तेन शेषसद्भावात् कर्त्तव्यमेव शेषकार्यमिति । एवं प्राप्ते—

( सिद्धान्तः )

अभिधीयते—भवेदेवं यदि कृत्स्नस्यैव शेषस्यौपदेशिकप्रतिपत्तिसम्बन्धो न भवेत् । तथाहि—"पयोग्रहान् जुहोति" इति वचनात् कृत्स्नस्यैव होमसम्बन्धः प्रतीयते । तत्र यथा "उच्छिनष्टि न सर्वं जुहोति" इति वचनेन शेषसद्भावः प्रतिपाद्यते । तथा कृत्स्नस्यैव शेषस्य परिक्रीतब्राह्मणभक्षणशतातृणाद्वारणसम्बन्धेनोपदेशादेवावगतत्वात् न किञ्चित्कर्त्तव्यमिति न प्रतिपत्त्यन्तरापेक्षा समस्ति, येनातिदेशिकी प्रतिपत्तिः सम्बध्यते । पुरोडाशे तु "उत्तरार्द्धात्स्विष्टकृते समवद्यति" इत्येकदेशमात्रस्यैव स्विष्टकृदाद्यर्थत्वादवशिष्टस्य चतुर्द्धाकृतस्य वचनवशाद्भक्षणार्थत्वमपि । न चेह तथेति शेषाभावान्नास्ति स्विष्टकृदादिशेषकार्यमिति सिद्धम् ।

प्रयोजनम्—पक्षोक्तम् । सूत्रन्तु—सौत्रामण्यां ग्रहेषु शेषकार्यं न कर्त्तव्यमिति न शास्त्रादतिदिश्यत इति ॥

इति तृतीयं सौत्रामण्यां शेषकार्याभावाधिकरणम् ॥ ३ ॥

## अथ चतुर्थं सर्वपृष्ठेष्ट्यधिकरणम्

### द्रव्यैकत्वे कर्मभेदात्प्रतिकर्म क्रियेरन् ॥ ३. ५. १६ ॥

(विषयसंशयसङ्गतयः)

अस्ति सर्वपृष्ठेष्टिः—"इन्द्राय राथन्तराय, इन्द्राय बार्हताय इन्द्राय वैरूपाय इन्द्राय वैराजायेन्द्राय शाक्कराय इन्द्राय रैवताय" इति। तत्र पुरोडाशो बहूनां कर्मणां साधारणः। तत्र सन्देहः— किं प्रतिकर्म स्विष्टकृदिडं कर्त्तव्यम्? उत सकृदेवेति। पूर्वं शेषकार्यमेव नास्तीति चिन्तितम्। इदानीं सत्सु शेषकार्येषु प्रसङ्गेन तद्विशेषश्चिन्त्यते। अत्रैक एवेन्द्रः श्रूयते तथापि रथन्तरवैरूपादिविशेषणभेदेन देवताभेदाद्गुणादेव षडेव कर्माणि भिन्नानीति व्यवस्थितम्। तत्र येषां शाखिनां प्रतिकर्म षडेव पुरोडाशास्तेषां नायं विचारः। येषान्तु षट्कर्मसाधारण एक एव पुरोडाशो रथचक्रपरिमितः श्रूयते तेषामयं विचारः–कर्मभेदात्प्रतिकर्म शेषकार्यं कर्त्तव्यम्? उत द्रव्यैकत्वान्नेति। ननु 'एकद्रव्ये च संस्काराणां व्याख्यातमेकत्वम्' इत्येकादशाधिकरणेनैव गतमिदम्। तत्र ह्यातिथ्योपसदग्नीषोमीयानेककर्मसाधनेऽपि बर्हिषि द्रव्यैकत्वे लवनादिसंस्काराणां तन्त्रत्वमिति निरूपितम्, तद्वदिहाप्यनेककर्मसाधनस्याप्येकस्य पुरोडाशस्य स्विष्टकृदादयः संस्कारास्तन्त्रं भविष्यन्तीति। उच्यते–

( पूर्वपक्षः )

अत्रायं पूर्वपक्षिणोऽभिसन्धिः—साधारणाङ्गगामिनो हि संस्कारे न पुनः संस्कारापेक्षा समस्तीति भवतु तद्गामिनां संस्काराणां विशेषाग्रहणात्तन्त्रत्वम् । इह पुनरेकत्वेऽपि पुरोडाशावयवभेदेनानेककर्मसाधनत्वे सति विशेषग्रहणात्संस्कृतेऽप्येकदेश एकदेशान्तरस्य संस्कारापेक्षा समस्तीति न तन्त्रत्वम् । अतो द्रव्यैकत्वेऽपि कर्मभेदाद् भेदेनैव स्विष्टकृत्संस्कारः कर्त्तव्य इति । एवं प्राप्तेऽभिधीयते—

अविभागाच्च शेषस्य सर्वान् प्रत्यविशिष्टत्वात्॥३.५.१७॥

( सिद्धान्तः )

अयमभिप्रायः—भवेदेवं यद्ययं हूयमानसंस्कारः कर्मसंस्कारो वा भवेत् । तथाहि—अवदानदेशद्वारेण कर्मणा हूयमानस्य च संस्कारादवदानदेशस्य च भिन्नत्वाद्विशेषग्रहणाद्भवत्येवावृत्तिः । न त्वेतदस्ति, अदृष्टार्थत्वप्रसङ्गात् । किन्त्वतिदेशप्राप्तोऽयं प्रकृत्यनुसारेण श्रुतशेषसंस्कारः । एक एव चासौ पुरोडाशः सर्वसाधारणो भवति । तदुक्तम्—

न ह्येतत्कर्मसंस्कारो हूयमानस्य चेष्यते ।
हुतशेषसमानत्वात्तन्त्रत्वं तु प्रतीयते ॥ इति ।

(तं. वा., पृ. ८४६)

प्रयोजनम्—पक्षोक्तम् । सूत्रन्तु अविभागादेकत्वाच्छेषस्य सर्वान् प्रत्यविशिष्टत्वात् साधारणत्वात् तन्त्रत्वमेव स्विष्टकृदादीनामिति ॥

इति चतुर्थं सर्वपृष्ठेष्ट्यधिकरणम् ॥ ४ ॥

अथ पञ्चममैन्द्रवायवे द्विर्भक्षणाधिकरणम्

ऐन्द्रवायवे तु वचनात् प्रतिकर्म भक्षः स्यात् ॥३.५.१८॥

( विषयसंशयसङ्गतयः )

अस्ति ज्योतिष्टोमः—"ज्योतिष्टोमेन स्वर्गकामो यजेत" इति । तत्रैन्द्रवायवग्रहे सन्देहः—किं सकृत् भक्षणम् ? उत द्विरिति । अत्रानन्तराधिकरणप्रतिपाद्यं सोमशेषभक्षणं सिद्धं कृत्वा पूर्वाधिकरणापवादत्वेनानन्तरमिदमारभ्यते ।

( पूर्वपक्षः )

तत्रायं पूर्वपक्षः—ऐन्द्रवायवे हि द्विरावृत्तो होमो द्रव्यं चैकमेव । तत्र पूर्वाधिकरणन्यायेन सकृद्भक्षणेनैव शेषप्रतिपत्तिसिद्धेः सकृदेव भक्षणमिति । एवं प्राप्ते—

( सिद्धान्तः )

अभिधीयते—भवेदेवं यदि भक्षणावृत्तिप्रतिपादकं वचनान्तरं

न भवेत्। एवं हि श्रूयते—"छिरैन्द्रवायवस्य भक्षयति छिद्यैंतस्य वषट्करोति" इति। अतो वचनवलाद्भक्षणमप्यावृत्तमिति सिद्धम्। तदेतद्यथाभाष्यमधिकरणं श्रीमद्वार्त्तिककारपादा नानुमन्यन्ते, सन्देहाभावात्। न हि प्रत्यक्षवचने सति सन्देहो भवति। नन्वेवं-विधान्यधिकरणानि दृश्यन्त एव, येषु न्यायेन पूर्वपक्षे वचनेन सिद्धान्तः। यथा वार्त्तिककारमते वायव्यपशावतिदेशप्राप्ता "त्वं ह्यग्ने प्रथमो मनोता" इत्याग्नेयी मनोता। तत्र वायुपदोहेन प्रयोक्तव्यमिति न्यायात् पूर्वपक्षं कृत्वा "यद्यप्यन्यदेवत्यः पशुराग्नेय्येव मनोता कार्या" इति वचनात् सिद्धान्तितम्, तथेहापि स्यादिति। नैतत्; तत्रैव तद्भवति यत्र प्रतिपादितो न्यायो वचनाद्बाधितो भवति। वचनाभावे स न स्यात्। यथा मनोतायाम्। एवं हि तत्र न्यायः—अग्नीषोमीये पशौ यद्यपि समुदितयोर्देवतात्वं मनोता चाग्निमात्रप्रकाशिका, तथाप्यग्नेः समवेतत्वान्मन्त्रस्य च समवेतप्रकाशनेन सर्वत्रार्थवत्वात्प्रकृतौ मन्त्र-प्रयोगे सति अग्निरहितायां विकृतावूहः कर्त्तव्य इति। स चैष न्यायो वचनेन बाधितः। यत्र समुदितदेवत्ये प्रकृतौ कर्मण्यन्यतरप्रकाश-नेन समवेतार्थो मन्त्रो विकृतौ अन्यदेवत्ये कर्मण्यूहेन प्राप्नोति, तत्र फलिष्यति। इह तु पूर्वाधिकरणेनैवास्य न्यायस्य सिद्धत्वा-त्किमनेनाधिकरणेनेति। सूत्रन्तु पूर्वाधिकरणशेषत्वेनैव व्याख्येयम्।

तथाहि—एवं तत्र शङ्कनीयम्—"द्विरैन्द्रवायवस्य भक्षयति द्विर्ह्येतस्य वषट्करोति" इत्यत्र हि वषट्कारोपलक्षितप्रधानभेदादेव भक्षणरूपप्रतिपत्तिभेदं वेद एव प्रतिपादयति। तेन सर्वपृष्ठायां सत्यपि द्रव्यैकत्वे प्रधानभेदात्स्विष्टकृदादिप्रतिपत्तिभेदेन भवितव्यमेवेति। तत्रेदमुपात्तम्—ऐन्द्रवायवे तु वचनात् प्रतिकर्म भक्षः स्यादिति। अस्यार्थः—नात्र प्रधानभेदहेतुकः प्रतिपत्तिहेतुभेदः प्रतिपाद्यते। किन्तर्हि? वाचनिकं, हेत्वधिकरणे चैवंविधानां हेतुत्वस्य निराकृतत्वादिति। एवञ्च पूर्वाधिकरणशेषत्वे सति सोमभक्षसामान्यविचारमकृत्वा विशेषविचारव्यतिक्रमो न भविष्यतीति॥

इति पञ्चममैन्द्रवायवे द्विर्भक्षणाधिकरणम् ॥५॥

## अथ षष्ठं सोमे शेषभक्षाधिकरणम्

सोमेऽवचनाद्भक्षो न विद्यते ॥ ३.५.१९ ॥

( विषयसंशयसङ्गतयः )

ज्योतिष्टोमे सन्ति सोमाः। तेषु सन्देहः—किं तेषां शेषो भक्षयितव्यः? उत नेति। दर्शपूर्णमासयोः शेषप्रतिपत्तिं विचार्येदानीं प्रसङ्गेन ज्योतिष्टोमस्य सोमशेषभक्षणरूपा प्रतिपत्तिर्विचार्यते।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षः—यद्यपि "अल्पं जुहोति" इति वचनाद्ग्रह-चमसयोरस्ति सोमशेषः, तथापि भक्षणरूपप्रतिपत्तिप्रापकोपदेशा-भावान्मूलप्रकृतित्वेन चातिदेशासम्भवान्नास्ति भक्षणमिति । ननु चैन्द्रवायवे तावत् "द्विरैन्द्रवायवस्य भक्षयति" इत्युपदेशात् भक्षणं प्राप्नोतीत्युक्तमेव । एवमन्यत्रापि भक्षणप्रतिपादकलिङ्गदर्शनमस्ति—"सर्वतः परिहारमाश्विनं भक्षयति" इति । अत्र प्राप्तभक्षणानुवादेन सर्वतः परिहारलक्षणं भक्षणस्य निःशेषत्वं विधीयते । तथा "भक्षिताप्यायितांश्चमसान्दक्षिणस्यावलम्बे हविर्धाने सादयन्ति" इत्यत्रापि प्राप्तभक्षणानुवादेन चमसस्य हविर्धानदक्षिणदेशासादनं विधीयते । एकदेशस्थमपि च लिङ्गं स्थालीपुलाकन्यायेन सर्वत्र प्रापकमस्ति । अतोऽस्ति सर्वत्रैव भक्षणमिति । तदुक्तं सूत्रकृता-'स्याद्वान्यर्थदर्शनात्' इति । मैवम्; प्रमाणान्तरावगतार्थद्योतकं लिङ्गम्, न तु प्रापकम् । न चात्र प्रमाणान्तरं प्रापकमस्तीति न भक्षणमिति । अथ प्रापकप्रमाणाभावादेव तान्येव वचनान्यङ्गता-विशिष्टविधानाद्भक्षणप्रापकाणि, तथापि यथोपदेशमेव भक्षणं न सर्वत्र । तदुक्तं सूत्रकृता—'वचनान्यपूर्वत्वात् तस्माद्यथोपदेशं स्युः' इति । यत्त्वापाततः सिद्धान्तसूत्रत्वेनैवैतत्सूत्रं भाष्ये प्रतिभाति, न तत्तथैव ग्राह्यम् । किन्तु वार्त्तिकानुसारेण भाष्यमप्यवहितैः

पूर्वपक्षानुगुणत्वेनैव कार्यमिति। अतो यावद्वचनमेव सोमभक्षणमिति। एवं प्राप्तेऽभिधीयते—

चमसेषु समाख्यानात् संयोगस्य तन्निमित्तत्वात्॥३.५.२२॥

( सिद्धान्तः ).

अयमभिप्रायः—भवेदेवं यद्यत्र समाख्यादिभेदभिन्नः सर्वत्रैवोपदेशो भक्षणस्य प्रापको न भवेत्। तथाहि—चमसेषु तावत् "प्रैतु होतुः चमसः प्र ब्रह्मणः प्रोद्गातॄणां प्र यजमानस्य" इत्येवमादिकाः प्रैषगतास्समाख्याः सन्ति। चमससमाख्याश्चादनार्थस्य चमुधातोः प्रयोगादद्यते अस्मिन्नित्यर्थे भवन्ति। न च प्रैषवेलायां तत्र चमनं भूतं वर्त्तमानं वोपलभ्यत इति पारिशेष्याद्भविष्यच्चमनप्रतिपादक एवोपदेशोऽनुमीयते। "अल्पं जुहोति" इति दर्शनात् सोमशेषवन्तश्चमसाः प्रेषिता इति तस्यैवापेक्षिता प्रतिपत्तिरिति शेषस्य भक्षणं गम्यते। न च होत्रादीनामेव चमसिनां होत्रादिसम्बन्धेनैव समाख्यादर्शनात्। किञ्च यदि प्र यजमानस्येति समाख्यया यजमानस्य शेषभक्षणं प्राप्यते, तदा "यदि राजन्यं वैश्यं वा याजयेत् स यदि सोमं बिभक्षयिषेत्" इत्यत्र फलचमसविधौ "न सोमम्" इति सोमभक्षणप्रतिषेधसङ्कीर्त्तनं नावकल्पेत समाख्याव्यतिरिक्तस्य यजमानचमसे भक्षणप्रापकस्याभावात्। तस्मादस्ति चमसेषु समाख्यया भक्षणमिति सिद्धम्।

प्रयोजनम्—पूर्वपक्षे यदि यावद्वचनं भक्षणं तदा न होत्रादीनां चमसेषु भक्षणम्। सिद्धान्ते तु समाख्यया होत्रादीनां भक्षणमिति। सूत्रन्तु—समाख्याबलाच्चमसेष्वस्ति शेषभक्षणं समाख्यया भक्षणं संयोगनिमित्तत्वादिति ॥

इति षष्ठं सोमे शेषभक्षप्रतिपादनाधिकरणम् ॥ ६ ॥

अथ सप्तमं ससुब्रह्मण्योद्गातृभक्षाधिकरणम्

उद्गातृचमसमेकः श्रुतिसयोगात ॥ ३. ५. २३ ॥

( विषयसंशयसङ्गतयः )

अस्ति ज्योतिष्टोमः—"ज्योतिष्टोमेन स्वर्गकामो यजेत" इति। तत्रास्ति प्रैषः—"प्रैतु होतुश्चमसः प्र ब्रह्मणः प्रोद्गातृणाम्" इति। अत्र समाख्यानाद्भक्ष इत्युक्तम्। तत्र सन्देहः—किमेक एव चमसमुद्गाता भक्षयेत्? उत सर्वे भक्षयेयुः? अथ वा सुब्रह्मण्य-वर्जिताश्छन्दोगा भक्षयेयुः? अथवा सह सुब्रह्मण्येन? इति। समाख्यानिमित्तं भक्षणं प्रतिपाद्येदनीं प्रसङ्गात् तद्गतविशेष-श्चिन्त्यते। अत्र बहुवचनश्रुतेः प्रकृतिप्रत्ययविसंवादेन सन्देहः। प्रोद्गातृणामित्यस्यैव विचारविषयत्वम्।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षः—उद्गातृणामिति बहुवचनं श्रूयते। एकश्चो-

द्गाता, "उद्गातारं वृणीत" इति वचनात्। तत्र प्रकृतिप्रत्यययोरन्यतरार्थपरित्यागेऽवश्यकर्त्तव्ये संख्यायाः संख्येयगुणभूतत्वाद् 'गुणे त्वन्याय्यकल्पनैकदेशत्वात्' इति न्यायेन प्रातिपदिकार्थासम्भविनो बहुत्वस्याविवक्षितत्वादुद्गातृश्रुतिसंयोगादुद्गातृचमसे एक एवोद्गाता भक्षयेदिति। अथवा पाशमन्त्रप्रकरणे बहुत्वं न केनचित्प्रकारेणास्तीत्यविवक्षा युक्ता। इह तु प्रकरणे ऋत्विजो बहवः सन्त्येव। शक्नोति चोद्गातृशब्द एककर्मसम्बन्धद्वारेण तान् भक्षयितुम्। अतो लक्षणायामुपपद्यमानायां नाविवक्षा बहुत्वस्येति उद्गातृशब्दस्य सर्वर्त्विक्संयोगात् सर्व एव भक्षयेयुः। तदुक्तं सूत्रकृता—'सर्वे वा संयोगात्' (३. ५. २७) इति।

अथवा श्रुतिवृत्तौ सम्भवन्त्यां लक्षणाया अयोगात्। सम्भवति चात्रोद्गायन्तीत्युद्गानसंयोगादुद्गानशब्दाभिधेयास्त्रयः— उद्गाता प्रस्तोता प्रतिहर्त्ता चेति। तेन सुब्रह्मण्यस्य गानयोगाभावात्तद्विवर्जितास्त्रय एव बहुत्वसंयोगाद्भक्षयेयुः। तदुक्तं सूत्रकारेण— 'तत्संयोगाद्बहुश्रुतेः' इति। तस्मादसुब्रह्मण्यास्त्रय एव स्तोत्रकारिणो भक्षयेयुरिति। एवं प्राप्तेऽभिधीयते—

सर्वे तु वेदसंयोगात्कारणादेकदेशः स्यात् ॥३.५.२८॥

अयमभिप्रायः—भवेदेवं यद्युद्गाननिमित्तोऽयमुद्गातृशब्दस्तेषु वर्तितुमर्हति। तथाहि—एक एवोद्गाता द्वौ गातारौ। गानं हि

लोकवेदसाधारणं गीतिमात्रम्। उद्गानन्तु द्वितीया साम्नो भक्तिस्तत्पूर्वस्य गायतेरर्थः। तच्चैक एवोद्गाता करोति। गानमात्रं प्रस्तोतृप्रतिहर्तारौ। तेन गानयोगस्याव्यापित्वान्न तन्निमित्तत्वम्। वेदसंयोगनिमित्त एवायं छन्दोगप्रवचनं त्वौद्गात्रशब्देनाभिधीयते। तेन ये तस्योद्गातार इति औदमेधिन्यायेनानुमीयन्ते छन्दोगप्रवचनात् सहसुब्रह्मण्याश्चत्वार एवेति, त एव भक्षयन्तीति सिद्धम्।

प्रयोजनम्—पक्षोक्तम्। सूत्रन्तु—सर्व एव ससुब्रह्मण्याश्छन्दोगाः प्रवचनवेदसंयोगात् भक्षयेयुः। यत्र तु "विनिपद्य उद्गातारः साम्ना स्तुवन्ति" इत्यादौ सुब्रह्मण्यवर्जितानां स्तोत्रकारिणां ग्रहणम्, तत्र सुब्रह्मण्यस्तोत्रसंयोगाभावः कारणम्। स हि सुब्रह्मण्यामृचं कृत्वैव कर्मदेशान्निर्गतः। तदिदमुक्तम्—कारणादेकदेशे स्यादिति। न चैतद्युक्तम्। औदमेधिन्यायस्यावेष्ट्यधिकरण एव निराकृतत्वात्। तत्र हि उदमेधिपीतो उदमेघ इत्यनुशासनाभावेन औदमेध्युदमेघयोः प्रमाणान्तरप्रसिद्धत्वाद्भवतु यथाकथञ्चित् प्रकृत्यनुमानम्। इह चोद्गातृत्वस्याप्रसिद्धत्वाद्यथानुशासनमेव शब्दार्थोऽनुगन्तव्यः। स्मरन्ति चोद्गातुरिदमित्यणप्रत्ययं, न तु तस्य कर्तेति प्रत्ययलोपम्। अतो न युक्तमेतदित्यन्यथा व्याख्यायते। तथाहि—यथा जातिनिमित्तो राजा तद्योगाद्राज्यम्। तद्योगाद्ब्राह्मणादिषु गौणो राजशब्दः, तथात्रापि वर्णनिमित्त

एवोद्गाता, तत्संयोगात् प्रवचनमौद्गात्रम्। तद्योगाच्च प्रस्तोत्रादिषु चतुर्ष्वपि गौण एवोद्गातृशब्दः। तत्र चतुर्णामेव भक्षणे प्राप्ते सुब्रह्मण्यस्य सदपि अन्तर्वेद्यामश्च भक्षणकाले सन्निधानाभावात्तद्-व्यतिरिक्ता एव भक्षयेयुः। न चायं कर्त्तृसंस्कारः, येन यत्र सुब्रह्मण्योऽस्ति तत्रैव नीत्वा दीयेत। शेषसंस्कारो ह्यसौ। तस्य च तदितरभक्षणेनापि सिद्धत्वाद्बहुवचनञ्च कपिञ्जलन्यायेन त्रिष्वेव चरितार्थमिति।

सूत्रन्तु—सर्वे एवोद्गातृशब्देनाभिधीयन्ते, न स्तोत्रकारिण एव, तेषामप्यसन्निधानात्कारणादेकदेशे सुब्रह्मण्यवर्जितोद्गातृतीये भक्षः स्यादिति॥

इति सप्तमं ससुब्रह्मण्योद्गातृभक्षाधिकरणम्॥ ७॥

अथाष्टमं ग्रावस्तुतस्सोमभक्षाधिकरणम्

ग्रावस्तुतो भक्षो न विद्यतेऽनाम्नानात्॥३. ५. २७॥

ज्योतिष्टोमे ग्रावस्तुन्नामा होतृपुरुषः। तत्र सन्देहः—किं स सोमं भक्षयेदुत नेति। समाख्यानिमित्तं भक्षणं निरूप्येदानीं वाचनिकमेव भक्षणं निरूप्यते।

(पूर्वपक्षः)

अत्रायं पूर्वपक्षः—न तावद् ग्रावस्तुतो भक्षणप्रतिपादकं

विशेषवचनमस्ति । नापि "यथाचमसमन्यांश्चमसांश्चमसिनो भक्षयन्ति, अथैतस्य हारियोजनस्य सर्व एव लिप्सन्ते" इति सामान्यवचनेन हारियोजनपात्रे ग्रावस्तुतोऽपि भक्षणप्राप्तिः, तस्य चमसिमात्रभक्षणविधायकत्वात् । तथाहि—एकमिदं वाक्यं प्रतीयते । अस्यार्थः—यथाचमसमन्यांश्चमसानेकैकंचमसिनो भक्षयन्ति, अथैतस्मिन् हारियोजने सर्व एव चमसिनो भक्षयन्तीति । तस्मात् स्ववाक्यावगतचमसिविशेषितत्वात् सर्वशब्दस्य न ऋत्विङ्मात्रविषयत्वम् । अतो नास्ति ग्रावस्तुतो भक्ष इति । एवं प्राप्तेऽभिधीयते—

सर्वेषां वा तद्विधित्वात्तदर्थां चमसिश्रुतिः ॥३. ५. ३०॥

( सिद्धान्तः )

अयमभिप्रायः—भवेदेवं यदि चमसिभिः सर्वशब्दस्यार्थो विशेष्येत । तथाहि—सर्वत्रैवायं सर्वशब्दोऽधिकारविशेषितो न विशेषान्तरमपेक्षते । यथा अस्मिन् भोज्ये सर्वे भुक्तवन्त इति । अधिकृताश्च सर्व एव ऋत्विजः । अतस्तैरेवायं निराकाङ्क्षः सर्वशब्दो न विशेषणान्तरमपेक्षते । न च चमसिपदस्यार्थवत्वाय चमसिभिः सर्वशब्दस्यार्थो विशेष्यत इति वाच्यम् । तस्योभयथापि हारियोजनश्रुत्यर्थतयैवार्थवत्वात्, श्रुतिसङ्कोचप्रसङ्गाच्च । तदयं

वचनार्थः—यथाचमसमन्यांश्चमसांश्चमसिनो भक्षयन्ति, हारियोजने पुनः सर्व एवर्त्विजश्चमसिनोऽचमसिनश्च भक्षयन्तीति। अतोऽस्ति हारियोजने ग्रावस्तुतोऽपि भक्ष इति सिद्धम्।

सूत्रन्तु—सर्वेषामेव ऋत्विजां हारियोजने भक्षविधानादस्ति ग्रावस्तुतोऽपि भक्षः। चमसिश्रुतिस्तु हारियोजनस्तुत्यर्था न तु सर्वशब्दविशेषणार्थेति॥

इत्यष्टमं ग्रावस्तुतस्सोमभक्षाधिकरणम्॥ ८॥

अथ नवमं वषट्कर्तुः प्रथमभक्षाधिकरणम्

वषट्काराच्च भक्षयेत॥ ३. ५. ३१॥

( विषयसंशयौ )

अथ किं समाख्यैव भक्षणे कारणम्? नेति ब्रूमः। वषट्काराच्च भक्षयेत्। वषट्कारश्च भक्षणनिमित्तम्। कथम्? एवं हि श्रूयते—"वषट्कर्तुः प्रथमभक्षः" इति। अत्र प्राप्त-भक्षणानुवादेन प्राथम्यमात्रं विधीयते, अथवा वषट्कारनिमित्तकं प्राथम्यविशिष्टं भक्षणान्तरमिति।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षिणोऽभिसन्धिः—सर्वत्र विशिष्टविधिगौरवभये-

नोपपदसङ्क्रान्तो विधिर्धात्वर्थस्य विलम्बिनीमपि यथाकथञ्चित्प्राप्तिमपेक्षते। अस्ति च होतुर्वषट्कर्तृत्वात् "प्रैतु होतुश्चमसः" इति समाख्यया स्वचमसे भक्षणप्राप्तिः। अतस्तत्रैव समाख्याप्राप्तभक्षणानुवादेन वषट्कारनिमित्तकं प्राथम्यमात्रं विधीयते। तेन वषट्कर्तव्यनिमित्तकं भक्षणं कर्त्तव्यमिति। एवं प्राप्ते—

( सिद्धान्तः )

अभिधीयते—भवेदेवं यद्यत्र समासान्निकृष्य च भक्षणमनुवदितुं शक्यते। तथाहि—न तावदत्र भक्षणमात्रानुवादेन प्राथम्यं विधीयते, अन्यत्रापि प्रसङ्गात्। किन्तर्हि? वषट्कर्त्तुर्यो भक्ष इति वषट्कर्तृसम्बन्धिभक्षणानुवादेन। तथा सति वषट्कर्तृसम्बन्धसापेक्षस्य भक्षणस्य प्राथम्येन सह न समासः सम्भवति, असमर्थत्वात्। अथ प्राथम्येन भक्षणस्य प्राधान्याच्च 'भवति वै प्रधानस्य सापेक्षस्य समासः' इत्यनुशासनाद्वषट्कर्तृसम्बन्धसापेक्षमपि भक्षणं प्रथमपदेन समस्यत इत्युच्यते, तथापि प्राथम्यं तावद्भक्षणगुणभूतं, तदपि वषट्कारनिमित्तकत्वाद्वषट्कर्तृभक्षणस्य प्राथम्यं न निमित्तान्तरेण। किन्तर्हि? वषट्कारेणैव। तेन वषट्कर्त्तुरिति सम्बन्धाद्गुणभूतस्यापि प्राथम्यस्य सापेक्षत्वात् स्पष्ट एव समासदोष इति। भक्षणप्राथम्ययोर्निष्कृष्यानुवदितुं विधातुं वाऽशक्यत्वाद् वषट्कर्त्तुः प्राथम्यविशिष्टमपूर्वमेव भक्षणं

विधीयत इति । ननु "एकं साम तृचे क्रियते स्तोत्रीयम्" इति समासापेक्षं समासस्थामप्यृचमनूद्य त्रित्वविधानं दृष्टम्, तथा प्राथम्यविधानं भविष्यति । नैतत्; तत्रापि समासार्थस्यैव विधानात्, किन्तु ऋचां सामाव्यभिचारेणैव प्राप्तत्वात् त्रित्वस्य चाप्राप्तत्वात्त्रित्वपरो विधिरित्युच्यते । इह तु यावद्वषट्कारं भक्षणस्याप्राप्तत्वात् समासार्थ एव विधेस्तात्पर्याद्भक्षणमेव विशिष्टं विधीयते । तेन वषट्कारनिमित्तकं भक्षणं होत्रा सर्वत्र कृत्वा समाख्यानिमित्तकं भक्षणं चमसे कर्त्तव्यम् । न तु तस्यैव प्राथम्यमिति सिद्धम् ।

प्रयोजनम्—पक्षोक्तम् । सूत्रन्तु—न केवलं समाख्यया वषट्कर्त्ता स्वचमस एव भक्षयेत्, किन्तु वषट्कारनिमित्तकं पात्रान्तरेष्वपि भक्षयेदिति ॥

इति नवमं वषट्कर्त्तुः प्रथमभक्षाधिकरणम् ॥ ९ ॥

अथ दशमं होमाभिषवयोर्भक्षनिमित्तत्वाधिकरणम्

होमाभिषवाभ्यां च ॥ ३. ५. ३२. ॥

( विषयसंशयसङ्गतयः )

अपरमपि कारणं होमाभिषवौ । "हविर्द्धाने ग्रावभिरभिषुत्याहवनीये हुत्वा प्रत्यञ्चः परेत्य सदसि भक्षयन्त" इति । पूर्वं वष-

ट्कारनिमित्तं वाचनिकं भक्षणं प्रतिपाद्येदानीं होमाभिषवनिमित्तकमपि वाचनिकं भक्षणं प्रतिपाद्यते।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षः—सर्वत्रोपपदसङ्क्रान्तो विधिर्धात्वर्थं प्राप्तमनूद्योपपदार्थं विधत्ते। अस्ति चात्र समाख्यावषट्काराभ्यां भक्षणप्राप्तिः। अतस्तदनुवादेनोपपदार्थ एव विधातव्यः। तत्र न तावद्धोमाभिषवौ। तयोः साधनयोरेव वचनान्तरप्राप्तत्वात्। नाप्यभिषवाधारत्वेन हविर्धानं, तस्यापि हविःसंस्काराधिकरणत्वेन वचनान्तरप्राप्तत्वात्। न वाभिषवहोमभक्षणानां क्रमोऽभिधीयते, अर्थादेव प्राप्तत्वात्। न ह्यनभिषुत्य होमः सम्भवति। न चानभिषुतस्य प्रतिपत्तिरूपं भक्षणं सम्भवति। न चाभिषवहोमयोर्निर्ज्ञातप्रयोजनयोर्भक्षणाङ्गत्वेन विधानम्। अतः पारिशेष्याद्भक्षणाधिकरणत्वेन सद एव विधीयते। न च भक्षणस्य तद्देशत्वेन तदधिकरणत्वप्राप्तिः। नियामकाभावे सतीच्छयान्यत्रापि स्थाने भक्षप्राप्तेः। तेन नियमार्थत्वेन सदोविधानमर्थवदिति। एवं प्राप्ते—

( सिद्धान्तः )

अभिधीयते—भवेदेवं यदि होत्रादिनां सदोदेशपरित्यागेन कर्मानुष्ठानं सम्भवति। होत्रादीनां सकलाङ्गानुष्ठानदेशो हि सदः। भक्षणमप्यङ्गमेव। अतः कथमप्यन्यदेशे न क्रियते। अतस्तेषां

तत्रैव कर्मप्रवृत्तिनियमात् सदसीत्येतदपि प्राप्तमेव । अतो होमाभिषवनिमित्तकं भक्षणान्तरमेवात्र विधीयत इति सिद्धम् ।

प्रयोजनम्—पूर्वपक्षे ग्रहेषु वषट्कर्तृभिरेव भक्षयितव्यम् । सिद्धान्ते तु होमाभिषवकर्तृभिरपि ग्रहेषु भक्षयितव्यम् । सूत्रन्तु—होमाभिषवाभ्यामपि निमित्तभूताभ्यां भक्षः स्यादिति ॥

इति दशमं होमाभिषवयोर्भक्षनिमित्तत्वाधिकरणम् ॥१०॥

## अथैकादशं भक्षणनिमित्तसमुच्चयाधिकरणम्

प्रत्यक्षोपदेशाच्चमसानामव्यक्तः शेषे ॥३. ५. ३३.॥

( विषयसंशयसङ्गतयः )

ज्योतिष्टोमे श्रूयते—"प्रैतु होतुश्चमसः प्र ब्रह्मणः प्रोद्गातॄणाम्" इति । तत्रैष संशयः—किं चमसेषु होमभिषवकर्त्तारो वषट्कर्त्तारश्च भक्षयेयुः ? उत न ? इति । एवं समाख्यादिरूपेषु निमित्तेषु सत्सु नैमित्तिको भक्षो भवतीति निरूप्येदानीमेतेषां निमित्तानां यत्र समवायो भवति, तत्र नैमित्तिको भक्षः किं विकल्पेन स्यात् ? अथ वा समुच्चयेन ? इति प्रसङ्गान्निरूप्यते ।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षिणोऽभिसन्धिः—नैमित्तिके भक्षणे विकल्प

इति । कुतः ? एकार्थत्वाद्भक्षणानाम् । अवशिष्टस्य हव्यस्य प्रतिपत्तिरूपः संस्कारः । स च सर्वेषामविशिष्ट इत्यतो विकल्पेन भक्षः स्यादिति । एवं प्राप्ते—

उच्यते—न तावद्विकल्पः सम्भवति । तस्याष्टदोषदुष्टत्वेनान्याय्यत्वात् । समुच्चयस्तर्हि भक्षाणां भविष्यतीति चेत्—सोऽपि न सम्भवति, एकार्थत्वात् । एकेन निमित्तेन भक्षणरूपे कृते सतीतरस्य निरवकाशत्वात् । अतः पारिशेष्याद्बाधोऽभ्युपेतव्यः । तत्र किं समाख्यानिमित्तो भक्षः इतरयोर्वषट्कारहोमाभिषवनिमित्तयोर्भक्षयोर्बाधकः स्यात् ? इतरौ वा बाधकौ ? इति संशये समाख्यानिमित्त इतरयोर्बाधकः स्यात् । कुतः ? प्रैतु होतुश्चमस इति विशेषविषयत्वात् । इतरयोश्च सामान्यविषयत्वात् । सामान्याच्च विशेषो बलवानिति स एव तयोर्बाधक इति । नन्वितरयोः प्रत्यक्षोपदिष्टत्वेन बलीयस्त्वात् अस्य च समाख्यया कल्प्यमानत्वेन दौर्बल्यात्तावेव बाधकौ स्यातामिति । उच्यते—प्रत्यक्षोपदिष्टत्वेन बलीयस्त्वमनयोस्तथापि 'आनर्थक्यप्रतिहतानां विपरीतं बलाबलम्' इति न्यायेन समाख्यानिमित्तस्यैव भक्षणस्य बलीयस्त्वात् स एवेतरयोर्बाधकः स्यात् । किञ्चावश्यं चमसान् विहायान्यत्र निरवकाशत्वादितरयोश्च ग्रहेषु सावकाशत्वात् स एव बलीयानिति । तस्मात् समस्तेषु चमसिनो भक्षयेयुरिति । एवं प्राप्तेऽभिधीयते—

**स्याद्वा कारणाभावादनिर्देशश्चमसिनां कर्त्तुस्तद्वचनत्वात् ॥ ३. ५. ३४. ॥**

( सिद्धान्तः )

चमसेषु वषट्कर्त्तारो होमाभिषवकर्त्तारश्च भक्षयेयुः भक्षणनिमित्तसद्भावात् । तथाहि 'वषट्काराच्च भक्षयेत्' इत्यत्र वषट्कारस्य, 'होमाभिषवाभ्यां च' इत्यत्र होमभिषवयोश्च समुदितयोर्भक्षणनिमित्तत्वमुक्तम् । तच्च निमित्तद्वयं चमसेष्वप्यस्ति । अतो निमित्तसद्भावाच्चमसेष्वपि वषट्कर्तॄणाञ्च नैमित्तिको भक्षः स्यादिति । किञ्च निवर्त्तकशास्त्रदर्शनात् सर्वत्र निर्वृत्तिर्भवति । न हि किञ्चिच्चमसेषु वषट्कारहोमाभिषवनिमित्तस्य भक्षस्य निवर्त्तकशास्त्रमस्ति । "प्रैतु होतुश्चमसः" इत्येतदेव निवर्त्तकं भविष्यतीति चेत्—न ; समाख्यानिमित्तभक्षणमात्रप्राप्तावेवास्य व्यापारो नान्यनिवृत्तौ तात्पर्यमस्ति, त्रिदोषदुष्टपरिसंख्याप्रसङ्गात् । ननु 'प्रैतु होतुश्चमस' इति विशेषविषयत्वेन प्रवृत्तत्वादितरयोश्च सामान्यविषयत्वात् समाख्यानिमित्तको भक्षो बलवानित्युक्तम् । मैवम् ; "वषट्कर्त्तुः प्रथमभक्षः" इत्यस्यापि विशेषविषयत्वात् । तथाहि—न तावद्वषट्कर्त्तृसामान्यं किञ्चिदस्ति । वषट्कर्त्तृशब्दस्य कृदन्तत्वेन यौगिकत्वात् यौगिकानाञ्च सन्निहितविशेषवाचित्वात् । अतो वषट्कर्त्तृविशेषनिमित्तत्वेन प्राथम्यविशिष्टं नैमित्तिकं भक्षणं

विधीयते । तदपि विशेषवचनमेवेति समाख्यानिमित्तो भक्षो विशेषविहितत्वादितरयोर्बाधक इत्यस्ति । किञ्च असति सम्भवे सर्वत्र बाधोऽङ्गीक्रियते । तेन चात्रैकस्मिन् नैमित्तिके भक्षे कृते इतरयोरसम्भवोऽस्ति । सोमस्य सावयवत्वेन शेषसद्भावात् । विशेषतस्तिक्तकटुकत्वादल्पं भक्षयेदिति वचनाच्च। अतः प्रतिपत्त्यपेक्षायां सत्यां यावन्तो नैमित्तिका भक्षास्तेषां प्रतिपत्तिः कर्त्तव्येति । तस्माद्भक्षणशब्दा इति सिद्धम् ।

प्रयोजनम्—पूर्वपक्षे चमसेषु चमसिभिरेव भक्षयितव्यम् । सिद्धान्ते तु वषट्कारहोमाभिषवकर्त्तृभिरपीति ।

सूत्रन्तु—स्याद्वा चमसेष्वपि होमाभिषवादिनिमित्तोऽपि भक्षः कारणस्य वचनस्य भावात् । अनिर्देशात्, न हि चमसिनामेव चमसेषु निर्देशः अन्येषां निषेधः । चमसिभक्षणकर्त्तव्यतामात्रविधायकत्वात्, समाख्यावचनिकस्येति ॥

इत्येकादशं भक्षणनिमित्तसमुच्चयाधिकरणम् ॥ ११ ॥

## अथ द्वादशमेकपात्रे होतुः प्रथमभक्षाधिकरणम्

एकपात्रे क्रमादध्वर्युः पूर्वो भक्षयेत् ॥ ३. ५. २६ ॥

( संशयसङ्गती )

अथ यत्रैकस्मिन् पात्रे बहवो भक्षयेयुः कस्तत्र क्रमः ? एकस्मिन् पात्रे बहुनां भक्षणे सिद्धे इदानीं केन क्रमेण भक्षणमिति प्रसङ्गान्निरूप्यते । ननु "वषट्कर्त्तुः प्रथमभक्षः" इति श्रूयते । वषट्कर्त्तैव च होता । अतो वाचनिके होतुः प्रथमभक्षणे सति कथं सन्देहः ? उच्यते—

( पूर्वपक्षः )

अत्रायं पूर्वपक्षिणोऽभिसन्धिः—सोमरसस्तावदध्वर्योरेव हस्ते भक्षणसमये समस्ति । अध्वर्युणापि चासौ होमाभिषवनिमित्तं भक्षयितव्य एव । तद्यद्यध्वर्युर्होत्रे समर्पयेत् होता च पुनरध्वर्यवे भक्षणार्थं समर्पयति, तदा प्रयोगो विक्षिप्येत । तच्चाशुभावापेक्षी प्रयोगविधिर्नानुमन्यते । तेन प्रथमं तावदध्वर्युरेव भक्षयेत् । ततः केन भक्षयितव्यः ? इत्यपेक्षायां भवति वचनम्—"वषट्कर्त्तुः प्रथमभक्षः" इति । तेनाध्वर्युव्यतिरिक्तभक्षणान्तरापेक्षमेव वषट्कर्त्तुर्भक्षणप्राथम्यमिति । तस्मादेकपात्रेऽनेकेषु भक्षयत्सु क्रमात् सन्निधिलक्षणादध्वर्योरेव प्रथमं भक्षणं प्रतीयत इति । एवं प्राप्तेऽभिधीयते—

होता वा मन्त्रवर्णात् ॥ ३. ५. ३ ॥

एवं हि मन्त्रः श्रूयते "होतुश्चित्पूर्वे हविरद्यमाशते" इति। अस्यायमर्थः—होतुरेव यत्पूर्वं प्रथमं अद्यं अदनीयं हविः तद्ग्रावाण आशत भुक्तवन्तः। तथा "होतेव नः प्रथमं पाहि" इति। तस्याप्ययमर्थः—होता यथा नः अस्मात् प्रथमं पातैव, तथा त्वमपि पाहीत्यर्थः। किञ्च "वषट्कर्त्तुः प्रथमभक्षः" इति भक्षकर्तृऋत्विङ्मात्रापेक्षयैव प्राथम्यं प्रतीयते, न तत् प्रयोगप्राशुभावानुरोधेनान्यथयितुं युक्तम्। तथा निमित्तक्रमानुरोधादप्ययमेवात्र नैमित्तिकस्य भक्षणस्य क्रमो युक्तः। प्रथमं हि होता वषट्करोति, ततोऽध्वर्युर्जुहोति। तस्माद्धोतैव प्रथमं भक्षयतीति सिद्धम्।

प्रयोजनम्—पक्षोक्तम्। सूत्रन्तु—होतैव प्रथमं भक्षयेत् मन्त्रवर्णात् तस्यैव प्रथमं भक्षणप्रतीतेः॥

इति द्वादशमेकपात्रे होतुः प्रथमभक्षाधिकरणम्॥१२॥

अथ त्रयोदशमनुज्ञापूर्वकं भक्षणाधिकरणम्

## वचनादनुज्ञातभक्षणम्॥ ३. ५. ४०॥

अथैकपात्रे सोमोऽनेकेन भक्ष्यते। किन्तत्रानुज्ञाप्यानानुज्ञाप्य वा भक्षयितव्यम्? उतानुज्ञाप्यैवेति। अयश्च सन्देहो भाष्यकारेण "तस्मात्सोमो नानुपहूतेन पेयः" इत्यस्य वचनस्य विषय-

प्रदर्शनार्थं प्रदर्शितः। न तु विचारार्थम्। प्रत्यक्षे वचने सति सन्देहाभावात्। तेन सूत्रमिदं वचनगतस्योपहूतपदस्यानुज्ञारूपार्थकथनार्थमुत्तरविचारविषयप्रदर्शनार्थं चेति बोध्यम्॥

इति त्रयोदशमनुज्ञापूर्वकं भक्षणाधिकरणम्॥ १३॥

अथ चतुर्दशं वैदिकमन्त्रेणानुज्ञापनाधिकरणम्

तदुपहूत उपह्वयस्वेत्यनेनानुज्ञापयेल्लिङ्गात्॥३.५.४१॥

(संशयः)

अथानुज्ञातेनैव भक्षयितव्यमिति स्थिते किं लौकिकेन वचनेनानुज्ञापयितव्यम्? उत वैदिकेनेति?

(पूर्वपक्षः)

अत्रायं पूर्वपक्षः—यद्यप्यत्राम्नातो मन्त्रस्समस्ति, तथापि मन्त्रस्य पूर्वोत्तरभागाभ्यामनुज्ञापनप्रकाशननिर्द्धारणाकारणाभावात् लिङ्गेनानुज्ञापने विनियोक्तुं न शक्यत इति लौकिकेनैव वचनेनानुज्ञापनं कर्त्तव्यमित्येवं प्राप्ते—

(सिद्धान्तः)

अभिधीयते—भवेदेवं यद्यत्र मन्त्रादनुज्ञापनं न प्रतीयेत। न च कृत्स्नस्य मन्त्रस्यानुज्ञापनाप्रकाशनादविनियोगः। सर्वत्र मन्त्रैकदेशस्यैव समवेतार्थप्रकाशने सतीतरपदानां तदनुकूलत्वेनै-

वार्थत्वात् कृत्स्नमन्त्रविनियोगस्याप्युपपत्तेः । भवति कृत्स्नमन्त्रप्रयोगे-णैव च सर्वथा वैदिकेनैवानुज्ञानं न लौकिकेनेति सिद्धम् ॥

प्रयोजनम्—पक्षोक्तम् । सूत्रन्तु—उपहूत उपह्वयस्वेत्यनेनैव वैदिकेनानुज्ञापनमिति ॥

इति चतुर्दशं वैदिकमन्त्रेणानुज्ञापनाधिकरणम् ॥१४॥

अथ पञ्चदशं वैदिकमन्त्रेणानुज्ञादानाधिकरणम्

तत्रार्थात्प्रतिवचमम् ॥३. ५. ४२॥

( संशयः )

एतदवगतम्—"उपहूत उपह्वयस्व" इत्यनेन अनुज्ञापयेदिति । अथ प्रतिवचने सन्देहः—किं लौकिकं प्रतिवचनम् ? उतैतदेव ? इति ।

( पूर्वपक्षः )

पूर्वपक्षस्तु—कृत्स्नस्यापि मन्त्रस्यानुज्ञापने विनियोगसम्भवे-नाभिहितत्वादनुज्ञाप्य प्रतिवचनं लौकिकमेव कर्त्तव्यम् । अथवानु-ज्ञानुज्ञापनयोर्मन्त्रयोर्लिङ्गादविशेषेण प्रतीतेरुभयत्रापि कृत्स्न एवायंचो मन्त्रः प्रयोक्तव्य इति । एवं प्राप्ते—

( सिद्धान्तः )

अभिधीयते—भवेदवं यद्यत्र विशेषग्रहो न भवेत् । तथाहि—समभिव्याहारलक्षणाद्वाक्यादन्यतरभागस्यान्यतरार्थत्वेनात्र प्रयोगो

वक्तव्यः । अभिधानसामर्थ्याल्लिङ्गादुपहूत इति पूर्वस्य मन्त्रभागस्यानुज्ञायाम्, उपह्वयस्वेत्युत्तरस्य तु भागस्यानुज्ञापने विनियोगः प्रतीयते । तेन लिङ्गेन वाक्यं बाधित्वोत्तरस्यानुज्ञायां प्रयोग इति सिद्धम् ॥

इति पञ्चदशं वैदिकमन्त्रेणानुज्ञादानाधिकरणम् ॥ १५ ॥

अथ षोडशमेकपात्राणामनुज्ञाप्य भक्षणाधिकरणम्

तदेकपात्राणां समवायात् ॥ ३. ५. ४३ ॥

( संशयः )

इदं सन्दिह्यते—किं यः कश्चिदनुज्ञापयितव्यः ? उत समानपात्र इति ।

( पूर्वपक्षः )

पूर्वपक्षस्तु—न तावदत्रानुज्ञाप्यः कश्चिद्विशेषरूपेण श्रूयते, किन्त्वनुज्ञापनमात्रम् । अनुज्ञापनेन चानुज्ञाप्यमात्राक्षेप इति येन केनचिदनुज्ञातो भक्षयेदिति । एवं प्राप्ते—

( सिद्धान्तः )

अभिधीयते—भवेदेवं यद्येतदनुज्ञापनमत्यन्ताप्राप्तं विधीयते । किन्तु लोके प्राप्तमेवैतन्नियम्यते । लोके साधारणद्रव्ये विनियोग एवं प्रतिसम्बन्धिचित्तानुकूलनार्थमनुज्ञापनं दृष्टम् । एकपात्रे

स्थितश्च सोमो बहूनां साधारणो न भिन्नपात्रस्थ इति समानपात्राणामेवाधिकभक्षणाशङ्क्यानुज्ञापनं दृष्टार्थन्नियम्यत इति सिद्धम् ।

प्रयोजनम्—पक्षोक्तम् । सूत्रन्तु—तदनुज्ञापनमेकपात्राणामेव समवायात् साधारणत्वादित्यर्थः ॥

इति षोडशमेकपात्राणामनुज्ञाप्य भक्षणाधिकरणम् ॥ १६ ॥

अथ सप्तदशं स्वयं यष्टुर्भक्षणाधिकरणम्

याज्यापनयेनापनीतो भक्षः प्रवरवत् ॥ ३. ५. ४४ ॥

( विषयसंशयौ )

अस्ति ज्योतिष्टोमः । तत्र ऋतुयाजेषु श्रूयते—"यजमानस्य याज्या सोऽभिप्रेष्यति—होतरेतद्यजेति, स्वयं वा निषद्य यजति" इति । यदा स्वयं यजति, तदा सन्देहः—किमस्य भक्षोऽस्ति ? नास्तीति । अत्रेयं विषयशुद्धिः—अस्ति ज्योतिष्टोमे ऋतुग्रहाभ्यासः । सन्ति च तत्र याज्याः । ताश्च यद्यपि समाख्यया होतृप्रयोज्या एव, तथाप्यत्र यजमानसदस्यानामेतत्प्रयोगार्थं वरणम् । होतुरपनीय चान्यैरपि ताः प्रयोक्तव्याः । तत्र यजमानयाज्यायां पक्षद्वयं विहितम्—होत्रे च प्रत्यर्पणं, स्वयं वोच्चारणम् । यदा स्वयं समुच्चारयति तदा सन्देहः—किं वषट्-

कारो होत्रा कर्त्तव्यः, ततश्च तन्निमित्तभक्षणमपि होत्रैव कर्त्तव्यम्? उत यजमानेनैवेति।

( पूर्वपक्षः )

पूर्वपक्षस्तु—याज्या हि होतुस्सकाशाद्वचनेनापनीता, न तु वषट्कारभक्षौ। न च याज्यापनयेनैव वषट्कारभक्षयोरप्यपनयः, तयोर्याज्यातोऽर्थान्तरत्वात्। तेन यथा याज्यापनयेऽप्यर्थान्तरभूतं प्रवरशब्दाभिधेयं वरणं नापनीयते, तथा वषट्कारभक्षावपीति। अतो याज्यामात्रोच्चारणमितरर्त्विग्वद्यजमानेन कर्त्तव्यम्। वषट्कारस्तन्निमित्तश्च भक्षणं होत्रैवेति। एवं प्राप्तेऽभिधीयते—

यष्टुर्वा कारणागमात् ॥ ३. ५. ४५. ॥

( सिद्धान्तः )

अयमभिप्रायः—भवेदेवं यदि याज्यापनये भक्षणकारणभूतो वषट्कारो नापनीयेत। तथाहि—नात्र "यजमानस्य याज्या" इत्यतावन्मात्रं श्रूयते। किन्तु "स्वयं निषद्य यजति" इति। न च याज्योच्चारणमात्रेणोच्यते। किन्तर्हि? वषट्कारपर्यन्तेन, तस्यैव हविःप्रदानार्थत्वात्। किञ्च "अनवानं यजति" इति श्रूयते। अस्य चायमर्थः—याज्या आरभ्य यावद्यागो न समाप्यते, तावत्पर्यन्तं विच्छेदो न कर्त्तव्यः। वषट्कारेण च यागः समाप्यते। तद्यदि याज्यां प्रयुज्य विरमेद्यजमानस्तदा प्रयत्नविच्छेदमेव कुर्यात्।

तस्माद्वषट्कारप्रयोगस्य यजमानकर्त्तव्यत्वात्तन्निमित्तमेव भक्षणमपि यजमानेनैव कर्त्तव्यम् । यच्च वरणावरुद्धत्वमपि नापनीयत इत्युक्तम्, तदयुक्तम्; यतो वरणं खलु होतुर्नापनीयत इत्युचितमेव । तस्य खल्वर्थाद्धोतरि प्रवृत्तत्वात् । अतो याज्यापनये सति भक्षणं यजमानेनैव कर्त्तव्यमिति सिद्धम् ।

प्रयोजनम्—पद्धोक्तम् । सूत्रन्तु—वषट्कारे भक्षणकारणस्य वषट्कारस्य यष्टुरागमनादिति ॥

इति सप्तदशं स्वयं यष्टुर्भक्षाधिकरणम् ॥

### अथाष्टादशं फलचमसाधिकरणम्

**फलचमसो नैमित्तिको भक्षविकारः श्रुतिसंयोगात् ॥३.५.४७॥**

ज्योतिष्टोमे श्रूयते—"यदि राजन्यं वैश्यं वा याजयेत् स यदि सोमं बिभक्षयिषेत् न्यग्रोधस्तिभिनीराहृत्य तास्सम्पिष्य दधन्युन्मृज्य तमस्मै भक्षं प्रयच्छेन्न सोमम्" इति । तत्र सन्देहः—किं फलचमसः सोमभक्षविकारः ? उतेज्याविकारः ? इति । प्रसक्तसोमभक्षणानुप्रसङ्गेनेदानीं फलचमसोऽपि भक्षणसम्बन्धेन श्रूयमाणो विचार्यते ।

( पूर्वपक्षः )

पूर्वपक्षस्तु—सोमस्य तावदुभयसम्बन्धः प्रतीयते—यागसम्बन्धो भक्षणसम्बन्धश्च । तत्र तावद्यागसम्बद्धस्य न सोमस्यायं फलचमसो विकारः । यागसम्बन्धित्वेनास्याश्रवणात् । किं तर्हि ? यदि सोमं विभक्षयिषेत् ततः फलचमसमस्मै भक्षं प्रयच्छेदिति श्रुतेर्भक्षणसम्बन्धिसोमविकार एव । तथाहि—पशौ श्रूयते—"त्र्यङ्गैः स्विष्टकृतं यजति" इति । हृदयाद्येकादशभिरङ्गैः प्रधानभूतः पशुयागो निर्वर्त्तितः । प्रकृतौ च सान्नाय्ययागशेषस्यैव स्विष्टकृतः प्रतिपादितत्वादत्राप्येकादशानामवयवानां मध्ये यैः कैश्चित् त्रिभिरङ्गैरिष्टशेषैः स्विष्टकृद्यागः कर्त्तव्य इति पूर्वपक्षयित्वा, यागसम्बन्धापेक्षस्य त्रित्वस्याङ्गैः सह समासासम्भवादेकादशसु मध्ये त्रयाणामवान्तरसामान्यमङ्गानां निर्द्धारयितुमशक्तेर्न यागशेषाणामुपादानम् । किन्तर्हि ? "दोष्णो दक्षिणस्य पूर्वार्द्धादग्नये समवद्यति, गुदस्य मध्यतः श्रोण्या जघनतः" इत्येकेनाप्युद्देशेन सम्बन्धात्त्रीण्यवधारितानि । तैरेव विशेषैः स्विष्टकृद्यागः कर्त्तव्य इति सिद्धान्तितम् । तेन यथा शरैर्बर्हिषां विकारः, तथेहापीज्याशेषाणामनिज्याशेषैर्विकार इति । तदुक्तं सूत्रकृता—'त्र्यङ्गैर्वा शरवद्विकारः स्यात्' ( जै. सू., १०. ७. ११.) इति । अतोऽत्रायनिज्याशेषेण फलचमसेनेज्याशेषस्य सोमस्य विकारो न

विरोत्स्यते । एवञ्च सत्युत्पत्तिशिष्टः सोमः प्रधानकर्मणि यागे बाधितो न भविष्यति । 'न सोमम्' इत्यर्थप्राप्तभक्षणागतसोमनिवृत्त्यनुवादेनैव बाधादत्राप्युपपत्स्यत इति ।

ये त्वारादुपकारकं फलचमससाधनं भक्षणं विधीयत इति पूर्वपक्षयन्ति, तैश्च पूर्वपक्षवार्त्तिकाक्षराण्यनाकलितानि । न चायं पक्षो युक्त्यापि सङ्गच्छते, अनेकदोषदुष्टत्वात् । तथाहि—फलचमसान्तं भक्षं प्रयच्छेदिति विनियोगभङ्गि ? न भक्षणं कुर्यादिति । तथा सोमभक्षणस्य फलचमसेनातुल्यकार्यत्वेनानिवर्त्तितत्वान्न सोममिति नायमर्थप्राप्तानुवादः । निषेधपरत्वे च वाक्यभेदः । विहितसोमभक्षणप्रतिषेधाद्वाष्टदोषदुष्टविकल्पापत्तिः । तथा अदृष्टकल्पनादयश्च दोषा अप्यभिहिताः । सिद्धान्तसमये पक्षविकल्पमात्रेण यच्चिन्तितं तदेवात्र तैः पूर्वपक्षीकृतमित्युपेक्षणीयमेवेति । तस्माद्भक्षश्रुतिसंयोगाद्राजन्यवैश्यनिमित्तकः फलचमसो भक्षविकार इति । एवं प्राप्तेऽभिधीयते—

इज्याविकारो वा संस्कारस्य तदर्थत्वात् ॥ ३.५.४८ ॥

( सिद्धान्तः )

अयमभिप्रायः—भवेदेवं यदि पूर्वपक्षे फलचमसः प्रतिपत्तिसम्बन्धार्हो भवेत् । द्विविधं हि द्रव्यमाकार्याकरमिति प्रतिपत्ति-

मपेक्षते । कृतप्रयोजनत्वाद्यथा सोमरसः पुरोडाशो वा । प्रयोजनार्थोपादाननान्तरीयकोपादानत्वात् यथा "त्र्यङ्गैः स्विष्टकृतं यजति" इत्यादिषु त्र्यङ्गादि । न च पूर्वपक्षे फलचमसः कृतप्रयोजनः। नापि प्रयोजनार्थोपादाननान्तरीयकोपादान इति प्रतिपत्त्यपेक्षाभावान्न प्रतिपत्तिसम्बन्धो घटते । त्र्यङ्गस्य तु पशुयागार्थोपात्तपशुनान्तरीयकोपादानस्याकीर्णकरत्वेन प्रतिपत्त्यपेक्षायां वचनाभावे पुरुषेच्छाधीना या काचित् प्रतिपत्तिर्भवेत् । वचनसद्भावे तु यथावचनमेव प्रतिपत्तिर्भवति । तेन यागीयद्रव्यसंस्कारभक्षणासम्बन्धान्यथानुपपत्त्या फलचमसस्य सोमवदवश्यं यागसाधनत्वं कल्पनीयम् । तत्रापि "स यदि सोमं विभक्षयिषेत्" इति यजमानसम्बन्धिभक्षणाकीर्तनाद्यावत्त्र्यङ्गेऽनुपयुज्यमानो यजमानभक्षणासंस्कारः प्रतिपद्येत, तावतैव यज्ञभागेनार्थापत्त्या सम्बन्ध इति यजमानचमस एव सोमं विकरोति, न ग्रहचमसान्तरेष्विति स्थितम् । नैमित्तिकत्वादुत्पत्तिशिष्टसोमबाधोऽपि न दोषः । एवञ्च सति क्रयाभिषवादिसंस्कृतेनैव यष्टव्यमित्यन्यत्र पादे प्रतिपादनीयम् । एवं "यदि सोमं न विन्देत् पूतीकानभिषुणुयात्" इत्यत्रापि सोमाभावे सोमसम्बन्धिनोऽभिषवरूपसंस्कारस्य पूतीकेषु दर्शनात् पूतीकानां यागसाधनत्वमेतेनैव न्यायेनावगन्तव्यम् ।

प्रयोजनम्—पूर्वपक्षे यजमानस्य चमसेऽपि सोमेनैव यष्टव्यम्।

भक्षणमात्रन्तु फलचमसस्य। सिद्धान्ते तु फलचमसेनैव यष्टव्यम्।
सूत्रन्तु—इज्यायां फलचमसेन सोमस्य विकारेण भक्षणमात्रं संस्कारस्य भक्षणरूपस्य तदर्थत्वात् यागसाधनद्रव्यार्थत्वादिति॥

इत्यष्टादशं फलचमसाधिकरणम्॥ १८॥

अथैकोनविंशमनुप्रसर्प्यधिकरणम्

अनुप्रसर्पिषु सामान्यात्॥ ३. ५. ५२.॥

( विषयसंशयसङ्गतयः )

अस्ति राजसूयः। तत्र श्रूयते—"शतं ब्राह्मणाः सोमं भक्षयन्ति, दश दशैकैकं चमसमनुप्रसर्पेयुः" इति। तत्र राजन्यचमसे सन्देहः—किं राजन्या अनुप्रसर्पेयुः? उत ब्राह्मणाः? राजन्यचमसे फलचमसो राजन्येन भक्षयितव्य इति निरूपितम्। इदानीं क्वचित् कृतिविशेषे तदपवादः क्रियते।

( पूर्वपक्षः )

पूर्वपक्षस्तु—वाक्यद्वयमेतत्। "शतं ब्राह्मणाः सोमं भक्षयन्ति" इत्येकम्। "दश दशैकैकं चमसमनुप्रसर्पेयुः" इत्यपरम्। तत्र भक्षयन्तीति वर्त्तमानरूपत्वात् पूर्वस्याविधायकत्वादुत्तरस्य चानुप्रसर्पेयुरित्यनुपहतशक्तिविध्याख्यातसम्बन्धाद्विधायकत्वमेव।

नन्वेवं सत्ययमस्य वाक्यस्यार्थः—ये भक्षणार्थमेकैकं चमसमनुप्रसर्पन्ति, ते दश दश प्रसर्पन्तीति विशिष्टानुवादाद्वाक्यं भिद्येत। मैवम्; अनुप्रसर्पणीयकर्मविशेषरहिताया अनुप्रसर्पणक्रियायाः कर्त्तुरुद्देश्यत्वायोगात्। तेन यथैव.........सम्भवाद्धविर्विशेषिताया एवोद्देश्यत्वं, तथेहापि प्रसर्पणक्रियामात्रस्य सामान्यरूपस्योद्देश्यप्रतीत्ययोग्यत्वात् प्रसर्पणीयकर्मविशेषविशेषिताया एव कर्त्ता दशसंख्याविधावुद्देश्य इति।

नन्वेवं क्रियान्तरार्थमपि ये चमसमनुसर्पन्ति तेषामपि दशत्वं स्यात्। भक्षणार्थमिति विशेषणे तु स एव विशिष्टानुवादो दोषः। मैवम्; चमसमित्येतावतैव भक्षणप्राप्तेः। तथाहि—चम्यतेऽस्मिन्निति चमसः। तेन चमसपदादेव भक्षणस्य प्राप्तत्वाद्भक्षणार्थमेवानुसर्पणावगतेस्तदर्थकृतविशेषणविवक्षा। न च एकैकमिति पृथग्विवक्षणीयम्। तथाभूतस्यैव प्रकृतितः प्राप्तत्वात्। न च प्राप्ते कर्मणि दश दशेति दशत्वस्यार्थस्य च विधानाद्वाक्यभेद इति वक्तव्यम्। प्रतिप्रधानावृत्तिन्यायेन प्रतिचमसं दशत्वप्राप्तेश्चानुवादात्। तेनात्र दशत्वसंख्यामात्रं विधीयते। अन्यत् सर्वमनूद्यते। एवञ्च सति प्रतिचमसं यथाप्राप्तभक्षणान्वयादशत्वस्य राजन्यचमसे राजन्यत्वस्येव प्राप्तत्वात् संख्यायाश्चमसान्तरवृत्तित्वात् राजन्यचमसे राजन्या एव दश भक्षयन्ति। तथा च सति "शतं ब्राह्मणाः सोमं

भक्षयन्ति" इति पूर्ववाक्ये प्रतिचमसं दशत्वविधिः अवयवशिष्टत्वाच्छतमित्यनुवादः ।

तथा ब्राह्मणा इति ब्राह्मणभूयस्त्वेन ब्राह्मणपदमनुवादः । राजन्यचमसे च यद्यपि फलचमसोऽस्ति न सोमः, तथापि सोमभूयस्त्वात् सोममिति सोमफलचमसयोरनुवादः । भक्षयन्तीत्यनिर्देशप्राप्तमेवानूद्यते । न च सर्वानुवादे दशदशग्रहणं व्यर्थमिति । दशग्रहणस्यैवानर्थकत्वात्तत्रानुप्रसर्पणकर्तृषु दशत्वं विधीयमानमेककालीनत्वाद्राजन्यानामेव । अतो राजन्या एव राजन्यचमसे भक्षयेयुरिति । एवं प्राप्तेऽभिधीयते—

ब्राह्मणा वा तुल्यशब्दत्वात् ॥ ३. ५. ५३ ॥

( सिद्धान्तः )

अयमभिप्रायः—भवेद्यदि "शतं ब्राह्मणाः सोमं भक्षयन्ति" इत्येतदपि वाक्यं विधायकं न भवेत् । तथाहि—अगत्या खलु सर्वानुवादो भवति । तत्रापि ब्राह्मणेषु लक्षणया ब्राह्मणशब्दस्य वृत्तिरित्येतदप्यगत्या स्वीकर्त्तव्यम् । न चात्र विधिशब्दो नास्ति । भक्षयन्तीत्येतस्य पञ्चमलकारत्वेन विधित्वोपपत्तेः । अतो मुख्य एवात्र ब्राह्मणशब्दार्थो विधीयते । न च प्राप्तभक्षणानुवादेन ब्राह्मणविधानेन च वाक्यभेद इति वाच्यम् । उत्तरवाक्यविहितप्रतिचमसदशत्वविधिसामर्थ्येनैव प्रचयशिष्टप्राप्त-

त्वात्। अनुवादे च ब्राह्मणमात्रविधानात् । सोममिति च यागसाधनलक्षणया सोमफलचमसयोरेवानुवादः । न च संख्यायाः समानरूपाया वृत्तित्वादर्थत एव राजन्यजातीयशब्दोऽप्यवधारितत्वाद्राजन्यचमसे ब्राह्मणयोनवकाश इति वाच्यम्। यत एकैकं चमसमनुप्रसर्पन्तीति चमसपदोपस्थापितभक्षणक्रियावद्वेदेनैव दशसंस्थावगमोपपत्तेः । अतः किंजातीयास्ते भक्षका इत्यपेक्षायां यावच्छ्रुती राजन्यकल्पनार्थं प्रक्रमते, तावत्प्रत्यक्षश्रुतिविहितैर्ब्राह्मणैरेव नैराकाङ्क्ष्यं क्रियत इति न राजन्यामवकाशः । तेन राजन्यचमसेऽपि ब्राह्मणा एव दश भक्षयेयुरिति सिद्धम् ।

प्रयोजनम्—पक्षोक्तम् । सूत्रन्तु—राजन्यचमसेऽपि ब्राह्मणा एव भक्षयेयुः । तुल्येन ब्राह्मणशब्देन सर्वचमसेषु ब्राह्मणविधानादिति ॥

यो नाम कश्चिदिह संविदितं प्रमेयं
ग्रन्थान्तरे लिखति वा वदति स्वयं वा ।
मत्कर्तृतामननुकीर्त्य स कीर्तिलोपात्
निस्सन्ततिर्जगति जन्मशतानि भूयात् ॥

इत्येकोनविंशमनुप्रसर्प्यधिकरणम् ॥ १९ ॥

इति बालवलभीभुजङ्गापरनाम्नो भट्टश्रीभवदेवस्य कृतौ तौतातितमततिलके तृतीयस्य पञ्चमः पादः ॥

## अथ तृतीयाध्यायस्य षष्ठः पादः

### तत्र प्रथमं अनारभ्याधीतानां प्रकृतिगामित्वाधिकरणम्

### सर्वार्थमप्रकरणात् ॥ ३. ६. १ ॥

( विषयसंशयसङ्गतयः )

अनारभ्य किञ्चित् श्रूयते—"यस्य खादिरः स्रुवो भवति छन्दसामेव रसेनावद्यति, सरसा अस्याहुतयो भवन्ति। यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति" इत्येवमादि। तत्र सन्देहः—किं खादिरादि प्रकृतौ विकृतौ च निविशते? उत प्रकृतावेवेति। सुवर्णभरणादारभ्यानारभ्यवादादिविचारे प्रस्तुते प्रसङ्गात् सर्वप्रदानविचारतः प्रभृति शेषविषयविचारं परिसमाप्येदानीं स एवानारभ्यवादः प्रस्तुतो विचार्यते।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षः—अत्र श्रुत्यादिप्रमाणाभावेऽपि खादिरतापर्णतादीनां क्रतुसम्बन्धस्तावदश्वप्रतिग्रहेष्टिन्यायेन सिद्धः। यत्र व्यभिचरितः क्रतुसम्बन्धः, तस्याप्यश्वदानस्येव यथाकथञ्चित्क्रतूपस्थितिमात्रेण क्रतुसम्बन्धापादकत्वम्, तत्राव्यभिचरितक्रतुसम्बन्धानां स्रुवादीनां सुतरामेव क्रतुसम्बन्धापादकत्वम्। अतश्चोपदेशातिदेशाभ्यां प्रकृतिविकृतिसाधारण्यात् प्रकृतिविकृत्यर्थत्वमेवानारभ्यश्रुतानां युक्तम्।

ननु खादिरतादिविधानार्थमग्रतो विकृतावातिदेशिकी स्रुवादिप्राप्तिर्वक्तव्या। अतिदेशेनैव स्रुवादिवत् खादिरतादिरपि विकृतौ प्राप्नोतीति तद्विधाने द्विरुक्तिदोषः स्यादिति। उच्यते—स्यादेवं यदि विकृतिं विहाय खादिरताद्युपदेशः प्रथमं प्रकृतिगामी भूत्वा चरमं विकृतिगामी भवेत्। स हि स्रुवादिमुखेन क्रतुप्रवेशमभिलषन् स्रुवादिप्राप्तिमात्रमपेक्षते। स्रुवादीनाञ्च यथा प्रकृतौ प्राप्तिरुपदेशात्तथा विकृतावप्यस्ति। न च स्रुवादीनामतिदेश एवानारभ्याधीतखादिरतायाः प्रकृतिसम्बन्धमन्तरेण न भवतीति वाच्यम्। एवं हि मन्यते पूर्वपक्षी—यद्यप्युपकारद्वारेणातिदेशतः प्राप्तिरिति दशमाद्ये स्थास्यति, तथाप्युपकारस्य प्रतिपादार्थमेव विलक्षणत्वात्तद्द्वारेण प्राप्तिर्भवन्ती प्रत्येकमेव भवति। सा च यावदनारभ्यवादः खादिरतादिविधानार्थं प्रकृतिविकृतिगतस्रुवनिरीक्षणं कुरुते, तावदवदुपकारकाकाङ्क्षावशादग्रत एव प्रवृत्तेति खादिरताव्यतिरेकेणैव स्रुवस्याप्यग्रतो विकृतौ प्राप्तत्वाद्भवति स्रुवद्वारेण प्रकृतिविकृतिसाधारण एव खादिरतादिविधिरिति। तेनाप्रकरणाधीतं खादिरतादि प्रकृतिविकृत्यर्थमेवेति। एवं प्राप्तेऽभिधीयते—

( सिद्धान्तः )

प्रकृतौ वा द्विरुक्तत्वात् ॥ ३. ६. २. ॥

अयमभिप्रायः—भवेदेवं यदि प्रत्येकमुपकारातिदेशो भवेत्। किन्तु कथमिति महोपकारगतेयमाकाङ्क्षाऽतिदेशकारणं प्रकृतिगतमहोपकारसम्बन्धप्रतिपादकमेव प्रकृतिवच्छब्दं कल्पयित्वा तद्द्वारेण पदार्थसम्बन्धं विकृतौ करोति, न तु प्रत्येकोपकारातिदेशद्वारेण। तथा सत्यनेकवाक्यकल्पनादोषात्। महोपकारावगतिः प्रकृतावपूर्वस्यानिर्ज्ञातोपायपरिमाणत्वात् श्रुतिस्मृत्याचारपर्यन्तनिरीक्षणेन पर्यवस्यति, नौपदेशिकपदार्थमात्रेण। तत्कथमनारभ्यश्रुतिविहितं स्रुवप्रकृतिभूतं खादिरत्वमनासाद्यैव महोपकारावगतिपर्यवसानम्? अपर्यवसितायाञ्च महोपकारावगतौ कुतोऽतिदेशतो महोपकारप्राप्तिः? कुतस्तरां तत्पृष्ठभावेन स्रुवादिप्राप्तिरिति। तदुक्तम्—

वर्त्तेत यदि भेदेन प्रकृत्यङ्गेषु चोदकः।
तत एवं भवेदेष युगपत्तु प्रवर्त्तते॥ इति।

( तं. वा., पृ. १०२८ )

तेनावश्यमग्रतो महोपकारे सत्येव प्रकृतावनारभ्यविहितखादिरत्वादिविधानाय द्वारभूतानां स्रुवादीनामतिदेशतः प्राप्तिमभिदधतावश्यं खादिरत्वादिप्राप्तिरप्यतिदेशत एव वक्तव्या। तथा सति दुर्निवारो द्विरुक्तिदोषः। येषां तु विकृतावप्यतिदेशत एव द्वारप्राप्तिः, तेषां त्वनारभ्यवादा अपि प्रकृतिविकृत्यर्था एव। यथा "यदाहवनीये जुह्वति" इत्यनारभ्यविहित एवाहवनीयः सर्वास्वेव

जुहोत्युत्पत्तिषु युगपदेव सम्बध्यते । तस्मात् प्रकृत्यर्थ एव खादिरत्वादिविधिरिति सिद्धम् ।

प्रयोजनम्—पूर्वपक्षे खादिरत्वादानामुपदिष्टत्वाविशेषेण तद्वैगुण्ये प्रकृतौ विकृतौ च प्रायश्चित्तसाम्यम् । सिद्धान्ते तूपदिष्टादिष्टयोर्वैगुण्ये प्रायश्चित्तविशेष इति । सूत्रन्तु—प्रकृतावेव खादिरतादिनिवेशः, न विकृतौ द्विरुक्तिदोषादिति ॥

इति प्रथमं अनाभ्यवादस्य प्रकृतिगामिताधिकरणम् ॥ १ ॥

अथ द्वितीयं अनारभ्याधीतस्यापि विकृतिगामिताधिकरणम्

प्रकरणविशेषात्तु विकृतौ विरोधि स्यात् ॥ ३. ६. ६ ॥

( विषयसंशयौ )

अनारभ्य किञ्चित् सामिधेनीनां परिमाणमाम्नातम्—"सप्तदश सामिधेनीरनुब्रूयात्" इति । तत्र सन्देहः—किमेतत्प्रकृतौ निविशते ? उत विकृताविति । इदानीमनारभ्य श्रुतानां प्रकृतिगामित्वमपोद्यते ।

अत्रायं पूर्वपक्षः—यद्यपि पाञ्चदश्यं प्रकरणे श्रूयते—तथाप्यानारभ्य श्रुतस्यापि साप्तदश्यस्य पूर्वाधिकरणोक्तन्यायेन प्रकृत्यर्थत्वात् सामिधेन्यनुवचनादेकार्यत्वेन साप्तदश्यपाञ्चदश्य-

योर्विकल्प एवेति । नन्वनारभ्यवादेन साप्तदश्यस्य सामिधेन्यनु-वचनद्वारेण तत्सम्बन्धिक्रतुमात्रसम्बन्धोऽवगम्यते । प्रकरणेन च क्रतुविशेषसम्बन्धः । तेन विशेषेण सामान्यस्य बाधात् कुतो विकल्पः ? स्यादेवं यदि वाक्यमेव क्रतुविशेषसम्बन्धं प्रतिपादयेत् । न त्वेतदस्ति । द्वयोरेव वाक्ययोस्तुल्यरूपत्वात् । किन्तु प्रकरणेन विशेषसम्बन्धो वक्तव्यः । तच्च वाक्याद् दुर्बलम् । तेन यावत्प्र-करणेन विशेषसम्बन्धः क्रियते, तावद्वाक्यद्वयेन तुल्यबलेन साप्तदश्यपाञ्चदश्ययोः प्रकृतौ विकल्प एवावधार्यत इति । तदुक्तम्—

तत्र नाम विशेषेण सामान्यस्य निराक्रिया ।
प्रत्यक्षो यत्र सम्बन्धो विशेषेण प्रतीयते ॥ इति ।

(तं. वा., पृ. १०३७)

तस्मात् साप्तदश्यमपि प्रकृत्यर्थमेवेति । एवं प्राप्ते—

(सिद्धान्तः)

अभिधीयते—भवेदेवं यद्यारभ्यश्रुतानारभ्यश्रुतवाक्ययोस्तु-ल्यरूपत्वं भवेत् । तथाहि—पाञ्चदश्यं प्रकरणेन लब्धापूर्व-सम्बन्धं वाक्येन विधीयमानमपूर्वीयानपूर्वीययोः सम्बन्धास-म्भवादपूर्वसामान्यलक्षणयाऽपूर्वीयसामिधेनीसम्बन्धेनैव विधीयते । साप्तदश्यं त्वनारभ्यश्रुतं प्रथममलब्धापूर्वसम्बन्धेनैव वाक्येन विधीयते । अतश्च खादिरतादिवदानर्थक्यपरिहाराय सामिधेन्य-

व्यभिचारोपस्थितेनापूर्वेण सम्बध्यते। न सामिधेनीस्वरूपसम्बन्धाविशेषेऽपि प्रकरणश्रुतं वाक्यम्। तत्त्वपूर्वीयसामिधेनीसम्बद्धमेव पाञ्चदश्यं विदधाति। अनारभ्य श्रुतन्तु सामिधेनीस्वरूपसम्बन्धमेव साप्तदश्यं विदधाति। पश्चात्तु तदुपपत्त्यर्थं क्रत्वपूर्वसम्बन्ध इति। अतः प्रथमं पाञ्चदश्यावरुद्धे क्रतौ साप्तदश्यस्यानवकाशात्कुतो विकल्पः ? तदुक्तम्—

तुल्यो यद्यपि सम्बन्धः सामिधेनीः प्रतीष्यते।
तथापि क्रतुसम्बन्धवैषम्यान्न विकल्प्यते॥ इति।

( तं. वा., पृ. १०३० )

ननु प्रकृतावनवकाशस्य साप्तदश्यस्य का तर्हि गतिः ? विकृताविति चेत्—न ; तत्रापि प्रकृतिवदतिदेशप्राप्तस्य सामिधेन्यनुवचनस्य पाञ्चदश्यावरुद्धत्वेन साप्तदश्यप्रवेशासम्भवात्। तेनानर्थक्यप्रतिहतानां विपरीतं बलाबलमिति न्यायेन प्रकृतावेव विकल्पेनास्य निवेशोऽभ्युपेतव्य इति। उच्यते—स्यादेवं यदि मित्रविन्दाध्वरकल्पासु विकृतिषु साप्तदश्यस्यावकाशो न भवेत्। तासु खलु प्रकरणश्रुतमेव सामिधेनीसाप्तदश्यमस्ति। अतस्तेनातिदिष्टस्य पाञ्चदश्यस्य बाधितत्वाद्भवति साप्तदश्यस्यावकाश इति। न च प्रकरणश्रुतेनैव साप्तदश्यविधानादस्य वैफल्यमिति वाच्यम्। उत्पत्तिविनियोगाभ्यां भेदेनार्थवत्त्वात्। अनारभ्यश्रुतेन हि

वाक्येन साप्तदश्यं सामिधेनीसम्बन्धेनोत्पादितम् । प्रकरण-श्रुतिवाक्येन च क्रतुविशेषसम्बन्धेन विनियुज्यत इति किमनुपपन्नम् ?

प्रयोजनम्—पत्तोक्तम् । सूत्रन्तु—प्रकरणविशेषात्पाञ्चदश्यस्य क्रतुविशेषसम्बन्धाविशेषात्तद्विरोधिसाप्तदश्यं विकृतौ मित्रविन्दाध्वरकल्पासु भवेदिति ॥

इति द्वितीयं अनारभ्याधीतस्यापि विकृत्यर्थताधिकरणम् ॥ २ ॥

अथ तृतीयं नैमित्तिकसाप्तदश्यादेः प्रकृत्यर्थताधिकरणम्

## नैमित्तिकं तु प्रकृतौ तद्विकारः संयोगविशेषात् ॥३. ६. १०॥

( विषयसंशयौ )

दर्शपूर्णमासयोराम्नातम्—"गोदोहनेन पशुकामस्य प्रणयेत्" इति । तथाग्नीषोमीये पशौ श्रूयते—"बैल्वो ब्रह्मवर्चसकामेन कर्त्तव्यः" इति । एवञ्जातीयकेषु सन्देहः—किं प्रकृतौ निवेशः ? उत विकृतौ ? इति । अनारभ्यश्रुतानां यथाक्रमं प्रकृत्यर्थत्वं प्रतिपाद्येदानीमारभ्यश्रुतानामेव प्रकृत्यर्थत्वमधिकाशङ्कानिराकरणेन प्रसङ्गात् प्रतिपाद्यते । अत्र यद्यपि सूत्रे नैमित्तकस्यैव विचारः । अस्ति च प्रकृतौ नैमित्तिकं सामिधेनीसाप्तदश्यम्—"सप्तदश

वैश्यस्य" इति तदपि विचारणीयमेव, तथापि तुल्यन्यायतया पूर्वपक्षसौकर्येण भाष्यकारेण काम्यमेवोदाहृत्य विचारितम् ।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षः—आरभ्यश्रुतानामपि गोदोहन वैल्वादीनां स्ववाक्योपात्तफलसंयोगान्न तावत्प्रकरणग्रहणमस्ति । तस्यासंयुक्तग्राहित्वात् । किञ्च काम्यानां गोदोहनादीनां प्रकृतौ प्रवेशः प्रकरणावगतक्रत्वङ्गभूतचमसादिबाधेन वक्तव्यः । तथा च सति क्रतोरेव वैगुण्यात्क्रतुफलसिद्धिस्तावन्नास्ति । नापि विगुणक्रतुसम्बन्धिनो गुणात्फलमिति । तदुक्तम्—

क्रत्वर्थाङ्गप्रहाणे हि न स्यात्तस्य क्रतोः फलम् ।
गुणाच्च न फलं सिध्येद्विगुणं क्रतुमाश्रितात् ॥ इति ।

( तं. वा., पृ. १०३४ )

अपि च यदपि गोदोहनादीनां प्रणयनादि साध्यं तस्य चोत्पत्तिशिष्टचमसादिनिराकाङ्क्षत्वान्न गोदोहनादिसम्बन्धो वक्तुं शक्यते । अतो न तावदेषां प्रकृतौ प्रवेशः सम्भवति । नन्वनेनैव हेतुना विकृतावपि प्रवेशो न सम्भवति । अतिदिष्टचमसादिविरोधस्य तत्राप्यविशिष्टत्वात् । उच्यते—सत्यमेवं, तथाप्यस्ति विशेषः । प्रकृतौ खलूपदिष्टपदार्थानुसारेणोपकारो विधिना स्वीकृतः । तेनासावुपदिष्टचमसादिपरित्यागेन न फलार्थोपदिष्टगोदोहनादिसाध्यामुपकारसिद्धिमनुमन्यते । विकृतौ तूपकाराव-

धारणापुरस्सरमङ्गावधारणम् । उपकारस्य च पुरुषार्थेनापि गोदोहनेन सिध्यविशेषादुपेक्षत एवातिदेशिकमङ्गमिति बाधकसौकर्याद्विकृत्यन्वय एव काम्यानामिति । एवं नैमित्तिकस्यापि नित्यावरुद्धत्वाल्पकृतावप्रवेशादेतेनैव न्यायेन बाधकसौकर्यावगममात्रे चमसो विहितः । गोदाहनन्तु प्राप्ते चमसे पशुकामकर्त्तृकप्रयोगविशेषे विहितं पू ँप्राप्तसामान्यविहिताद्बलवत्तरमिति व्यवस्थितम् ।

किञ्च नित्यभूतश्चमसः पशुकामव्यतिरिक्तप्रयोगेऽपि सावकाशः। गोदोहनन्तु पशुकामप्रयोगैकविषयमिति निरवकाशम् । सावकाशाच्च निरवकाशं बलीय इत्यपि स्थितम् । तथा क्रत्वर्थो हि चमसः । स च परम्परया क्रतूपकारकद्वारेण पुरुषार्थसम्बद्धः । गोदोहनञ्च स्ववाक्योपात्तेनैव पशुरूपपुरुषार्थेन सम्बद्धम् । विप्रकृष्टफलाच्च सन्निकृष्टफलं बलवत्तरमित्यपि व्यवस्थितम् । तेन विशेषविहितत्वादन्यत्रानवकाशत्वात्प्रत्यासन्नपुरुषार्थत्वाद्गोदोहनं सामान्यविहितं सावकाशं विप्रकृष्टफलं चमसं बाधत एवेति । तदुक्तम्—

विशेषविहितं ह्येतत्प्राप्ते चानवकाशकम् ।
पुरुषार्थसमीपे च चमसं तेन बाधते ॥

(तं. वा., पृ. १०३७)

काम्यनैमित्तिकानां च वाक्योपात्तं प्रयोजनम् ।
अतः शीघ्रं प्रवृत्तत्वान्नित्यात्ते बलवत्तराः ॥ इति ॥

(तं. वा., पृ. १०३३)

अतः काम्यनैमित्तिकयोरपि नित्यबाधेन प्रकृतावेव निवेशोपपत्तेर्न विकृतिगमनम्। नन्वेवं सति क्रत्वर्थचमसबाधेन क्रतोर्वैगुण्यान्न क्रतुफलसिद्धिः। नापि विगुणक्रतुसम्बन्धिनो गोदोहनात्फलमित्युक्तम्। अतः कथं चमसबाध इति। उच्यते—भवेदेवं यदि क्रत्वर्थमेव प्रणयनं गोदोहनं नाश्रयेत्। तथाहि—गोदोहनेन प्रणयेदिति विशिष्टविधिगौरवभिया विशेषणीभूतगोदोहनसङ्क्रान्तोऽयं विधिः प्रणयनानुवादमपेक्षते। सन्निहितश्च चमससाध्यं क्रत्वर्थं प्रणयनमस्ति। अतस्तदेवाश्रयमासाद्य दध्नेन्द्रियाधिकरणन्यायेन फले गुणविधिः पर्यवस्यति। तेन चमससाध्यस्य क्रत्वर्थस्यैव प्रणयनस्य गोदोहनेनाश्रितत्वान्न क्रतोर्वैगुण्यम्। नापि गुणस्य विगुणक्रतुसम्बन्धित्वम्। तेन द्वयोरेव फलसाधनत्वमव्याहतम्। अतो यद्यप्युत्पत्तिशिष्टचमसनिराकाङ्क्षं प्रणयनं गोदोहनमपेक्षते तथापि गोदोहनमेव फलसाधनमगत्या प्रकृतं प्रणयनमाश्रित्य समानविषयतया चमसबाधेनैव निविशते। तदुक्तम्—

उच्यते यो गुणः काम्यः क्रत्वर्थेन न गृह्यते।
क्रत्वर्थं कर्म गृह्णाति स एव स्वार्थसिद्धये॥ इति॥

(तं. वा., पृ. १०३५)

अतः सिद्धं काम्यं नैमित्तिकञ्च प्रकृतावेवेति।

प्रयोजनम्—पक्षोक्तम्। सूत्रन्तु—नैमित्तिकमित्युपल-

त्तणाम् । नैमित्तिकं काम्यञ्च प्रकृतावेव नियम्यतो संयोगविशेषात्प्रकृतिसम्बन्धबलीयस्त्वादिति ॥

इति तृतीयं नैमित्तिकसाप्तदश्यादेः प्रकृत्यर्थताधिकरणम् ॥३॥

अथ चतुर्थं पवमानेष्ट्यधिकरणम्

इष्ट्यर्थमग्न्याधेयं प्रकरणात् ॥ ३. ६. ११ ॥

( विषयसंशयसङ्गतयः )

सन्ति पवमानेष्टयः—"अग्नये पवमानाय पुरोडाशमष्टाकपालं निर्वपेदग्नये पावकाय, अग्नये शुचये" इति । तासां प्रकरणे समाम्नातम्—"वसन्ते ब्राह्मणोऽग्नीनादधीत" इति । तत्र सन्देहः—किमग्न्याधेयं पवमानेष्ट्यर्थम् ? उत नेति । आरभ्यानारभ्यवादप्रस्तावेनेदानीमारभ्यवादप्रतिभातस्यानारभ्यवादता प्रतिपाद्यते ।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षः—पवमानेष्टिप्रकरणे ह्याधानं श्रूयते । प्रकरणात्तदर्थमेव युक्तम् । नन्वग्नीनादधीतेति द्वितीयाश्रुत्याग्न्यर्थत्वमाधानस्यावगम्यते । अतः कथं प्रकरणात्पवमानेष्ट्यर्थत्वम् । नैवम् ; इष्ट्यर्थाग्निद्वारेणैवाधानस्येष्ट्यर्थत्वोपपत्तेः । यथावघातस्य दर्शपूर्णमासार्थव्रीहिद्वारेणैव दर्शपूर्णमासार्थत्वम् । नन्वग्नेः पवमा-

ष्ट्यर्थत्वे सत्याधानस्य तद्द्वारेणैव पवमानेष्ट्यर्थत्वं भवति । वारणाधिकरण एव पवमानेष्टीनामग्न्यर्थत्वमुक्तम् । अतः कथं तद्विपरीतमभिधीयते । उच्यते—तत्र ह्यानर्थक्यतदङ्गन्यायापवादेनेष्टीनामाधानाङ्गत्वमात्रं निराकृतम् । न त्वग्न्यर्थत्वं प्रतिपादितम् । नन्वग्न्यर्थत्वे सति पवमानेष्टीनामाधानस्य च 'गुणानाञ्च परार्थत्वात्' इति न्यायेन पवमानेष्टीनामाधानाङ्गत्वं निराक्रियते । असति त्वग्न्यर्थत्वे पवमानेष्टीनां प्रकरणात्फलवदाधानाङ्गत्वमेवेति वारणाधिकरणमेव भज्येत । मैवम् ; एवं हि तत्र मन्यते—आहिताग्निसाध्या हि पवमानेष्टयः । न तासामग्न्यर्थानामग्निसाधनीभूताधानाङ्गत्वं सम्भवति । तद्वरं विश्वजिन्न्यायेन कल्पितफलत्वमेव प्रकरणसद्भावात् । आधानस्यैव पवमानेष्ट्यर्थाग्निसंस्कारत्वेन तदङ्गत्वमिह पूर्वपक्षे प्रतिपाद्यत इति न तेन सहास्य विरोधः ।

नन्वेवं तर्ह्यनेनैव न्यायेनेष्टीनामाधानाङ्गत्वसिद्धेः 'गुणानाञ्च परार्थत्वात्' इति सौत्रो हेतुरनर्थकः स्यात् । नैतत् ; एतदर्थपरत्वादेव सूत्रस्य । तदयमर्थः—आधानस्याग्न्यर्थत्वादग्नीनाञ्च पवमानेष्ट्यर्थत्वात्पवमानेष्टीनाञ्च विश्वजिन्न्यायेन स्वर्गार्थत्वान्न पवमानेष्टीनामाधानाङ्गत्वमिति । यत्तु पवमानेष्टीनां तत्राग्न्यर्थत्वमुक्तम्, तदिह सिद्धमेवाधानाङ्गत्वस्फुटीकरणार्थमित्यवधातव्यम् । तेन प्रकरणात्पवमानेष्ट्यर्थमाधानमिति । एवं प्राप्तेऽभिधीयते—

न वा तासां तदर्थत्वात् ॥ ३. ६. १२ ॥

( सिद्धान्तः )

अयमभिप्रायः—भवेदेवं यदि पवमानेष्टीनां प्रकरणं भवेत् । तथाहि—कल्पितफलत्वेन हीष्टीनां प्रकरणं वक्तव्यम् । न च कल्पनायां प्रमाणमस्ति । साध्यभूताग्निसन्निधानात्तदर्थत्वे सति फलकाङ्क्षानिवृत्तेः । न चाग्नीनामेव पवमानेष्टिसाधनत्वान्नाग्निरिष्टीनां साध्य इति वाच्यम् । आधानपवमानजन्यातिशयद्वयशाली वह्निराहवनीयः । तेनाधानजन्यातिशयवतः पवमानेष्टिसाधनत्वम् । आहवनीयशब्दवाच्यस्य तु साध्यमिति को विरोधः ? यथा चाधानपवमानजन्योऽग्निराहवनीयस्तथा वारणाधिकरणे भद्रं पूर्वपक्ष एवोक्तमिति नेह प्रपञ्च्यते । तस्मादिष्टीनामग्न्यर्थत्वाभावादनारभ्याधीतमेवाधानमिति सिद्धम् ।

प्रयोजनम्—पूर्वपक्षे दर्शपूर्णमासादिषु नाधानसाध्याग्निरङ्गमित्यनाहिताग्नेरप्यधिकारः । सिद्धान्ते त्वाहिताग्नेरेवाधिकार इति । न चाग्न्याधानमेवाङ्गमिति पूर्वपक्षः, सिद्धान्ते च वर्णनीयः—"अग्नीनादधीत" इति वाक्येन लब्धप्रयोजनमाधानम् । अज्ञातप्रयोजनाः पवमानेष्टयः । तेन तत्प्रकरणादाधानार्था एव विज्ञायन्ते । न चाग्नेः पवमानेष्ट्यर्थत्वादाधानस्य चाग्न्यर्थत्वादाधानमेव पवमानेष्ट्यङ्गम् । "आहवनीये जुहोति"

इति वाक्येनोपदिष्टहोमानुवादेनाहवनीयविधानात् । पवमानेष्टीनाञ्च यजुरुत्पत्तित्वेन होमस्यातिदेशिकत्वादौपदेशिकातिदेशिकयोश्च प्राप्तिकालवैषम्येणैकोपदेशविषयत्वासम्भवात् । न चातिदेशादेवाग्निः पवमानेष्ट्यङ्गमिति वक्तव्यम् । प्रकरणलक्षणोपदेशेन पवमानेष्टीनामेवाधानाङ्गतयाग्न्यर्थत्वादाधानबाधितत्वाच्च-थाधानसंस्कृतेऽग्नौ पवमानेष्टयः क्रियन्ते, तथात्रैवोपरिष्टाद्वक्ष्यामः । अतो नाधानमिष्टीनामङ्गम् । तासामेव प्रकरणेनाङ्गत्वात् । तदुक्तं सूत्रकृता—'न वा तासां तदर्थत्वात्' इति ॥

इति चतुर्थं पवमानेष्ट्यधिकरणम् ॥ ४ ॥

## अथ पञ्चममाधानस्य प्रकृतिविकृत्यर्थताधिकरणम्

**तत्प्रकृत्यर्थं यथान्येऽनारभ्यवादाः ॥ ३. ६. १४ ॥**

(विषयसंशयौ)

तदेवाधानं किं प्रकृत्यर्थम् ? उत सर्वकर्मार्थम् ? इति सन्देहः । अत्र च प्रकृत्यर्थाभिधानमुपदिष्टहोमप्रकृतिविकृत्यभिप्रायेण । सिद्धे आधानस्यारभ्यश्रुतत्वेऽग्न्यर्थत्वे चेदानीमग्निद्वारेणैव प्रकृत्यर्थत्वाशङ्कानिराकरणेन केवलाग्न्यर्थत्वं प्रतिपाद्यते ।

(पूर्वपक्षः)

अत्रायं पूर्वपक्षः—यथानारभ्यश्रुतः खादिरत्वादिः स्रुगादि-

द्वारेण प्रकृत्यर्थः, तथानारभ्यश्रुतमप्याधानमग्निद्वारेण द्विरुक्तिदोषहानार्थं केवलप्रकृत्यर्थमेव युक्तम्। ननु स्रुगादीनां लौकिकत्वात्तत्स्वरूपे खादिरत्वादिविधानमनर्थकमिति भवत्वपूर्वसाधनलक्षणया प्रकृत्यर्थत्वम्। इह त्वाहवनीयस्यालौकिकत्वात्तदुत्पत्त्यर्थत्वेनैवाधानोपपत्तेर्नापूर्वसाधनलक्षणया प्रकृत्यर्थत्वं सम्भवति। उच्यते—एवं हि मन्यते—नालौकिकार्थोऽयमाहवनीयशब्दः, किन्तु स्रुगादिवल्लोकसिद्धाग्निवचन एव। "यदाहवनीये जुहोति" इति क्रतौ विनियोगे क्रत्वर्थान्तर्गतिरस्त्येव। अतस्तद्द्वारेण स्रुगादिवत्प्रकृत्यर्थमेवाधानम्।

भवतु वाऽलौकिक एवाहनीयशब्दः, तथापि तस्यापुरुषार्थत्वेनावश्यं क्रतावेव विधानं वक्तव्यम्। तत्र यथा भाविविनियोगप्रतिसन्धानेनाधानविधाने सिद्धेऽपि शेषित्वमाहवनीयस्य, तथा क्रतुप्रवेशेऽप्याधानस्य भाविविनियोगप्रतिसन्धानेनैवाहवनीयस्य द्वारता भविष्यति। तस्मादेतदाधानमितरानारभ्यवादवत्प्रकृत्यर्थमिति। एवं प्राप्तेऽभिधीयते—

सर्वार्थं वाधानस्य स्वकालत्वात् ॥ ३. ६. १५ ॥

( सिद्धान्तः )

अयमभिप्रायः—भवेदेवं यद्याहवनीयस्वरूपप्रयुक्तमाधानं न

भवेत् । न च स्रुगादिवल्लोकसिद्धाग्निवचनोऽयमाहवनीयशब्दः । आधानजन्यसंस्काररहिताग्निमात्रे लोक आहवनीयशब्दप्रयोगाभावात् । तेन लौकिकानां स्रुगादीनां खादिरतादिविधेः प्रागेव "स्रुवेणावद्यति" इत्यादिवाक्यैरवगतकर्माङ्गत्वात्तद्वारेण खादिरत्वादीनां सिद्धे क्रत्वर्थत्वे भवतु प्रकृतिविकृत्यर्थत्वविचारः । आहवनीयस्य त्वाधानतः प्रागनवगतस्वरूपत्वेन क्रत्वङ्गत्वे प्रमाणाभावात्कथं तद्वारेणाधानस्य प्रकृत्यर्थत्वम् ? तदुक्तम्—

सिद्धेऽङ्गत्वे ततस्तेषां किमर्थत्वं विचारितम् ।
न तु कर्माङ्गभावेऽस्य प्रमाणं किञ्चिदस्ति ते ॥ इति ।

( तं. वा., पृ. १०५० )

तेन चालौकिकत्वेऽप्याहवनीयस्य भाविविनियोगप्रतिसन्धानात्तच्छेपित्ववदाधानस्य क्रतुप्रवेशाद्वारतापि भविष्यतीति वाच्यम् । क्रतूपयोगित्वेन पुरुषार्थभूतस्याहवनीयस्यैवालौकिकत्वेन स्रुवविलक्षणस्य प्रयोजकत्वे सति क्रतुप्रवेशे कल्पनानवकाशात् । अतो नास्त्यग्निद्वारेण प्रकृत्यर्थत्वम् । किन्तु पृथगाहवनीयोत्पत्तिप्रयुक्तमेवैतदाधानमिति ।

प्रयोजनम्—पूर्वपक्षे आधानस्य क्रत्वङ्गत्वेन प्रधानप्रयोगान्तर्गतत्वात्तद्देशतत्कालतत्कर्तृत्वम् । सिद्धान्ते तु पुरुषार्थत्वादाधानस्य स्वकाले स्वदेशे स्वकर्तृभिरेवानुष्ठेयत्वमिति । सूत्रन्तु—सर्वार्थ-

माधानं सर्वकर्मार्थम्, न तु सर्वकर्माङ्गभूतम् । सिद्धान्ते तस्याग्नि-निष्ठत्वात् । स्वकालत्वादिति स्वातन्त्र्येण कालविशेषस्य पौर्णमा-स्यमावास्यारूपस्य विधानादित्यर्थः । तेन सन्देहभाष्येऽपि यत्सर्वा-र्थत्वाभिधानं तत्सर्वार्थाग्न्यर्थत्वाभिप्रायेणेति मन्तव्यम् ॥

इति पञ्चममाधानस्य प्रकृतिविकृत्यर्थताधिकरणम् ॥५॥

अथ षष्ठं पवमानेष्ट्यनतिदेशाधिकरणम्

तासामग्निः प्रकृतितः प्रयाजवत् ॥३. ६. १६॥

( विषयसंशयसङ्गतयः )

सन्ति पवमानेष्टयः—"अग्नये पवमानाय" इत्येवमाद्याः । तत्र सन्देहः—किं पवमानेष्टिसंस्कृतेऽग्नौ पवमानेष्टयः कर्त्तव्याः ? उत न ? इति । आधानस्य पवमानेष्ट्यङ्गत्वनिरासेनेह आहवनीयस्व-रूपप्रयुक्तत्वे साधिते प्रसङ्गादिदानीं पवमानेष्टीनां पवमानेष्टिसंस्कृते-ऽप्यनुष्ठानाशङ्का निराक्रियते ।

( पूर्वपक्षः )

अत्रायं पूर्वपक्ष :—दर्शपूर्णमासविकारभूता हि पवमानेष्टयः तत्र यथैव प्रयाजादयोऽतिदिश्यन्ते, तथा पवमानेष्टिसंस्कृतोऽप्यग्निः । न च पवमानेष्टिसंस्कृतोऽग्निः पवमानेष्टिभिर्विना सम्भवतीति पवमानेष्टयः पवमानेष्टिष्वनुष्टेया इति । न च तासामपि संस्कृताग्नि-

साध्यत्वेऽपरापरेष्ट्यपेक्षायामनवस्थेति वाच्यम्। अनुपादेयकालाङ्गानुरोधेन यावत्यः पौर्णमास्यमावास्ये नातिक्रामन्ति तावत्य एव करिष्यन्त इति नानवस्था। तस्मात्तासामपि प्रयाजादिवत्संस्कृतोऽग्निरङ्गमिति। एवं प्राप्तेऽभिधीयते—

न वा तासां तदर्थत्वात्॥ ३. ६. १७॥

(सिद्धान्तः)

अयमभिप्रायः—भवेदेवं यदि पवमानेष्टयो दर्शपूर्णमासाङ्गं भवेयुः। ता ह्यग्निमात्रप्रयुक्ता न दर्शपूर्णमासाङ्गमिति। नन्वग्निस्तावद्दर्शपूर्णमासाङ्गं पवमानेष्टिष्वतिदिश्यते। न च पवमानेष्टीर्विनाग्निः सिध्यति। तेनाग्निसिध्यर्थमेवेष्टयोऽनुष्ठातव्या इति। मैवम्; उपकारेण हि विकृतौ प्राकृतपदार्थप्राप्तिर्भवति। न च पवमानेष्टीनामग्निजन्योपकारापेक्षा समस्ति। अतोऽग्नेरेव पवमानेष्टिसाध्यत्वात्तेनेष्टिविधेः प्रागाहवनीयरूपस्यानिष्टत्वात्तद्व्यतिरिक्तपदार्थजन्य एवोपकारः पवमानेष्टिष्वतिदिश्यत इति न पवमानेष्टिषु पवमानेष्टिप्राप्तिरिति। भवतु वाग्नेरप्यतिदेशः, तथापि पवमानेष्टिजन्यसंस्कारस्य पवमानेष्टिभ्यः प्रागसिद्धत्वादाहितमात्र एवाग्निविषयः करिष्यति। एतत्त्वभ्युपेत्यवादेनोक्तम्। यतोऽङ्गं खल्वतिदिश्यते। न चाधानमात्रसंस्कृतोऽग्निर्दर्शपूर्णमासाङ्गम्। आधानपवमानेष्टिजन्यस्यैवाहवनीयस्याङ्गत्वात्। यत आहितेऽग्नौ पवमानेष्टीनामनुष्ठा-

नम् । तद्यद्याधानाङ्गत्वसिध्यर्थमुदीच्याङ्गभूताः पवमानेष्टयः, तदा तज्जन्यसंस्कारसहितेनाधानजन्यसंस्कारेणाहवनीयाख्यः संस्कारो जनयितव्यः । स चाहिताग्न्यनुष्ठिताभिरेव समानदेशत्वात्सिध्यतीति युक्तं तत्रानुष्ठानम् । न त्वग्नेः पवमानेष्टयङ्गत्वेनेति । अतो न पवमानेष्टिष्वपि पवमानेष्टयः कर्त्तव्या इति सिद्धम् ।

प्रयोजनम्—पक्षोक्तम् । सूत्रन्तु—न पवमानेष्टयः पवमानेष्टिसंस्कृतेऽग्नौ कर्त्तव्याः । तासामेवाग्न्यर्थत्वादग्निप्रयोजनत्वादिति ॥

इति षष्ठं पवमानेष्ट्यनतिदेशाधिकरणम् ॥ ६ ॥

## अथ सप्तमं पशुधर्माणामग्नीषोमीयार्थत्वाधिकरणम्

**तुल्यः सर्वेषां पशुविधिः प्रकरणाविशेषात् ॥ ३.६.१८ ॥**

( विषयसंशयसङ्गतयः )

अस्ति ज्योतिष्टोमे पशुरग्नीषोमीयः—"यो दीक्षितो यदग्नीषोमीयं पशुमालभते" इति । तथा सवनीयः आनुबन्ध्यश्च । सन्ति च पशुधर्माः—उपाकरणमुपानयनं, नियोजनं, संज्ञपनं, विशसनमित्येवमादयः । ते किं सर्वेषामग्नीषोमीयसवनीयानुबन्ध्यानाम् ? उताग्नीषोमीयस्य सवनायस्य च ? उताग्नीषोमीयस्यैव ? इति । श्रुतिलिङ्गवाक्यैः सह प्रकरणस्य विरोधाविरोधौ निरूप्येदानीं क्रमस्य श्रुतिलिङ्गवाक्यप्रकरणैः सह विरोधाविरोधचिन्तायां

प्रथमं प्रकरणेन सह विरोधाविरोधौ निरूप्येते। अत्र यद्यपि भाष्यकारेण त्रेधा सन्देहो वर्णितः, तथापि पक्षान्तरस्यापि सम्भवाद्वार्तिके चतुर्द्धैव दर्शितः—किमयं पशुधर्मस्त्रयाणामेव ? अथ सवनीयस्यैव ? अथाग्नीषोमीयसवनीययोः ? उताग्नीषोमीयस्यैवेति।

(पूर्वपक्षः)

अत्रायं पूर्वपक्षः—ज्योतिष्टोमे औपवसथ्येऽहनि चतुर्दश्यां पशुधर्माः श्रूयन्ते। न च ते वाक्येन केनचित्पशुना सम्बद्धाः प्रतीयन्ते। नाप्यवान्तरप्रकरणेनाग्नीषोमीयार्थाः सवनीयार्था वा भवन्ति। उत्पत्तौ हि प्रकरणं भवति। उत्पत्तिश्चाग्नीषोमीयस्य दीक्षाकाले सोमक्रयसन्निधौ दशम्यामेव। औपवसथ्ये तु पशुधर्मसन्निधावनुष्ठानमात्रं श्रूयते। तथा सवनीयस्यापि सुत्याकाले अमावास्यायामुत्पत्तिः। अनुष्ठानं तस्यापि पशुधर्मसमीपे। औपवसथ्येऽहनि गुणार्थं श्रवणम्। अनुबन्ध्यायास्त्वौपवसथ्ये नोत्पत्तिर्नानुष्ठानम्। सोऽमावास्यान्ते प्रतिपद्यनुष्ठीयते। तेन वाक्यावान्तरप्रकरणाभ्यां केनापि पशुनाऽगृहीतत्वात् ज्योतिष्टोममहाप्रकरणेनैवाग्नीषोमीयस्यानुष्ठानसादेश्यरूपं क्रमं बाधित्वा ज्योतिष्टोमार्थास्तावद्विज्ञायन्ते। तस्य च सोमद्रव्यत्वान्न पशुधर्मैः प्रयोजनमित्यानर्थक्यतदङ्गन्यायेष्ववतरन्तोऽङ्गत्वाविशेषात्त्रिष्वेव पशुषु भवन्तीति।

न तावदयं पूर्वपक्षः सम्भवति। पशुसम्बन्धेन श्रुतानां धर्माणां निराकाङ्क्षत्वात्। असंयुक्तग्राहिणा ज्योतिष्टोमप्रकरणेन ग्रहणासम्भवात् वारणादिपात्राणामिव यज्ञसम्बन्धेन श्रुतानामाधानप्रकरणेन। अतो नानर्थक्यतदङ्गन्यायेन सर्वपश्वर्थत्वम्। एतच्च वारणाधिकरण एव विवेचितम्। भवतु वान्यसंयुक्तस्यापि प्रकरणेन ग्रहणम्, तथाप्यौपवसथ्य एव सवनीयस्योत्पत्तेरवान्तरप्रकरणेन सवनीयार्था एव धर्मा भवन्ति। न च सवनीयस्य सुत्याकाल एवोत्पत्तेरौपवसथ्ये प्रकरणाभाव इति वाच्यम्। येन "आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीयाग्नेयं सवनीयं पशुमुपाकरोति" इति वाक्येन सुत्याकाले सवनीयोत्पत्तिर्वक्तव्या। ततश्चाश्विनग्रहग्रहणानन्तर्यं रशनात्रिवृत्त्वं यूपपरिव्याणं तदुत्तरकालमुपाकरणञ्च द्रव्यञ्च देवता चेत्येतत्सकलविशेषणविशिष्टो यागो विधेयः। तथा च सति सुतरां विशिष्टविधिगौरवमापद्येत। अस्ति चौपवसथ्ये द्रव्यदेवताविशिष्टयागमात्रविधायकम् "आग्नेयमजमग्निष्टोम आलभते" इति वाक्यम्। न च कथं तर्हि सुत्याकाले तस्यानुष्ठानमिति वाच्यम्। तेनोत्पादितस्यापि सवनीययागस्य सुत्याकाले पुनरुत्कर्षश्रवणात्। एवं ह्यौपवसथ्ये श्रूयते— "वपया प्रातस्सवने चरन्ति, पुरोडाशेन माध्यन्दिने, अङ्गैस्तृतीयसवने" इति। अत्र हि प्रातस्सवनशब्देन प्रातःकालीनो

ज्योतिष्टोमावयवोऽभिधीयते । ज्योतिष्टोमश्च सुत्याकालेऽनुष्ठेयः । तत्रैव वपादिप्रचारः श्रूयते । तेनौपवसथ्योत्पन्नस्यापि सवनीयस्य वपादिप्रचारदर्शनात्सुत्याकाल एवानुष्ठानमिति श्रूयते । तत्र च प्रधानदेशत्वादङ्गानामिति न्यायेनाङ्गेष्वप्युपाकरणादिष्वाकृष्टेषु कालानियमे प्राप्ते अश्विनग्रहणानन्तर्यमात्रं विधीयते । अन्यत्सर्वमनूद्यते । तदुक्तम्—

सवनीयान् पुरोत्पाद्य वपामुत्कृष्य वाक्यतः ।
तत्राप्यनियमे प्राप्ते तद्विशेषो विधीयते ॥ इति ।

(तं. वा., पृ. १०४६)

तेनायमत्र सूत्रार्थः—भवेत्सर्वेषां तुल्यः पशुधर्मविधिः, यदि प्रकरणाविशेषो भवेत् । अस्ति तु प्रकरणे विशेषः । यतः सवनीयस्य यत्रोत्पत्तिस्तत्रैवोपाकारणादिधर्माः श्रूयन्ते । अतः प्रकरणात्सवनीयार्था एव धर्मा इति ।

क्षोदीयानयमपि पूर्वपक्षपाशः । तथाहि—भवत्वेवं सवनीयार्था धर्मा अनुष्ठानसादेश्यलक्षणात्क्रमादग्नीषोमीयार्था अपि प्राप्नुवन्ति । ननु सवनीयोत्कर्षे सति पशुधर्माणामपि सुत्याकाल एवानुष्ठानमित्यनन्तरमेवोक्तम् । अतः कथं धर्माणामनुष्ठानसादेश्यलक्षणात्क्रमादग्नीषोमीयार्थत्वमपीति । न च स्थानसामर्थ्यबलेन तत्रापि धर्मानुष्ठानमिति वाच्यम् । दीक्षाकालोत्पन्नस्याप्यग्नीषोमीयस्याम्नानसामर्थ्यबलाद्दशम्यामप्यनुष्ठानप्रसङ्गात् । उच्यते—

सर्वत्र खल्वनुष्ठानसादेश्यलक्षणः क्रमः समानदेशानुष्ठानावगतिरूपः। तच्चानुष्ठानसिद्धिरूपम्। अनुष्ठाने सिद्धे क्रमावगतशेषत्वानन्तरकालभावित्वात्। पशुधर्माणां चौपवसथ्य आम्नानसामर्थ्यादनुष्ठानमवगतमेवेति क्रमादग्नीषोमीयार्थत्वमपीति। तेन यद्यपि सवनीयोत्कर्षे सति प्रधानदेशत्वादङ्गानामिति न्यायेन सवनीयाङ्गत्वेन यदनुष्ठानं तस्य भवतु सुत्याकालत्वम्। अग्नीषोमीयाङ्गत्वेन त्वनुष्ठानस्यौपवसथ्यकालीनत्वबाधप्रमाणाभावादबाधितमेव धर्माणां तत्कालानमप्यनुष्ठानमिति दीक्षाकालः स्यात्। तस्य त्वग्नीषोमीयस्य यद्यप्याम्नानसामर्थ्येनात्रानुष्ठानमवगतमेव, तथापि बलवता वचनेनौपवसथ्ये तदुत्कर्षादन्यस्य च तदङ्गत्वेनाप्यनुग्रहहेतोरभावाद्दीक्षाकालावगतमनुष्ठानं बाध्यत एव। इह तु न तथेति वैषम्यम्। ननु श्रुतिलिङ्गाधिकरणविरुद्धमिदमभिधीयते। तत्र हि श्रुत्या गार्हपत्यार्थस्यैन्द्रीमन्त्रस्य न दुर्बललिङ्गेनेन्द्रार्थत्वमिष्यते। तथात्रापि बलीयसा प्रकरणेन सवनीयार्थानां धर्माणां कथं दुर्बलेन क्रमेणाग्नीषोमीयार्थत्वमिति। उच्यते—तत्रैवैतद्यत्र शेषसम्बन्ध एव बलीयसि प्रमाणे प्रवृत्ते दुर्बलप्रमाणस्य नावश्यंभाविनी प्रवृत्तिः। यथैन्द्रीमन्त्र एव। इह त्वग्नीषोमीयस्य पशुधर्मैर्विना सिध्यभावादवश्यं दुर्बलप्रमाणेऽपि धर्मप्राप्तिर्वक्तव्या। तत्र किं सकलोपदेशप्रत्यस्तमये प्रवर्त्तमानादतिजघन्यादतिदेशाद्भवतु? अथवोपदेशान्तर्गता-

त्क्रमादिति सन्देहे सत्युपदेशरूपात्क्रमादेवाग्नीषोमीयस्य धर्मसम्बन्धो युक्तः। तदुक्तं सूत्रकृता 'स्थानाच्च पूर्वस्य' इति। तस्मात्प्रकरण-क्रमाभ्यां सवनीयाग्नीषोमीयार्थाः पशुधर्म्मा इति। एवं प्राप्तेऽ-भिधीयते—

नैकदेशत्वात् ॥ ३. ६. २२ ॥

( सिद्धान्तः )

अयमभिप्रायः—भवेदेवं यदि "वपया प्रातस्सवने चरन्ति" इति। वाक्येन सुत्याकालसम्बन्धेन प्रधानोत्कर्षे सत्यप्यङ्गानामु-त्कर्षो भवेत्। न च प्रधानदेशत्वादङ्गानामिति न्यायेन प्रधानो-त्कर्षेऽङ्गानामप्युत्कर्ष इति वाच्यम्। यतस्तत्रैवैतत् यत्रानिर्ज्ञातदेशका-लान्यङ्गानि भवन्ति। निर्ज्ञातदेशकालानान्तु न प्रधानदेशकालत्वम्। यथा ज्योतिष्टोमाङ्गानामेव दीक्षादीनां विशेषविहितदशम्यादिका-लत्वम्। अत्रापि सवनीयाङ्गानामुपाकरणादीनामौपवसथ्यकाले विधानानुरोधेनानुत्कर्षः। तेनोपकारणोत्कर्षो विधातव्यः। तस्य चाश्विनग्रहणोत्तरकालश्चेति प्राप्ते कर्मण्यनेकगुणविधानाद्वाक्यभेदा भवेत्। भवतु वा यथाकथञ्चिद्वाक्यभेदपरिहारः, तथाप्येकस्य कर्मणो द्वयोरुत्पत्तिवाक्यत्वासम्भवादेकेनोत्पत्तिरपरस्य च गुणवि-धानार्थं श्रवणमिति वक्तव्यम्। तत्र केनोत्पत्तिः कस्य गुणविधा-नार्थत्वमिति संशये "आग्नेयमजमग्निष्टोम आलभते" इत्यस्य

"वपया प्रातस्सवने चरन्ति" इत्यादिवाक्यैरेकवाक्यत्वापन्नस्य वपाप्रचारादिगुणविधानार्थमेव सवनीयानुवादकत्वं युक्तम् । उपादेयस्य वपाप्रचारलक्षणस्य गुणस्य दूरस्थसुत्याकालोत्पत्त्यैव सवनीयकर्मानुवादेनापि विधानसम्भवात् । विशेषेण च प्रातस्सवने सम्बन्धात्तत्कालीनसवनीययागोपस्थितौ सत्यां सुकरं तद्गुणविधानमित्यौपवसथ्यश्रुतान्येव "आग्नेयमजमग्निष्टोम आलभते" इत्युपक्रम्यापि "वपया प्रातस्सवने चरन्ति" इत्यादिवाक्यानि गुणविधानपराणि, सुत्याकालश्रुतन्त्वनुपादेयस्य कालस्य तिरोहितकर्मानुवादेन विधानासम्भवात्प्रकरणन्यायेन कालविशिष्टकर्मविधानार्थमेवेति तत्रैव कर्मोत्पत्तिरिति निश्चीयते । तदुक्तम्—

गुणार्थौपवसथ्येऽहि सवनीयपुनःश्रुतिः ।
उत्पत्तिः प्रक्रिया चैषामाश्विनग्रहणोत्तरा ॥ इति ।

( तं. वा., पृ. १०४४)

तेनौपवसथ्ये सवनीयप्रकरणाभावान्निष्प्रतिपक्षेण स्थानस्य क्रमेण केवलाग्नीषोमीयपशुयागार्थत्वम् । अतिदेशतस्तु सवनीयानुबन्ध्यार्थत्वमिति सिद्धम् ।

प्रयोजनम्—पूर्वपक्षे तुल्यन्यायतया पशुपुरोडाशयागस्यौपवसथ्यश्रुतस्याग्नीषोमदेवतासंस्कारार्थत्वात्सवनीये केवलाग्निदैवत्यत्वेन तथाऽभावान्न लिङ्गविरोधेन सवनीयार्थत्वम् । सिद्धान्ते

तु सवनीयस्याग्नीषोमीयविकृतित्वादूहेनाग्न्यादिसंस्कारत्वादतिदेशतः सवनीयार्थत्वमानुबन्ध्यार्थत्वमपीति । सूत्रन्तु—प्रधानोत्कर्षे तदेकदेशत्वेनोपाकरणाद्यङ्गोत्कर्षः । तेषामङ्गानां निर्ज्ञातस्वकालत्वादित्यभिप्रायः ॥

इति सप्तमं पशुधर्माणामग्नीषोमीयार्थताधिकरणम् ॥७॥

अथाष्टमं शाखाहरणादीनामुभयदोहार्थताधिकरणम्

दोहयोः कालभेदादसंयुक्तं शृतं स्यात् ॥ ३. ६. २८॥

( विषयसंशयौ )

अस्ति सायंदोहः प्रातर्दोहश्च । सन्ति च दोहधर्माः—शाखाहरणं गवां प्रस्नावनं दोहनमित्येवमादयः । ते किं सायंदोहार्थाः ? उतोभयार्थाः ? इति । क्रमस्य प्रकरणाविरोधं प्रतिपाद्येदानीं तदपवादः प्रतिपाद्यते । अत्र यद्यपि भाष्ये दोहार्थत्वेनैव विचारः प्रतिभाति, तथापि पूर्वेद्युर्दोहानुष्ठानप्रतिपादकवचनाभावादप्रसिद्धत्वेन च श्रुतिकल्पनाया असम्भवादधिपयोगत एवायं विचारो भाष्यकारेण दोहद्वारेणोक्त इति मन्तव्यम् ।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षः—यद्यपि "ऐन्द्रं दध्यमावास्यायाम्, ऐन्द्रं

पयोऽमावास्यायाम्'' इति दधिपयोयागावमावास्यायामेवानुष्ठेयौ, तथापि द्वयोरेव प्रातःकालानुष्ठेयत्वेन दधियागस्य सद्योजातदधि (?) मिश्राज्यत्वासम्भवादवश्यं चतुर्दश्यामेव सायंकाले दधियागार्थं दोहानुष्ठानमर्थसिद्धम् । न तु पयोयागार्थम् । तस्यामावास्यायां प्रातःकालकृतदोहेनैव निष्पत्तेः । दोहधर्मा अपि शाखाहरणादय-श्चतुर्दश्यामेव श्रूयन्ते । अतो दोहरूपाङ्गद्वारेण दधियागस्य चतुर्दश्यामेवोपक्रान्तत्वादनुष्ठानसादेश्यलक्षणेन क्रमेण दध्यर्था एव दोहधर्माः । तेन दोहयोश्चतुर्दश्यमावास्याकालभेदाच्छ्रुतशब्द-वाच्यं दुग्धं धर्मैरसंयुक्तं स्यादिति । एवं प्राप्तेऽभिधीयते—

प्रकरणाविभागाद्वा तत्संयुक्तस्य कालशास्त्रम् ॥३.६.२६॥

( सिद्धान्तः )

अयमभिप्रायः—भवेदेवं यदि प्रधानस्य दधियागस्य चतुर्दश्यामनुष्ठानं भवेत् । तथापि प्रधानस्य खलु धर्मोपदेशः क्रियमाणस्य बलवत्प्रमाणाविरोधे सति क्रमेण धर्मग्राहकत्वं भवति । यथाग्नीषोमीयस्य पशुधर्मग्राहकत्वम् । न चेह दधि-यागस्य चतुर्दश्यामनुष्ठानम् । ''अमावास्यायाममावास्यया यजेत'' इति साङ्गस्यैवामावास्यायामनुष्ठानावगमात् । किन्तु दध्यर्थदोहस्य चतुर्दश्यामनुष्ठानम् । न च दधियागार्थदोहस्य तत्रानुष्ठाने दधियागस्य क्रमो भवति । नापि तत्रानुष्ठीयमानत्वेन तद्दोहस्य

क्रमेण दोहार्थत्वमेव, धर्माणामर्थसिद्धत्वेन क्रमाभावस्योक्तत्वात्। अतः पूर्वेद्युराम्नातानां शाखाहरणादिधर्माणां क्रमेण न दधियागार्थत्वम्, नापि दोहार्थत्वम्, किन्तु प्रकरणाविभागादुभयार्थत्वे सत्येव केषाञ्चिद्धर्माणां शाखाहरणादीनां दधिसिध्यर्थं पूर्वेद्युरनुष्ठानमिति सिद्धम्।

प्रयोजनम्—पक्षोक्तम्। सूत्रन्तु—प्रकरणाविशेषादुभयसंयुक्तस्यैव शाखाहरणादेश्चतुर्दशीकाले शास्त्रमेव परं विधानार्थमिति॥

इत्यष्टमं शाखाहरणादीनामुभयदोहार्थताधिकरणम् ॥ ८ ॥

अथ नवमं ग्रहधर्माणां सवनत्रयार्थताधिकरणम्

तद्वत्सवनान्तरे ग्रहाम्नानम् ॥ ३. ६. ३० ॥

( विषयसंशयसङ्गतयः )

अस्ति ज्योतिष्टोमः "ज्योतिष्टोमेन स्वर्गकामो यजेत" इति। तत्रैन्द्रवायवाद्याः प्रातस्सवने दश ग्रहा आम्नाताः। तत्र धर्माः श्रूयन्ते—"उपोप्तेऽन्ये ग्रहाः साद्यन्तेऽनुपोप्ते ध्रुवः। दशापवित्रेण ग्रहं सम्मार्ष्टि" इति। सन्त्यपरे माध्यन्दिने सवने अपरे तृतीयसवने ग्रहाः। तेषु माध्यन्दिनतृतीयसवनीयेषु च सन्देहः—किं ग्रहधर्माः कर्त्तव्याः? उत प्रातःसवने ये ग्रहाः तेष्वेव? इति। अधिकाशङ्कानिराकरणार्थमुदाहरणान्तरे पूर्वोक्त एव न्यायोऽतिदिश्यते।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षः—भवतु दधियागस्य चतुर्दश्यामनुष्ठीयमानस्य तत्क्रमभावेन दोहधर्माणां प्रकरणाविशेषादुभयदोहार्थत्वम्, ग्रहधर्माणान्तु प्रातस्सवनानुष्ठेयानां प्रातस्सवनानुष्ठीयमानग्रहयागार्थत्वमनुष्ठानसादेश्यलक्षणात्क्रमाद्युक्तम्। न च प्रकरणात्क्रमस्य दुर्बलत्वात्प्रकरणेन सर्वग्रहार्थत्वमिति वाच्यम्। क्रमेण प्रातस्सवनिकग्रहार्थत्वेऽपि प्रकरणाविरोधात्। अतः क्रमेण प्रातस्सवनिकग्रहार्थत्वमेव ग्रहधर्माणामिति। एवं प्राप्ते—

( सिद्धान्तः )

अभिधीयते—भवेदेवं यदि प्रकरणाविरोधे क्रमस्य विनियोजकत्वं भवेत्। तथाहि—ज्योतिष्टोमापूर्वगृहीताः खलु ग्रहधर्मास्तत्साधनीभूतग्रहसम्बन्धिनस्तत्साधनत्वाविशेषात्सवनत्रयवर्त्तिग्रहसम्बन्धिनो विज्ञायन्ते। न च क्रमेण प्रातस्सवनिकग्रहार्थत्वेऽपि प्रकरणाविरोध इति वाच्यम्। अपूर्वार्थत्वप्रतिपादकस्य प्रकरणस्य क्रमेणैकदेशार्थत्वविषयसङ्कोचलक्षणबाधप्रसङ्गात्। तस्मात्क्रमं बाधित्वा प्रकरणेन सवनत्रयवर्त्तिग्रहार्था एव ग्रहधर्मा इति सिद्धम्।

प्रयोजनम्—पक्षोक्तम्। सूत्रन्तु—यथा दोहधर्मा दोहद्वयसाधारणास्तथा ग्रहधर्मा अपि सवनान्तरीयग्रहसाधारणा एवेति॥

इति नवमं ग्रहधर्माणां सवनत्रयार्थताधिकरणम्॥ ६॥

## अथ दशमं रशनाधर्मसाधारण्याधिकरणम्

### रशना च लिङ्गदर्शनात् ॥ ३. ६. ३१ ॥

( विषयसंशयसङ्गतयः )

अस्ति ज्योतिष्टोमे पशुरग्नीषोमीयः—"यो दीक्षितो यदग्नीषोमीयं पशुमालभते" इति । तत्र रशना श्रूयते, रशनाधर्माश्च "त्रिवृद्भवति, दर्भमयी भवति, प्रविष्टान्ता कर्त्तव्या" इति । तत्र सन्देहः—किमेते धर्मा अग्नीषोमीयरशनायाः सवनीयरशनायाश्च साधारणाः ? उताग्नीषोमीयार्था एव ? इति । प्रकरणक्रमयोर्विरोधाविरोधौ निरूप्येदानीं श्रुतिक्रमयोर्विरोधाविरोधौ निरूप्येते । अत्र यद्यपि साक्षान्न रशना श्रूयते, किन्तु "यूपं परिव्ययति" इति यूपपरिव्याणादेव लभ्यते, तथापि दर्भमय्यादिशब्दानां यौगिकत्वेन परिव्याणाक्षिप्तरशनाविशेषवचनत्वाद्भाष्ये रशना श्रूयत इत्युक्तम् । यूपपरिव्याणं "यूपं परिव्ययति" इत्यनेन यथाग्नीषोमीये विधीयते, तथा "आश्विनं ग्रहं गृहीत्वोपनिष्क्रम्य यूपं परिव्ययति" इत्यनेन सवनीयेऽपि विहितम् । तेन यूपपरिव्याणाक्षेपादेवोभयत्रैव रशनायाः प्राप्तत्वाद्रशनाधर्माः श्रूयमाणाः किमग्नीषोमीयरशनार्था एव उताग्नीषोमीयसवनीयरशनार्था इति भवति सन्देहः ।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षः—अग्नीषोमीयस्य क्रमे चतुर्दश्यां रशना-

धर्मा दर्भमय्यादयः श्रूयन्ते न सवनीयस्य । तेन पशुधर्मवदग्नीषोमीययूपपरिव्याणार्था एव रशनाधर्माः । ननु श्रुत्या रशनामात्रार्थाः प्रतीयन्ते । श्रुतिश्च वाक्याद्बलीयसी । सत्यम् ; किन्तु यूपस्वरूपसम्बन्ध आनर्थक्यादपूर्वसाधनलक्षणया श्रुत्या विनियोगो वक्तव्यः । तेन यथा श्रुत्या प्रकरणसहायभूतया बर्हिर्धर्माः प्रकरणवर्तिबर्हिर्मात्रार्थाः, एवं श्रुतिसाधारण्येऽपि न पिण्डपितृयज्ञबर्हिरर्थाः तथा रशनाधर्मा अपि क्रमसहायया श्रुत्या क्रमोपस्थिताग्नीषोमीययूपपरिव्याणरशनार्था एवेति । एवं प्राप्ते—

( सिद्धान्तः )

अभिधीयते—भवेदेवं यद्यग्नीषोमीयक्रमश्रुतस्य "यूपं परिव्ययति" इति परिव्याणस्य व्रीहिप्रोक्षणवद्यूपद्वारेण प्रधानापूर्वनिर्वृत्तावुपयोगो भवेत् । किन्तु यूपस्यालौकिकत्वेनानिर्ज्ञातोपायपरिमाणस्य साधनापेक्षायां "यूपं परिव्ययति" इति द्वितीयाश्रुत्या यूपनिर्वृत्त्युपयोगित्वेनैव परिव्याणस्य यूपाङ्गत्वं विज्ञायते । एवं सवनीयेऽपि "उपनिष्क्रम्य यूपं परिव्ययति' इति द्वितीयाश्रुत्या यूपाङ्गतया परिव्याणं श्रूयमाणं साधारणस्य यूपस्याग्नीषोमीय एव निष्पन्नत्वात् । यद्यपि न यूपस्वरूपनिर्वृत्त्युपयुक्तम्, तथापि स्वरूपे कार्ये चोपयोग्यङ्गं भवतीति न्यायेन यूपकार्यपशुनियोजनोपयुक्तदार्ढ्यातिशयजननेनैवाङ्गं भवति । एतच्च यूपाङ्गं

परिव्याणरशनात्वाविशेषादुभयरशनासाधारणा एव भवन्ति । न चैवं सत्यग्नीषोमीययूपस्यैव क्रमेण सन्निधापितत्वात्क्रमसहायया श्रुत्या तत्परिव्याणरशनार्था एव विज्ञायन्ते । प्रकरणसहाययेव श्रुत्या बर्हिर्धर्मा दर्शपूर्णमासीयबर्हिरर्था इति वाच्यम् । यतो य एव ह्यग्नीषोमीयस्य यूपः, स एव सवनीयस्यापि । तेनाग्नीषोमीययूपपरिव्याणरशनासम्बन्धित्वेन विधीयमाना धर्माः सवनीये यूपपरिव्याणरशनासम्बन्धेनापि विहिता भवन्ति । पिण्डपितृयज्ञबर्हिषो न दर्शपूर्णमासबर्हिर्भ्योऽन्यत्वाद्युक्तम् । यत्त्वसाधारणा धर्मा इति तथापि सवनीयोत्पत्तिवाक्ये "त्रिवृता यूपं परिवीय" इत्यनुवादो रशनाधर्मसाधारण्याद्विनानुपपद्यमानो लिङ्गं भवति । तेन लिङ्गदर्शनादपि साधारणा रशनाधर्मा इति सिद्धम् ।

प्रयोजनम्—पूर्वपक्षे सवनीयरशनाया दर्भमयादिनियमः । सिद्धान्तेऽग्नोषोमीय एव दर्भमयादिधर्मनियम इति । सुत्रन्तु—रशनेति रशनाधर्मोपलक्षणार्थम् । तेनायमर्थः—यद्वद्ग्रहधर्माः सवनत्रयवर्त्तिग्रहसाधारणाः, तद्वद्रशनाधर्मा अपि साधारणाः । लिङ्गदर्शनं चोक्तमेवेति ॥

इति दशमं रशनाधर्मसाधारण्याधिकरणम् ॥१०॥

अथैकादशं ग्रहधर्माणामंश्वदाभ्यर्थताधिकरणम्

आराच्छिष्टमसंयुक्तमितरैः सन्निधानात् ॥ ३. ६. ३२ ॥

( विषयसंशयौ )

दूराद्यच्छिष्यते ज्योतिष्टोमस्य, यथौपानुवाक्याकाण्डेऽश्वदाभ्यौ। तत्र सन्देहः—किं ज्योतिष्टोमे समाम्नाता ग्रहधर्माः कर्त्तव्याः? उत नेति। इदानीं प्रसङ्गाद्वाक्यप्रकरणयोर्विरोधाविरोधौ विचार्येते।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षः—भवतु रशनाधर्माणां यूपैकत्वात्क्रमनिबन्धनमव्यवस्थानम्। इह तु ग्रहाणां भिन्नत्वाद्यूपवद्ग्रहधर्माश्चैकेन प्रकरणेन गृहीतास्तेष्वेव सम्मार्गादिधर्माणां बर्हिर्धर्मवत् व्यवस्थोपपत्तेर्नास्ति दूराद्विहितयोरंश्वदाभ्ययोः सम्मार्गादिग्रहधर्मसम्बन्ध इति। एवं प्राप्तेऽभिधीयते—

संयुक्तं वा तदर्थत्वाच्छेषस्य तन्निमित्तत्वात् ॥ ३. ६. ३३ ॥

( सिद्धान्तः )

अयमभिप्रायः—भवेदेवं यद्यत्र प्रकरणाद्वाक्यस्य विशेषकत्वं भवेत्। तथाहि—प्रकरणस्य खल्वतिप्रसक्ते वाक्ये प्रकृतापूर्वसाधनोपस्थापकतया व्यवस्थापकत्वम्। यथा बर्हिर्धर्मविधायकवाक्ये दर्शपूर्णमासापूर्वोपस्थापकत्वेन, तदत्रापि प्रकरणस्य

ज्योतिष्टोमापूर्वसाधनाङ्गोपस्थापकत्वेनैव विशेषकत्वं वक्तव्यम् । ज्योतिष्टोमापूर्वीयत्वं चांश्वदाभ्ययोरपि ग्रहधर्मैर्भवितव्यमेव । येषान्तु पयोग्रहसुराग्रहादीनां ज्योतिष्टोमापूर्वसम्बन्धो नास्ति, तेषामेव परं न ग्रहधर्मसम्बन्धः । तेन प्रकृतव्यवस्थाविशेषकत्वाद्यावज्ज्योतिष्टोमापूर्वीयग्रहसम्बन्ध एव धर्माणामिति सिद्धम् ।

प्रयोजनम्—पत्तोक्तम् । सूत्रन्तु—अंश्वदाभ्यग्रहस्वरूपमपि ग्रहधर्मैः संयुक्तम् । तयोरपि ज्योतिष्टोमार्थत्वात् । शेषस्य च ग्रहधर्मस्य तन्निमित्तत्वात् ज्योतिष्टोमार्थत्वनिमित्तत्वादिति ॥

इत्येकादशं ग्रहधर्माणामंश्वदाभ्यग्रहार्थताधिकरणम् ॥११॥

### अथ द्वादशं चित्रिण्यधिकरणम्

### अग्न्यङ्गमप्रकरणे तद्वत् ॥ ३. ६. २५ ॥

अनारभ्याग्निमुच्यते—"चित्रिणीरुपदधाति, वज्रिणीरुपदधाति, भूतेष्टका उपदधाति" इति । सन्ति च प्रकरणे इष्टकाधर्माः—"अखण्डामकृष्णलाञ्च कुर्यात्" इति । तथा "भस्मना इष्टकाः संस्कुर्यात्" इति । तत्र सन्देहः—किमप्रकरणे समाम्नातानामिमे धर्माः कर्त्तव्याः (?) उत नेति । इदानीमुदाहरणान्तरेऽधिकाशङ्कां निराकर्त्तुं प्रकरणे समाम्नाता इमे धर्माः कर्त्तव्या इति पूर्वोक्त एव न्यायोऽतिदिश्यते ।

( पूर्वपक्षः )

अयं पूर्वपक्षः—भवतु ग्रहादिपात्राणामव्यभिचरितज्योतिष्टोमापूर्वान्वयानां प्रकरणमनपेक्ष्यापि वाक्येन सम्मार्गादिसंस्कारविधानादप्रकृतानामपि सम्मार्गादिधर्मसम्बन्धः। इष्टकादीनान्तु व्यभिचरिताग्न्यपूर्वसम्बन्धानामपूर्वान्वयार्थं प्रकरणमपेक्षितव्यम्। अतो यासामेवेष्टकानां प्रकरणवर्त्तित्वं, तासामेव धर्मसम्बन्धो न त्वन्यासामिति। एवं प्राप्ते—

( सिद्धान्तः )

अभिधीयते—भवेदेवं यद्यनारभ्याधीतानामपीष्टकानां स्थण्डिलद्वारेणाग्न्यपूर्वसाधनत्वं वाक्येन न प्रतीयेत। यथा खल्वंश्वदाभ्ययोरनारभ्यश्रुतयोरपि वाक्येन ज्योतिष्टोमापूर्वसम्बन्धे सति सम्मार्गादिग्रहधर्मसम्बन्धः, तथेहाप्यप्रकरणश्रुतानामपीष्टकानां वाक्येन स्थण्डिलनिर्माणद्वारेणाग्न्यपूर्वार्थत्वावगतेः प्रकरणसहायेन वाक्येनाग्न्यपूर्वसाधनेष्टकासु विधीयमाना धर्माः साधारणा एवेति सिद्धम्।

प्रयोजनम्—पक्षोक्तम्। सूत्रन्तु—अप्रकरणे श्रूयमाणा अपि वाक्येनाग्न्यङ्गमिष्टका अंश्वदाभ्यवत्सधर्मिका इति॥

इति द्वादशं चित्रिण्यधिकरणम्॥ १२॥

## अथ त्रयोदशमभिषवादीनामसमानविधानताधिकरणम्

**नैमित्तिकमतुल्यत्वादसमानविधानं स्यात् ॥३. ६. ३६॥**

ज्योतिष्टोमे श्रूयते—"यदि राजन्यं वैश्यं वा याजयेत्स यदि सोमं विभक्षयिषेत्, न्यग्रोधस्तिभिनीराहृत्य ताः सम्पिष्य दधन्युन्मृज्य तमस्मै भक्षं प्रयच्छेन्न सोमम्" इति । सन्ति च सोमधर्माः क्रयोऽभिषव इत्येवमादयः । तत्र सन्देहः—किं समानविधाना एते धर्माः सोमस्य फलचमसस्य च ? उत सोमार्थाः फलचमसस्य तद्विकारत्वादिति। पूर्वत्र तु धर्माणां समानविधानत्वं प्रतिपादितम् । इदानीन्तदपवादः क्रियते ।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षः—पूर्वमप्रकरणश्रुतत्वेऽप्यंशवदाभ्ययोर्ज्योतिष्टोमापूर्वसाधनत्वाविशेषादिष्टकानाञ्चाग्न्यपूर्वार्थत्वाविशेषात्समानो धर्मविधिरित्युक्तम् । तदत्रापि सोमफलचमसयोर्ज्योतिष्टोमापूर्वसाधनत्वाविशेषादपूर्वसाधनंलक्षणयां क्रयाभिषवादयो धर्मा विधीयमानाः सोमफलचमससाधारणा एवेति विज्ञायन्ते । ननु ग्रहधर्माणामिष्टकाधर्माणाञ्च ग्रहमात्रसम्बन्धेनेष्टकामात्रसम्बन्धेन च विधानाद्भवतु साधारण्यम् । सोमधर्माणान्तु सोमसम्बन्धेनैव विधानात्कथं सोमफलचमससाधारण्यमिति । उच्यते—सोमस्वरूपे धर्मविधानानर्थक्यादत्रापि ज्योतिष्टोमापूर्वीयहविःप्रकृतिद्रव्यसम्बन्धेन विधानं

वक्तव्यम् । तच्च रूपं सोमफलचमससाधारणमेव । तेन यथा दर्शपूर्णमासापूर्वीयहविःप्रकृतिद्रव्यसम्बन्धेन विधीयमाना अवघात-प्रोक्षणादयो धर्मा व्रीहियवसाधारणाः, तथा सोमधर्मा अपि क्रयाभिषवादयः सोमफलचमससाधारणा इति । एवं प्राप्ते—

( सिद्धान्तः )

अभिधीयते—भवेदेवं यदि नित्यानित्यसंयोगविरोधो न भवेत् । तथाहि—क्रयाभिषवादयः खल्वनित्यज्योतिष्टोमापूर्व-गृहीता नित्यद्वारमेवाश्रयन्ते । सोमश्च नित्यः, सकलज्योतिष्टोम-प्रयोगभावित्वात् । तेन नित्याम्नाता धर्मा नित्यसोमार्था एवेति सिद्धम् ।

इदन्त्विह वक्तव्यम्—कथं फलचमसे सोमधर्मप्राप्तिः ? अति-देशादिति ब्रूमः । न चैकस्मिन्नेव कर्मणि कथमतिदेश इति वाच्यम् । यतो नात्र कर्मातिदेशः, किन्तु द्रव्यधर्मातिदेशः । द्रव्ययोश्च सोमफलचमसयोरेकस्मिन्नपि कर्मणि भेदान्नातिदेशानु-पपत्तिः । तत्र यथा अवगतकरणभावं कर्मातिदिष्टधर्मकं कथमित्या-काङ्क्षायां द्रव्यदेवतादिसारूप्योपस्थितकर्मान्तराद्धर्मान् गृह्णाति, तथा द्रव्यमपगतक्रियासाधनभावं कथमित्याकाङ्क्षायां सारूप्यो-पस्थितद्रव्यान्तराद्धर्मान् गृह्णाति । तदत्र फलचमसेन यागं भावयेत् कथमित्याकाङ्क्षायां सोमस्थानापत्तिलक्षणस्य सारूप्यस्यान्तरङ्ग-

त्वात्सोमवदित्यवगते सोमधर्मानेव गृह्णाति । न चैवं सत्युभयथापि फलचमसे सोमधर्मानुष्ठानाविशेषान्निष्प्रयोजनो विचार इति वाच्यम् । गुणकामप्रवृत्त्यप्रवृत्तिप्रयोजनेन प्रयोजनवत्वात् । तथाहि—सोमफलचमसयोर्यदाभिषवादिविधिः समानः, तदोभयस्मिन्नभिषवादौ गुणकामाश्रयत्वनिरूपणात्फलचमसाभिषवेऽप्याश्रयप्रत्यभिज्ञानाद्गुणकामेन प्रवर्त्तितव्यम् । असमानविधानत्वेऽनुष्ठानसम्बन्धिन एवाभिषवस्याश्रयत्वनिरूपणात्फलचमससम्बन्धेनाश्रयप्रत्यभिज्ञानाभावान्निवृत्तिर्गुणकामस्येति पूर्वपक्षसिद्धान्तयोः प्रयोजनम् ।

सूत्रन्तु—नैमित्तिकफलचमसादि नित्येन सोमेनातुल्यत्वादसमानविधानं भवेदिति ॥

इति त्रयोदशमभिषवादीनामसमानविधानताधिकरणम् ॥१३॥

### अथ चतुर्दशं मुख्यप्रतिनिध्योस्सामानविध्याधिकरणम्

प्रतिनिधिश्च तद्वत् ॥ ३. ६. ३७ ॥

( विषयसंशयसङ्गतयः )

अस्ति प्रतिनिधिः श्रुते द्रव्येऽपचरिते । यथा व्रीह्यपचारे नीवाराः । तत्र सन्देहः—किं नीवाराः समानविधानाः ? उत नेति । पूर्वापवादेनेदमारभ्यते ।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षः—नित्यश्रुता ह्यवघातादयो नित्यश्रुतैर्व्रीहिभिरेव सम्बन्धमर्हन्ति न नीवारैः, तेषामश्रुतत्वात्। किन्तु व्रीह्यपचारेऽवश्यं कर्त्तव्यं नित्यम्, काम्यञ्च प्रारब्धमवश्यं समापनीयम्। तत्र द्रव्यापेक्षायामपचरितद्रव्यसदृशा नीवारा एवोपादीयन्ते। तेनासमानविधानानामेव व्रीहिकार्यापत्त्या फलचमसवदतिदेशादेव धर्मसम्बन्धो भवतीति। एवं प्राप्तेऽभिधीयते—

न तद्वत्प्रयोजनैकत्वात् ॥ ३. ६. ३८ ॥

( सिद्धान्तः )

अयमभिप्रायः—भवेदेवं यदि फलचमसवत्स्वेनैव महिम्ना नीवाराः कर्मसाधनं भवेयुः। किन्तु व्रीहिशास्त्रस्यावयवपर्यन्तत्वात्, व्रीह्यवयवानाञ्च कतिपयानां नीवारेषु विद्यमानत्वात् तदुपादित्सया पुरुषः प्रवर्त्तमानो नान्तरीयकतया नीवारत्वमुपादत्ते। तदतिरेकेण व्रीह्यवयवोपादानासम्भवात्। ते च व्रीह्यवयवाः "व्रीहिभिर्यजेत" इति प्रत्यक्षशास्त्रचोदिता एवेति युक्तमवघातादिधर्माणां नीवारेष्वपि समानविधानत्वमिति।

प्रयोजनम्—पूर्वपक्षे व्रीहीणामपचारे व्रीहिस्थाने नीवारपदोहः कर्त्तव्यः। सिद्धान्ते तु व्रीहिपदस्यैव प्रयोगान्न तदूहः।

ननु "व्रीहिभिर्यजेत" इति शास्त्रेण व्रीहित्वजातिः साधनत्वेन प्रतिपादिता, व्रीह्यवयवाश्च। व्रीहित्वमन्त्रश्च लिङ्गाद्व्रीहित्वजातिप्रकाशन एव विनियुक्तः। तेन यथा यवेषु लिङ्गाभावादप्रयोगः, तथा नीवारेष्वपीति कथं सिद्धान्ते व्रीहिपदप्रयोगादनूहः प्रयोजनमिति। उच्यते—स्यादेवं यदि स्वरूपेणामूर्त्ता जातिर्यागसाधनं भवेत्। किन्तर्हि? आश्रयव्यक्त्यवयवोपलक्षणत्वेन। तेषामेव पुरोडाशप्रकृतित्वेनापेक्षितविधानात्। तेन यथा "व्रीहिभिर्यजेत" इति विधौ साधनबलाद्व्रीहिबुद्धिर्व्रीहित्वोपलक्षितान् पुरोडाशप्रकृतिभूतानवयवानेव विषयीकरोति। एवमत्र योऽयं व्रीहिशब्दो विध्युद्देशानुरोधी प्रवर्त्तमानस्तथाभूतानेवावयवान् विषयीकरोति। ते च नीवारेऽप्यविशिष्टा एव। तेन यद्यपि नीवारेषु व्रीहित्वासमवायः, तथापि व्रीहित्वोपलक्षितानामेवावयवानां नीवारेष्वपि प्रत्यभिज्ञानादितरेषां प्रतिनिध्यसम्भवादस्यैव व्रीहित्वोपलक्षितत्वमपीति सूक्तं सिद्धान्तेऽनूहः प्रयोजनमिति।

सूत्रन्तु—यद्वदुपदेशेन व्रीहयो धर्मवन्तः, तद्वन्नीवारा अपि। व्रीहिशास्त्रेणैव यागसिद्धिप्रयोजनत्वावगमादिति॥

इति चतुर्दशं मुख्यप्रतिनिध्योस्सामानविध्याधिकरणम् ॥१४॥

अथ पञ्चदशं प्रतिनिधौ मुख्यधर्मानुष्ठानाधिकरणम्

नियमार्था गुणश्रुतिः ॥ ३. ६. ४० ॥

( विषयसंशयौ )

अथ यः प्रतिनिधिः, तत्र किं समानविधानम् ? उत नेति । यथा "यदि सोमं न विन्देत्पूतीकानभिषुणुयात्" इति । इदानीं प्रतिनिधानाशङ्कानिराकरणेन समानविधित्वमेव प्रतिपाद्यते ।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षः—भवतु नीवाराणां पृथक् शास्त्रार्थत्वाभावेन कार्यप्रत्यभिज्ञानाद्व्रीहिधर्माणामवहन्त्यादीनां समानविधानत्वम्, पूतीकानान्तु पृथक्शास्त्रार्थत्वात्तत्कार्यापत्त्या फलचमसवदसमान-विधानत्वमेवेति । एवं प्राप्ते—

( सिद्धान्तः )

अभिधीयते—भवेदेवं यदि पूतिकानां यागसाधनत्वार्थमेत-द्वचनं भवेत् । किन्तर्हि ? सोमापचारे तस्यावश्यं कर्त्तव्यत्वेन काम्यस्य च प्रक्रान्तस्य समापनीयत्वेन व्रीह्यपचार इव सदृशोपा-दानापेक्षायां सत्यामनेकसोमसदृशापादानावयवे सति पूतीको-पादाननियमार्थमिदं वचनम् । तेनायमर्थो भवति—यत्सोमापचारे तत्सदृशान् सोमावयवानुपाददीत, तत्पूतीकगतानेवेति ।

तदुक्तम्—

याग साधनतां कुर्यात्पूतीकानां यदि श्रुतिः ।
ततः स्यात्कार्यचर्चित्वं न त्वेवं सा प्रवर्त्तते ॥ इति ।

( तं. वा., पृ. १०५४)

ततः श्रुतस्यापि प्रतिनिधेरश्रुतप्रतिनिधिसमानत्वात्समानविधानत्वमेवेति सिद्धम् ।

प्रयोजनम्—पूर्वाधिकरणवदेव सोमस्थाने पूतीकपदोहः पूर्वपक्षे । सिद्धान्ते तु सोमपदप्रयोग एवेत्यनूहः । सूत्रन्तु—येयं पूतीकानां यागगुणत्वेन श्रुतिः सा पूतीकनियमार्था न स्वरूपविधानार्थेति ॥

इति पञ्चदशं प्रतिनिधौ मुख्यधर्मानुष्ठानाधिकरणम् ॥ १५ ॥

## अथ षोडशं संस्थाधिकरणम्

संस्थास्तु समानविधानाः प्रकरणाविभागात् ॥३.६.४१॥

( विषयसंशयसङ्गतयः )

अस्ति ज्योतिष्टोमः । तत्र संस्थाः समाम्नाताः—अग्निष्टोमः, उक्थ्यः, षोडशी, अतिरात्र इति । तत्र दीक्षणीयादयो धर्माः । तेषु सन्देहः—किं सर्वसंस्थं ज्योतिष्टोमं प्रकृत्य दीक्षणीयादयो धर्मा उक्ताः ? उताग्निष्टोमसंस्थमभिप्रेत्य ? इति । इदानीं समानविधानापवादः क्रियते । अत्रेयं विषयशुद्धिः—यद्यपि सप्तसंस्थो

ज्योतिष्टोमः—अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोडश्यतिरात्रो वाजपेयोऽप्तोर्याम इति, तथापि तासां धर्मसन्निध्याम्नानाभावेन समानविधानाशङ्काभावात्सन्निध्याम्नाताश्चतस्र एवोदाहृताः। तत्राप्यनेकग्रहचमसयागाभ्यासेनानेकसंस्थस्य ज्योतिष्टोमस्याध्ययनक्रमेण प्रथममग्निष्टोमसंस्था फलसम्बन्धेन श्रवणात्क्रत्वङ्गभूतैव। तत्र यद्यप्यग्निष्टोमे समाम्नाते "ज्योतिष्टोमेन स्वर्गकामो यजेत" इति फलविधानम्, "वसन्ते वसन्ते ज्योतिषा यजेत" इति निमित्ते विधानम्, तथापि फलनिमित्तसम्बन्धे संस्थाया ज्योतिष्टोमविशेषणत्वेनाश्रवणात् ज्योतिष्टोममात्रस्यैव 'एकस्य तूभयत्वे संयोगपृथक्त्वम्' इति न्यायेन फलार्थत्वं नैमित्तिकत्वञ्च। ततः "पशुकाम उक्थ्यं गृह्णीयात्, षोडशिना वीर्यकामः स्तुवीत, अतिरात्रेण प्रजाकामं याजयेत्" इति क्रमेण तिस्रो ज्योतिष्टोमसंस्थाः फलसम्बन्धेन श्रूयन्ते। तत्रापि ज्योतिष्टोमस्यापि प्रातिस्विकं फलं संस्थानान्त्वधिकं फलमिति द्वयोरेव फलसाधनत्वम्। तत्र दीक्षणीयादयो धर्माः श्रूयमाणाः किं ज्योतिष्टोमे उक्थ्यादिषु च समानविधानाः? उत ज्योतिष्टोमस्यैवेति भवति सन्देहः।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षः—दीक्षणीयादयो हि धर्मा विधीयमाना ज्योतिष्टोमस्य संस्थानाञ्च फलवत्त्वेनाकाङ्क्षायोग्यतासन्निधानाविशे-

षादुभयोरपि समानविधाना एवेति । ननु क्रयाभिषवादिधर्माणां नित्यानित्यसंयोगविरोधात्सोमफलचमसयोः समानविधानत्वमनन्तरमेव निराकृतम् 'नैमित्तकमतुल्यत्वादसमानविधानं स्यात्' इत्यत्र । तत्कथं नित्यज्योतिष्टोमे अनित्यासु संस्थासु च दीक्षणीयादीनां समानविधानत्वमिति । उच्यते—क्रयाभिषवादीनां हि प्रकरणेन ज्योतिष्टोमान्वयान्नित्यत्वे सिद्धे नित्य एव सोमो द्वारं नानित्यः फलचमस इति युक्तम् । इह तु ज्योतिष्टोमस्य संस्थानाञ्च प्रकरणाविशेषाद्विनिगमनाप्रमाणाभावादुभयार्थत्वमेव धर्माणामिति न नित्यानित्यसंयोगविरोधः । न चाक्रियात्वेन संस्थानां न प्रकरणमिति वाच्यम् । यतो ज्योतिष्टोमस्यापि न क्रियात्वेन प्रकरणं, किन्तु फलवत्वेन । तत्तु संस्थानामप्यविशिष्टम् । तेन यथा ज्योतिष्टोमः फलवत्वादुपजातकथंभावः सन्निहितान् दीक्षणीयादिधर्मान् गृह्णाति, तथा संस्था अपि फलवत्वादुपजातकथम्भावा धर्मान् गृह्णन्तीति समानविधानत्वमेव दीक्षणीयादिधर्माणामिति । तेन ज्योतिष्टोमस्य संस्थानाञ्च प्रकरणाविशेषादीक्षणीयादिधर्माः समानविधाना एवेति । एवं प्राप्तेऽभिधीयते—

विकारास्तु कामसंयोगे सति नित्यस्य समत्वात्
॥ ३. ६. ४३ ॥

अयमभिप्रायः—भवेदेवं यद्यत्रापि नित्यानित्यसंयोगविरोधो

न भवेत् । तथाहि---यथा क्रयाभिषवादयो धर्माः प्रकरणेन नित्यभूतज्योतिष्टोमसम्बन्धान्नित्यमेव द्वारमाकाङ्क्षमाणा नित्यभूतेन सोमेनैव सम्बध्यन्ते, नानित्येन फलचमसेन । तथेहापि दीक्षणीयादयो धर्मा नित्यवदाम्नाता नित्यमेव स्वसम्बन्धिनं शेषिणमपेक्षमाणा नित्यभूतेन ज्योतिष्टोमेन सम्बध्यन्ते, नानित्याभिः संस्थाभिरिति । न हि दीक्षणीयादयो धर्माः फलचमसवन्निमित्तसम्बन्धेन श्रूयन्ते, येनानित्या भवेयुः । संस्थास्तु फलसम्बन्धेन श्रवणादनित्यभूताः । अतो नित्यानित्यसंयोगविरोधान्न ताभिः सम्बध्यन्ते ।

ननु ज्योतिष्टोमस्यापि फलसम्बन्धः श्रूयते—"ज्योतिष्टोमेन स्वर्गकामो यजेत" इति । तथा "वसन्ते वसन्ते ज्योतिषा यजेत" इति निमित्तसम्बन्धेन ज्योतिष्टोमोऽपि निमित्तसम्बन्धादनित्य इति नित्यानित्यसंयोगोऽप्यविशिष्ट एव । नैतत्; न वयं स्वरूपतो नित्यत्वमनित्यत्वं वा ब्रूमः । किन्तर्हि ? श्रुतितः । न च ज्योतिष्टोमः क्वचित्फलसम्बन्धेन निमित्तसम्बन्धेन वा श्रूयते, "सोमेन यजेत" इति नित्यवच्छ्रुतस्यैव फलसम्बन्धो निमित्तसम्बन्धश्च प्रतीयते । संस्थानांतूत्पत्तावेव फलसम्बन्धेन श्रवणात्फलान्वितानाञ्चानित्यत्वादनित्यत्वेनैव श्रवणमिति न ताभिः सम्बध्यन्ते ।

ननु "पशुकाम उक्थ्यं गृह्णीयात् षोडशिना वीर्यकामः स्तुवीतातिरा-

रात्रेण प्रजाकामं याजयेत्' इति ग्रहणस्तोत्रयागानां फलसम्बन्धः श्रूयते। कथं संस्थानां फलसम्बन्ध इति। उच्यते—सर्वत्र विशिष्ट-विधिगौरवभयेनोपपदसङ्क्रान्तो विधिर्द्धात्वर्थमनूद्योपपदार्थमेव फले विधत्ते। अथाप्राप्तो धात्वर्थः, तर्हि विशिष्टमेव धात्वर्थं फले विधत्त इति प्रतिपादितम्। न चात्र धात्वर्थो न प्राप्तः, ग्रहणस्तोत्र-यागानां वाक्यान्तरैरेव प्राप्तत्वात्। न चोक्थ्यादिशब्दानां ग्रह-णादिसामानाधिकरण्यादुद्भिदादिवद् ग्रहणादिनामधेयत्वमेवेति वा-च्यम्। यतोऽज्ञातसन्दिग्धार्थस्य सामानाधिकरण्येन नामधेयत्वं निश्चीयते, न पुनर्व्रीहिसोमादिवन्निरूढार्थस्यापि। इह तूक्थ्या-दिशब्दानां स्मृतितो ज्योतिष्टोमसंस्थाविशेषेष्वेव प्रसिद्धत्वान्न सामानाधिकरण्येन ग्रहणादिनामधेयत्वाध्यवसानमिति संस्थाना-मुक्थ्यादिशब्दवाच्यानां फले विधानमिति।

ननु संस्था हि समाप्तिः। सा च क्रियोपरतिरूपत्वाद-भावरूपेति कथं तस्याः फलसाधनत्वमिति। उच्यते—केनोक्तं नाभावो भावान्तरोत्पत्तौ कारणमिति। प्रमाणाभावस्यैवाभाव-ज्ञानोत्पत्तिहेतुत्वात्। विहितनित्यनैमित्तिकाकरणस्य च प्रत्य-वायहेतुत्वात्। तथाच स्मरन्ति—

अकुर्वन्विहितं कर्म निन्दितञ्च समाचरन्।
प्रसक्तश्चेन्द्रियार्थेषु प्रायश्चित्तीयते नरः॥ इति।

( मनु., ११. ४४ )

अथ वास्त्येवात्राप्यौदासीन्यसङ्कल्पो भावरूप एव। स संस्थाशब्दवाच्य इत्यविरोधः। ननु कथन्तर्हि संस्थानां दीक्षणीयादिधर्मसम्बन्धः? न तावदुपदेशेन, समानविधानत्वस्य निराकृतत्वात्। नाप्यतिदेशेन, अतिदेशस्य सारूप्यनिबन्धनत्वात्। संस्थानाञ्च ज्योतिष्टोमेन सह सारूप्याभावात्। उच्यते—न हि सारूप्यमदृष्टरूपेण धर्मातिदेशोपयोगि। किन्तर्हि? धर्मवतः कर्मणो बुद्धिसन्निधापनेन। इह च फलाय विहिताभिराश्रयत्वेन ज्योतिष्टोमो गृहीतः। तेनाश्रयत्वप्रतिपत्त्यैव ज्योतिष्टोमस्य सन्निहितत्वात्किमत्र सारूप्येणेति। एतच्च दध्नेन्द्रियकामाधिकरण एव पुरस्तात्साधितम्—न च सारूप्यमेवैकं कारणमिति। अतः सिद्धं दीक्षणीयादीनां संस्थास्वसमानविधानत्वमिति। अनुष्ठानन्त्वसमानविधानत्वेऽपि साधारणमेव। ज्योतिष्टोमार्थानुष्ठितैरेव दीक्षणीयादिभिर्धर्मैः प्रसङ्गादेव संस्थानामप्युपकारसिद्धेरिति।

प्रयोजनम्—फलचमसवदेव गुणकामप्रवृत्त्यप्रवृत्ती। तत्रापि यदेव प्राकृतमुक्थ्यादिसंस्थानिमित्तं ग्रहणां स्तोत्रं शस्त्रञ्च तेषु यो धर्मः प्रकृतग्रहस्तोत्रशस्त्रगतोऽतिदेशेन प्राप्नोति, न तु यो गुणकामः। तेन पूर्वपक्षे संस्थास्वपि प्रवर्तितव्यम्। सिद्धान्ते तु नेति। सूत्रन्तु—उक्थ्यादिसंस्था नित्याग्निष्टोमसंस्थाविकृति-

भूता निविशन्त इति विकाराः, यतः कामसंयोगे सति ताः श्रूयन्ते। काम्यश्चार्थो नित्यमर्थं विकृत्य निविशन्त इति स्थितो न्यायः। तेन समानविधानत्वात् नित्यवदाम्नाता दीक्षणीयादया हि धर्मा नित्यस्यैवाग्निष्टोमस्य नित्यत्वेन तुल्यत्वादिति ॥

यो नाम कश्चिदिह संविदितं प्रमेयं
ग्रन्थान्तरे लिखति वा वदति स्वयं वा।
मत्कर्तृतामननुकीर्त्य स कीर्तिलोपात्
निस्सन्ततिर्जगति जन्मशतानि भूयात् ॥

इति षोडशं संस्थाधिकरणम् ॥ १६ ॥

इति भट्टश्रीभवदेवकृतौ तौतातितमततिलके
तृतीयस्य षष्ठः पादः ॥

## अथ तृतीयाध्यायस्य सप्तमः पादः

### तत्र प्रथमं वेदिबर्हिरधिकरणम्

**प्रकरणविशेषादसंयुक्तं प्रधानस्य ॥ ३. ७. १ ॥**

( विषयसंशयसङ्गतयः )

स्तो दर्शपूर्णमासौ। तत्र सन्ति बर्हिर्धर्मा वेदिधर्माश्च। तत्र सन्देहः—किं बर्हिरादयो बर्हिर्धर्माश्च प्रधानस्य ? उताङ्गप्रधानाना-मिति। वाक्यप्रकरणविरोधाविरोधद्वारेण समानासमानविधानत्व-मेव धर्माणां निरूप्यते। न तु वाक्येन प्रकरणविरोधाविरोधावेव, तयोः पूर्वमेव निरूपितत्वात्।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षिणोऽभिसन्धिः—यद्यपि "बर्हिषि हवींष्यासा-दयति, बर्हिर्लुनाति, वेदिं खनति" इति वाक्ये विशेषेण च बर्हिषो हविरासादनसम्बन्धस्तद्धर्माणाञ्च वेदिबर्हिस्सम्बन्धः प्रतीयते, तथापि हविरासादनमात्रसम्बन्धेन बर्हिर्लवनविधेरानर्थक्यात् लौकिकबर्हिषश्च प्रसङ्गादवश्यमपूर्वसाधनताकारितः सम्बन्धो वक्तव्यः। न चापूर्वसाधनता प्रकरणमन्तरेण लभ्यते। प्रकरण-ञ्च नाङ्गानाम्, किन्तु प्रधानस्यैवेति प्रधानमात्रसम्बन्ध एव बर्हिष-स्तद्धर्माणाम्। तेन यद्यपि प्रकरणं न विशेषकं कर्तृग्राहकमेव,

तथाप्यधिकारविध्याकाङ्क्षा खलु प्रकरणम् । ग्राहकत्वञ्च तस्यैतदेव यदाकाङ्क्षावतोरधिकारविधेरेव ग्राहकत्वम् । स च प्रधानोपकारार्थमेव सन्निधिश्रुतान् धर्माननुगृह्णातीति भवत्यर्थाद्विशेषणफलमिति । अतो भवति ग्राहकलक्षणावशादेव वाक्यस्य प्रधानगोचरमेव विनियोजकत्वमिति । तदुक्तम्—"प्रकरणविशेषात्" इति । न च वेद्यादीनां देशरूपत्वात्, देशस्य च प्रयोगाङ्गत्वेनाङ्गप्रधानार्थत्वात्, वेद्यादानामङ्गप्रधानार्थत्वमेवेति वक्तव्यम् । यतः "समे दर्शपूर्णमासाभ्यां यजेत, प्राचीनप्रवणे वैश्वदेवेन यजेत" इति (?) यागप्रधाने वैश्वदेवस्यैव करणत्वेन देशसम्बन्धविधानात् तद्विशेष एव न्यायः । वेद्यादीनान्तु प्रकरणनियतेन वाक्येन प्रधानमात्रार्थत्वावगमात प्रधानार्थत्वमेवेति नानुपपन्नम् । नापि द्वादशोपसत्त्ववदविरोधिसंयोगोऽस्ति सर्वेषामेवेति वेद्यादीनां प्रकरणे समावेशात्तेनोपसद्द्वादशत्ववद्वाक्येन विरोध्यसंयुक्तं बर्हिरादि प्रकरणेन प्रधानमात्रस्यैवेति । एवं प्राप्तेऽभिधीयते—

सर्वेषां वा शेषत्वस्यातत्प्रयुक्तत्वात् ॥ ३. ७. २ ॥

( सिद्धान्तः )

अयमभिप्रायः—भवेदेवं यद्यत्र प्रकरणं विनियोजकं भवेत् । किन्तर्हि ? वाक्यमेव । असंयुक्तं हि प्रकरणेन विनियुज्येतेत्युक्तम् । इह चाङ्गप्रधानसाधारणहविरासादनसंयोगेनैव वेदिबर्हिषी श्रूयेते ।

तद्धर्माश्च वेदिवर्हिर्मन्त्रसम्बन्धेन । अतः कथं प्रकरणवशेन प्रधानमात्रशेषत्वं वेदिवर्हिषोस्तद्धर्माणाञ्च । नन्वेवं सति प्रकरणस्य वाक्यार्थाव्यवस्थापकत्वे वाक्यमन्यत्रापि प्रसज्येत । तत्रानर्थक्यभिया मा नाम लौकिकं विदधातु, पिण्डपितृयज्ञीये तु दूरस्थे हविरासादने वेदिवर्हिर्विधित्वम् । नैतदेवम्; स्यादेवं यदि स्वतन्त्रमत्र वाक्यं विनियोजकं भवेत् । किन्तु दर्शपूर्णमासाधिकारविधिसन्निधिसमाम्नानवशेन तदेकवाक्यतापन्नम् । तेन दर्शपूर्णमासान्तर्गतस्यैव वेदिवर्हिर्विधेस्साङ्गसम्बन्धः । उच्यते—स्यादेतदेवं यदि वेदिवर्हिषोस्तद्धर्माणाञ्च साक्षात्तद्गतवेदिवर्हिषोः स्वतन्त्रं लवनादिधर्मविधिः । (१) न च पिण्डपितृयज्ञहविर्दर्शपूर्णमासवाक्यान्तर्गतम्, येन तत्रापि धर्मविधिर्भवेत् । तथा च सूत्रम्—'न तद्वाक्यं हि तदर्थत्वात्' इति । दर्शपूर्णमासप्रकरणगृहीतत्वेन तदेकवाक्यत्वं वक्तव्यम् । प्रकरणञ्च प्रधानस्यैवेति प्रधानसम्बन्धः प्राप्नोति, कथमङ्गसम्बन्धः ? उच्यते—स्यादेवं यदि बर्हिषस्तद्धर्माणाञ्च साक्षात्प्रधानसम्बन्धो भवेत् । किन्तु प्रधानीयहविरासादनद्वारेण वेदबर्हिषोस्तद्धर्माणाञ्च प्रधानीयवेदिबर्हिर्द्वारेण प्रधानसम्बन्धो वक्तव्यः । प्रधानीयत्वञ्च द्वेधा भवति—प्रधानार्थत्वेन प्रधानोपकारकत्वेन वा । तत्र यदि प्रधानार्थहविरासादनादिसम्बन्धः पुरस्क्रियते, तदा वाक्य-

स्यातिसङ्कोचो भवेत्। प्रधानोपकारकतामात्राभ्युपगमे तु न वाक्यविरोधो नापि प्रकरणविरोधः। सम्बन्धत्वञ्चोपकारकत्वमेव धर्मसम्बन्धे प्रयोजकम्, न तु तादर्थ्यम्। तदुक्तम्— 'अनुपकारिणि हि स्थितं नोपकरोति, न च तदर्थम् (तं.वा., पृ. १०७६) इति। तेनायं वाक्यार्थः—यद्दर्शपूर्णमासोपकारकं हविः तद्वेद्यां बर्हिषि समासादयति, या दर्शपूर्णमासोपकारिका वेदिस्तां खनति, यद्दर्शपूर्णमासोपकारकं बर्हिस्तल्लुनातीति। दर्शपूर्णमासोपकारकत्वञ्च यथा प्रधानहविषामेवमङ्गहविषामप्यविशिष्टम्। प्रधानापूर्वगृहीतानामपि धर्माणामङ्गप्रधानार्थत्वं युक्तमेवेति सिद्धम्।

प्रयोजनम्—पक्षोक्तम्। सूत्रन्तु—सर्वेषामेवाङ्गप्रधानहविरासादनादीनां वेदिबर्हिरादीनां शेषभूताः, शेषत्वस्य प्रकरणाप्रयुक्तत्वादित्यति ॥

इति प्रथमं वेदिबर्हिरधिकरणम् ॥ १ ॥

अथ द्वितीयं यजमानधर्माणां प्रधानार्थताधिकरणम्

फलसंयोगात्स्वामियुक्तं प्रधानस्य ॥ ३. ७. ६ ॥

( विषयसंशयौ )

ज्योतिष्टोमे केशश्मश्रुणोर्वपनं, पयोव्रतानि, तपश्चाम्नातानि ।

तेषु सन्देहः—किमङ्गप्रधानार्थानि ? उत प्रधानार्थानि ? इति। अस्मिन्नधिकरणे येषां संस्काराणां यजमानगामित्वं व्यवस्थास्यते, तेषामेव विषयत्वम्।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षः—यद्यपि यजमानस्य द्वैरूप्यमस्ति—यागकर्तृत्वं फलभोक्तृत्वञ्च, तथापि कर्तृत्वावगमपूर्वकत्वाद्भोक्तत्वावगमस्य सर्वेषामेवाङ्गप्रधानानामुपकारापेक्षित्वात्कर्तृत्वाद्यंशोपनिपाते च यजमानस्य साक्षात्प्रयुक्त्या च साङ्गप्रधानकर्तृत्वेन साङ्गप्रधानोपकारोपपत्तेः कर्तृत्वांशोपनिपातादङ्गप्रधानार्थत्वमेव वपनादिसंस्काराणामिति। एवं प्राप्ते—

( सिद्धान्तः )

अभिधीयते—भवेदेवं यदि कर्तृत्वांशोपनिपातिनः संस्कारा भवेयुः। भोक्तृत्वांशनिपातिनश्च ते। कर्तृत्वस्य संस्कारैर्विनाप्यध्ययनमात्रनिष्पत्तित्वेनैव सर्वलोकसिद्धत्वात्। फलभोक्तृत्वं तु न संस्कारैर्विना भवतीति न प्रमाणान्तरसिद्धम्। तेन फलभोक्तृत्वांश एव यजमानस्य योग्यतामादधानाः क्रियाः संस्कारा इत्युच्यन्ते। फलापूर्वस्य च प्रधानजन्यत्वात्प्रधानार्था एव यजमानसंस्काराः। तेन यथायान्यदृष्टार्थान्यङ्गानि तैः फलभोक्तृत्वम्, न तत्र न्यायेन पूर्वपक्षो विशेषणम् (?) दृष्टार्थान्यङ्गानि दैक्षादीनि फलयोग्यता-

माद्धानान्येवाङ्गानि भवन्ति, तथैतेऽपि संस्कारा इति सिद्धं यजमानसंस्काराणां केवलप्रधानार्थत्वमिति ।

प्रयोजनम्—पूर्वपक्षे यद्यङ्गार्थत्वमपि संस्काराणाम्, तदा दैक्षादयो ज्योतिष्टोमाङ्गानि विकारेष्वपि कर्त्तव्याः । सिद्धान्ते तु नेति । सूत्रन्तु—फलभोक्तृत्वात्स्वामिभूतयजमानसंयुक्तं वपनादि प्रधानस्यैवेति ॥

इति तृतीयं यजमानधर्माणां प्रधानार्थताधिकरणम् ॥२॥

अथ द्वितीयं सौमिकवेदेरङ्गप्रधानार्थताधिकरणम्

चीकीर्षया च संयोगात् ॥ ३. ७. ७ ॥

( विषयसंशयौ )

ज्योतिष्टोमे श्रूयते—"त्रिंशत्प्रक्रमा प्राची चतुर्विंशतिरग्रेण त्रिंशज्जघनेन इयति शक्ष्यामहे" इति । तत्र सन्देहः—किमेवमाद-योऽङ्गप्रधानार्थाः ? उत प्रधानार्थाः ? इति । इदानीं विचारद्वयेन पूर्वोक्तप्रधानार्थत्वापवादः क्रियते ।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षः—"इयति शक्ष्यामहे" इति वाक्याच्चिकीर्षा-संयोगेन सौमिकी महावेदिः श्रूयते । प्रधानत्वञ्च फलवत्वात् । तेन चिकीर्षासंयोगेन श्रुता वेदिः केवलप्रधानार्थैवेति । एवमपर्थ-

वसित एव विचारे विचारान्तरं वैसूत्रगतसंयोगादिति पदानुषङ्गलोभेन प्रस्तूयते ।

अथ चतुर्थमभिमर्शनस्याङ्गप्रधानार्थताधिकरणम्

स्तो दर्शपूर्णमासौ । तत्र श्रूयते—"चतुर्होत्रा पौर्णमासीमभिमृशेत् पञ्चहोत्रामावास्यायाम्" इति । तत्र सन्देहः—किमङ्गप्रधानार्थमभिमर्शनम् ? उत प्रधानार्थम् ? इति । अत्रायं पूर्वपक्षः—पौर्णमास्यमावास्याशब्दयोः प्रधानकर्मसमुदायद्वयार्थत्वात्तयोश्चामूर्त्तत्वेनाभिमर्शनायोग्यत्वाल्लक्षणया पौर्णमास्यमावास्याशब्दयोर्योग्यतया स्वाङ्गभूते हविषि वृत्तिर्वक्तव्या । तथाच सति केवलप्रधानार्थमेवाभिमर्शनमिति । तेन पौर्णमास्यमावास्याभिधानेन संयोगादभिमर्शनपदाभिधेयः स्पर्शः चतुर्होतृमन्त्रेण पञ्चहोतृमन्त्रेण च क्रियमाणः प्रधानहविस्सम्बद्ध एव कर्त्तव्य इति । एवं प्राप्ते—

अपर्यवसिते पूर्वविचारे तावत्सिद्धान्तोऽभिधीयते—

तद्युक्ते तु फलश्रुतिस्तस्मात्सर्वचिकीर्षा स्यात् ॥ ३. ७. ८ ॥

( सिद्धान्तः )

अयमभिप्रायः—भवेदेवं यदि प्रधानमात्रं चिकीर्षितं भवेत् । तथाहि—यदि शक्ष्यामहे अस्यां कर्त्तुमिति हि चिकीर्षा प्रतीयते । प्रधानमात्रस्य खल्वल्पपरिमाणवेद्यामपि शक्यानुष्ठानत्वादिति यदि शक्ष्यामह इति योऽयं सिद्धान्ते महावेद्यां

चिकीर्षानिर्देशः, स सर्वाङ्गोपेतज्योतिष्टोमार्थत्व एव वेदेरुपपद्यते, न प्रधानमात्रार्थत्वे । प्रधानमात्रार्थत्वेनावसिते देशे दैक्षादि- सकलाङ्गयुक्तस्यैव शक्यकरणत्वात् । तेनेयं चिकीर्षा वेदेरङ्गप्र- धानार्थत्वमेव प्रतिपादयति । न च वेदेः साङ्गप्रधानार्थत्वं न सम्भवति, देशविशेषात्मकत्वात् । देशकालयोगश्च साङ्गप्रधान- प्रयोगविषयत्वावधारणाविरोधाद्वेदेः साङ्गप्रधानार्थत्वमेव । यत्तु फलं न चिकीर्षितमित्युक्तम् । तदप्यविरुद्धम्, साङ्गस्यैव फलत्वेन चिकीर्षितत्वात् । तस्मात्सर्वाङ्गोपेतज्योतिष्टोमार्थैव सौमि- कमहावेदिरिति सिद्धम् । न च वाच्यम्—यद्यङ्गप्रधानार्थत्वमेव वेदेरुपदेशेन, कथन्तर्हि दर्शपूर्णमासविकारेषु दीक्षणीयादिषु महावेदेः प्रसङ्गेनोपकारकत्वप्रयोजनश्चाङ्गे वार्त्तिककारपादैरुक्तम् । भाष्यकारेण हि तथा वेदिप्रसङ्गन्यायो द्वादशे दर्शितः । स च न्यायः प्रयोजनभङ्गेऽप्यविशिष्ट इति न किञ्चिदनुपपन्नम् ।

प्रयोजनम्—पूर्वपक्षेऽग्नीषोमीयविकारे महावेदिर्न कर्त्तव्या । सिद्धान्ते तु कर्त्तव्येति । सूत्रन्तु—तद्युक्ते सर्वाङ्गयुक्ते फलश्रुतेः फलान्वितस्यैव सर्वाङ्गप्रयुक्तस्यैव ज्योतिष्टोमस्य वेद्यां चिकीर्षा स्यादिति ॥

इति तृतीयं सौमिकवेदेरङ्गप्रधानार्थताधिकरणम् ॥ ३ ॥

इदानीं द्वितीयविचारपूर्वपक्षे सिद्धान्तोऽभिधीयते—

गुणाभिधानात्सर्वार्थमभिधानं स्यात् ॥ ३. ७. १० ॥

( सिद्धान्तः )

अयमभिप्रायः—भवेदेवं यदि पौर्णमास्यमावास्याप्रातिपदिकद्वयमत्र लक्षणावृत्तं भवेत् । तथाहि—कालकर्मतत्समुदायानामनभिप्रष्टव्यत्वादवश्यं तावत्पौर्णमासीममावास्यामित्यत्र प्रकृतिप्रत्यययोरन्यतरेण लक्षणावृत्तेन भवितव्यम् । तत्र यद्यपि प्रकृतिप्रत्यययोः प्रत्ययार्थः प्रधानमिति गुणभूतं प्रातिपदिकमेव लक्षणावृत्तमुचितम् । तावतापि तत्सम्बन्ध्यमावास्यादिशब्देऽसति कर्त्तव्यविशेषानवगमात्प्रथमावगतत्वेन प्रातिपदिकमुख्यार्थत्वस्यैवोचितत्वात्पौर्णमास्यमावास्याप्रातिपदिकद्वयं मुख्यकालार्थमेव । द्वितीयाविभक्तिस्तु चरमभाविनी लक्षणया सप्तम्यर्थे कल्प्यते । पौर्णमास्याममावास्यायामिति तत्राधिकरणत्वमेव न कर्मत्वम् । अभिमर्शनकर्मणो हविषोऽधिकारादेव लब्धत्वात् । अतः कालद्वारेण मन्त्रद्वयव्यवस्थार्थमेवेदं वाक्यद्वयम्—यत्पौर्णमास्यां हविः तच्चतुर्होत्रा मन्त्रेणाभिमृशेत्, यदमावास्यायां हविस्तत्पञ्चहोत्राभिमृशेदिति । तस्मात्पौर्णमास्यमावास्यासम्बन्धिहविर्मात्राभिमर्शनादङ्गप्रधानार्थमेवाभिमर्शनमिति सिद्धम् ।

प्रयोजनम्—पक्षोक्तम् । सूत्रन्तु—पौर्णमास्यमावास्ययोरधिकरणत्वरूपगुणविधानात्पौर्णमास्यमावास्याशब्दयोः कालद्वयाभिधानं सर्वहविरभिमर्शनार्थमिति ॥

इति चतुर्थमभिमर्शनस्याङ्गप्रधानार्थताधिकरणम् ॥ ४ ॥

अथ पञ्चमं दीक्षादक्षिणयोः प्रधानार्थताधिकरणम्

दीक्षादक्षिणन्तु वचनात्प्रधानस्य ॥ ३. ७. ११ ॥

( विषयसंशयौ )

ज्योतिष्टोमे दीक्षा श्रूयते—"तिस्रो दीक्षाः" इति । तथा दक्षिणा श्रूयते—"तस्य द्वादशशतं दक्षिणा" इति । तत्र सन्देहः—किं दीक्षादक्षिणमङ्गप्रधानानाम् ? उत प्रधानस्येति । इदानीमङ्गप्रधानार्थत्वमेवातिप्रसक्तमपोद्यते ।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षः—यद्यपि "सोमस्य दक्षिणा" इति वचनाद्दीक्षादक्षिणयोः प्रधानसम्बन्ध एवावगम्यते, तथापि "दीक्षितः सोमं क्रीणाति" इत्यत्र दीक्षितस्योपादीयमानत्वेन विवक्षितदीक्षाविधिविशेषणस्यैव यजमानस्य सोमक्रयादौ कर्तृत्वेन विनियोगाद्दीक्षायां कर्तृगामित्वं प्रतीयते । कर्तुश्च साङ्गप्रधानार्थत्वाद्दीक्षाया

अपि साङ्गप्रधानार्थत्वमेवेति "सोमस्य दीक्षेति" इति ष ष्ठ्यभिधेयस्य सम्बन्धस्य साक्षात्पारम्पर्येण वाऽविरुद्धत्वाद्दीक्षायाश्चाङ्गप्रधानार्थत्वमेव। दक्षिणायाश्च ऋत्विगानमनार्थत्वस्य व्यक्तत्वादङ्गप्रधानार्थत्वं सुव्यक्तमेव । तस्माद्दीक्षादक्षिणमङ्गप्रधानार्थमेवेति। एवं प्राप्ते—

( सिद्धान्तः )

अभिधीयते—भवेदेवं यदि "दीक्षाः सोमस्य" "दक्षिणाः सोमस्य" इति वचनद्वयमन्यथोपपद्येत। तथाहि—कर्तृगामित्वेनाङ्गप्रधानार्थत्वस्य दीक्षादक्षिणयोर्न्यायत एव लब्धत्वात् तेनापि वचनेन तद्रूप एव सम्बन्धः प्रतिपाद्यते तदा वचनद्वयमिदनर्थकमेवोपद्येत। न च साक्षात्सम्बन्धप्रतिपादकत्वे सम्भवति षष्ठीश्रुतेः परम्परासम्बन्धप्रतिपादकत्वमप्युचितम् । तेन "सोमस्य दीक्षा सोमस्य दक्षिणा" इति च षष्ठीश्रुत्योरङ्गप्रधानार्थत्वबाधेन दीक्षादक्षिणयोः प्रधानार्थत्वमेव प्रतिपादयति। ननु समानकर्तृसन्निपातित्वेन न्यायात्सर्वयागार्थत्वं भवतु दीक्षायाः, न्यायस्य च वचनबाधितत्वात्। "दीक्षितः सोमं क्रीणाति" इत्यादिवचनवशात्सोमक्रयाद्यङ्गार्थत्वमपि प्राप्नोति, कथं प्रधानमात्रार्थत्वम्। उच्यते—अनन्यार्थं हि विशेषणं विशिष्टं विनियुज्यते, न त्वन्यार्थत्वमेव प्रतीतमपि। न हि "यजमानसम्मितौदुम्बरी भवति" इत्यत्र फलार्थस्य यागस्यापुरुषविशेषणस्यौदुम्बरीसम्माने विनि-

योगाद्भवति। तेनात्रापि दीक्षाया वचनेन प्रधानार्थत्वस्यावधारितत्वान्न सोमक्रयणे विनियोगः सम्भवतीति सिद्धं केवलप्रधानार्थत्वम्। दक्षिणायाश्च केवलप्रधानार्थाया एव यथा प्रसङ्गेनाङ्गोपकारकतया द्वादशे प्रतिपादनीयम्। अतः सिद्धं दीक्षादक्षिणयोः केवलप्रधानार्थत्वमिति।

प्रयोजनम्—पूर्वपक्षे सोमाङ्गविकारेषु दीक्षादक्षिणयोः प्राप्तिः। सिद्धान्ते तु नेति। सूत्रन्तु—व्यक्तार्थमेवेति॥

इति पञ्चमं दीक्षादक्षिणयोः प्रधानार्थताधिकरणम्॥५॥

## अथ षष्ठं यूपावटदेशलक्षणाधिकरणम्

### तथा यूपस्य वेदिः॥ ३. ७. १३॥

(विषयसंशयौ)

अस्ति ज्योतिष्टोमे पशुरग्नीषोमीयः—"यो दीक्षितो यदग्नीषोमीयं पशुमालभते" इति। तत्र यूपं प्रकृत्य श्रूयते—"वज्रो वै यूपो यदन्तर्वेदि मिनुयात्तन्निर्दहेत्, यद्बहिर्वेदि अवरुद्धः स्यादर्धमन्तर्वेदि मिनोत्यर्द्धं बहिर्वेदि, अनवरुद्धो भवति न निर्दहति" इति। तत्र सन्देहः—किमन्तर्वेदि इति यूपाङ्गभावेन वेदिरुपदिश्यते? उत "अर्धमन्तर्वेदि अर्धं बहिर्वेदि" इति देशलक्षणार्थमुच्यते? इति। इदानीं वाचनिकाङ्गत्वापवादेनेदमारभ्यते।

तत्र 'चिकीर्षया च संयोगात्' इत्यत्र साङ्गप्रधानार्थत्वं वेदेः प्रतिपादितं विरोधाद्यूपाङ्गत्वाभिधानमयुक्तमित्येतदधिकरणमर्थात्पूर्वं द्रष्टव्यम् । अनेन तु यूपाङ्गत्वे वेदेर्निराकृते किं केवलप्रधानार्था ? उत साङ्गप्रधानार्थेति युक्तो विचारः ।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षः—"अर्द्धमन्तर्वेदि मिनोति" इत्यनेन वाक्येन मुख्यवेदिरेव यूपमानाङ्गत्वेन विधीयते, न तु लक्षितो देशः, लक्षणाप्रसङ्गादेव । "इयति शक्ष्यामहे" इति सामान्यवचनम् । तदपि यूपमानं यूपविषयमेवोपसंहर्त्तव्यम् । यूपमानन्तु इयति शक्ष्यामह इति । तथाच सत्यापरार्द्धमानं तस्यार्थादेव बहिरनुष्ठानं प्राप्तमेवोच्यते अर्द्धं बहिर्वेदीत्यनेन । यथा दीक्षादक्षिणं वचनात्प्रधानस्य, तथा वेदिरपि यूपमानाङ्गत्वेन वचनेन विधीयत इति । एवं प्राप्तेऽभिधीयते—

देशमात्रं वाऽशिष्येणैकवाक्यत्वात् ॥ ३. ७. १४ ॥

( सिद्धान्तः )

अयमभिप्रायः—भवेदेवं यदि "अर्द्धं बहिर्वेदि" इत्यस्यानुवादकत्वं कथञ्चिदुपपद्येत । तथाहि—यदि यूपमानं नित्यवदन्तर्वेदि प्रसक्तं भवेत् । अर्द्धस्यान्तर्वेद्यां प्राप्तत्वात्पुनर्वचनं परिसंख्यार्थं भवेदिति नियमेन तदर्धमानस्य बहिर्वेद्यामेव प्राप्तत्वात्तदर्द्धं बहिर्वे-

द्यायुपपद्यत एवेति नित्यानुवादः। अथ यूपमानं नित्यमेव बहिर्वेदि प्रसक्तं भवेत्तदाप्यर्द्धस्यान्तर्वेदिविधानेऽर्द्धान्तरस्य बहिरेव स्थितत्वाद्भवत्येव नित्यानुवादः। न चैतदुभयमप्यस्ति। अनियमेनान्तर्वा यूपमानेऽर्द्धमन्तर्वेदीत्यर्द्धस्यान्तर्वेदिमाने विहितेऽर्द्धान्तरस्याप्यनियतदेशत्वेन वेद्यामन्तर्वा बहिर्वा मानप्रसक्तौ बहिरर्द्धमानस्य नित्यत्वानुपपत्तिः। अथार्द्धं बहिर्वेदीत्येतदपि विधीयते, तदा वाक्यभेदः। न चार्द्धमेवान्तर्वेदीति विध्यर्थः सम्भवति। यतो विधीयमानं हि नियम्यते, नानूद्यमानं विधीयते। तेन तादृशमवधारणमर्द्धमन्र्वेद्यामर्द्धं बहिर्वेद्यामिति। अतोऽन्तर्बहिर्वेदीत्यस्य नित्यानुवादत्वासम्भवादन्तर्वेदिबहिर्वेदिशब्दाभ्यां लक्षितो देश एव यूपमानाङ्गत्वेन विधीयते, न वेदिरिति। तस्माद्वाचनिकयूपाङ्गत्वमिति सिद्धम्।

प्रयोजनम्—पूर्वपक्षे वेदेर्यूपाङ्गत्वादङ्गप्रधानार्थता नास्तीति। अन्तर्वेद्यां शुचीनाञ्च विनियोगोऽप्यत्र कारणम्। (१) न निसर्गपदादीनां विनियुज्येत वा न वेति। सिद्धान्ते न वेद्यामङ्गप्रधानहवींष्यासादयितव्यानि। सिद्धान्ते तु वेदेर्यूपाङ्गत्वाभावात् 'चिकीर्षया च संयोगात्' इत्यनेन न्यायेन वेद्यामङ्गप्रधानहवींष्यासादयितव्यानि। सूत्रन्तु—देश एवान्तर्वेदिलक्षितो विधीयते न वेदिः। अशिष्येण विध्यनुवादासम्भवाद्वाक्येनार्द्धं बहिर्वेदीत्यनेनैकवाक्यत्वादिति॥

इति षष्ठं यूपावटदेशलक्षणाधिकरणम्॥ ६॥

अथ सप्तमं हविर्धानस्य सामिधेन्यनङ्गाताधिकरणम्

सामिधेनीस्तदन्वाहुरिति हविर्धानयोर्वचनात्सामिधेनीनाम् ॥ ३. ७. १५ ॥

( विषयसंशयौ )

ज्योतिष्टोमे श्रूयते—"उत यत्सुन्वन्ति सामिधेनीस्तदन्वाहुः" इति । तत्र सन्देहः—किं सामिधेनीनामङ्गभावेन हविर्द्धानविशिष्टाः सामिधेन्योऽनुवक्तव्याः ? उत हविर्द्धानेनामूषामनूच्यमानानां देशो लक्ष्यत इति ।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षः—यत्सुन्वन्ति सामिधेनीस्तन्वाहुरित्यस्य वाक्यस्यायमर्थः—यस्मिन् हविर्द्धाने होमाभिषवं कुर्वन्ति तस्मिन् हविर्द्धाने सामिधेनीरनुवदन्तीति । अत्र च सामिधेन्यर्थवचनाधिकरणत्वेन हविर्द्धानविशेषविभागाद्वाचनिकमेव हविर्द्धानविशेषस्य सामिधेन्यनुवचनाङ्गत्वं प्रतीयते । न पूर्वविध्यनुवादत्वेन शेषो मन्त्रान्तरं तत्र श्रूयते । येन श्रुतिवृत्तिं परित्यज्य देशलक्षणार्थता स्यात् । हविर्द्धानमात्रस्यैव श्रवणात् । न च हविर्द्धानद्वारेण विनियुक्तत्वात्सामिधेन्यनुवचनेऽपि विनियोगे विरोधः, "पुरोडाशकपालेन तुषानुपवपति" इतिवदुपपत्तेः । तस्माल्लक्षणाकारणाभावात्सामिधेनीस्तदर्थाङ्गरीतिवचनेन हविर्द्धान एव सामिधेन्यः, न

हविर्द्धानमात्रस्य सामिधेन्यनुवचनसम्बन्धो वक्तव्यो भवेत्। तदा कस्मिन् हविर्द्धान इति विशेषापेक्षायां यस्मिन् हविर्द्धाने सोमाभिषवं करोति तस्मिन् हविर्द्धाने सामिधेन्यनुवचनं कर्त्तव्यमित्युपपद्यते विशेषविधानञ्च। न चात्र सामान्यसम्बन्धोऽवगतपूर्वः। तेन सामान्यसम्बन्धोऽपि विधातव्यः विशेषसम्बन्धश्चेति वाक्यं भिद्येत। न च विशेषसम्बन्धादेव सामान्यसम्बन्धोऽप्याक्षेपात्सेत्स्यतीति वाच्यम्। अन्यथैव वचनोपपत्तेरर्थापत्तिपरिक्षयात्। तथाहि—ज्योतिष्टोमे दैक्षपशुयागे दीक्षणीयायाञ्च दर्शपूर्णमासधर्मातिदेशात्सामिधेन्यनुवचनप्राप्तिः। तस्य च "अपरेण वेदिम्" इति प्रकृतावेव श्रवणाद्देशोपदेशोऽप्यतिदेशादेव। ज्योतिष्टोमे हविर्धानद्वयमप्यतिदेशात्। अपरदेशोऽपि तथा दक्षिणोत्तरहविर्द्धानसन्निपा- ..................तत्र सामान्येनोपदेशसम्बन्धप्राप्तौ विशेषापेक्षायां यस्मिन्नित्यनेन सन्निहित एवापरदेशो लक्षितसामिधेन्यनुवचनाङ्गत्वेन विधीयते। किञ्च हविर्द्धानसामिधेन्यनुवचनयोः कृतार्थत्वेनोपरिनिराकाङ्क्षत्वाद्देशोपलक्षणत्वमेव युक्तम्। तथाहि—हविर्द्धानं तावत्सोमादिहविर्द्धारणेनैव कृतार्थत्वादनुवचनमपि नाङ्गत्वेन विधीयते। अग्निसमिन्धनप्रकाशनेनैव कृतार्थमिति नान्यगामित्वापेक्षेति देशलक्षणार्थत्वमेव युक्तम्। न तु वाचनिकं हविर्द्धानस्य सामिधेन्यनुवचनाङ्गत्वमिति सिद्धम्।

प्रयोजनम्—पूर्वपक्षे हविर्द्धान एव सामिधेन्योऽनुवक्तव्याः। सिद्धान्ते तु तत्समीपदेश इति। सूत्रन्तु—समीपदेशमात्र एवानुवचनाङ्गं हविर्द्धानम्। यतस्तस्य प्रत्यक्षं स्फुटमेव नैराकाङ्क्षापादकं सोमधारणमेव प्रयोजनभूतमिति॥

इति सप्तमं हविर्धानस्य सामिधेन्यनङ्गताधिकरणम्॥७॥

अथाष्टमं यजमानभिन्नकर्त्रन्तरसद्भावाधिकरणम्

शास्त्रफलं प्रयोक्तरि तल्लक्षणत्वात्तस्मात्स्वयं प्रयोगे स्यात्

॥ ३. ७ १८. ॥

( विषयसंशयसङ्गतमः )

इह कर्माण्युदाहरणम्—"अग्निहोत्रं जुहुयात्स्वर्गकामः, दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत, ज्योतिष्टोमेन स्वर्गकामो यजेत" इति। तत्र संशयः—किमेतानि कर्माणि स्वयमनुष्ठातव्यानि ? उत स्वर्गकामः स्वयं जुहूयात् शेषमन्यः स्वयं वा ? उत शेषमन्य एवेति। क्रमस्य श्रुत्यादिभिः प्रकरणान्तैः सह विरोधाविरोधौ विचारितौ। इदानीं समाख्यायाः श्रुत्यादिभिरेव क्रमान्तैः सह विरोधाविरोधौ निरूप्येते।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षः—"दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इत्यधिकारविधिरियम् । कर्मजन्यफलभागित्वमधिकारः । स च प्रकरणबलेन साङ्गप्रधाने प्रयोगकर्तृत्वावगमात्तत्कालीन इत्यधिकारविधिवाक्यस्याख्याताभिहितस्य साङ्गप्रधानकर्तुरेवाक्षिप्तस्य फलान्वयः प्रतीयते । तेन यदि किञ्चिदप्यङ्गं यजमानः स्वयं न कुर्यात् तदाङ्गप्रधानकर्तृत्वाभावात्फलमेवास्य न स्यात् । तस्मात्साङ्गमेव प्रधानं यजमानेन कर्त्तव्यमिति । होत्रादिसमाख्या चैकस्यैव यजमानस्य तत्तद्धोत्रादिकर्मसम्बन्धनिबन्धना भविष्यति । होत्रादिसमाख्या च न साक्षात्कर्मणां, किन्त्वनुष्ठितानामेव तद्द्वारेण कर्मणामितरेतराश्रयदोषवरणभरणयोश्चादृष्टार्थत्वमेव (?) अतः शास्त्रैकप्रमाणत्वात्फलस्य शास्त्रगम्यं फलं साङ्गप्रधानप्रयोक्तरि यजमान एव यस्माद्भवति, तस्मात्साङ्गप्रयोगे यजमानः स्वयमेव च कर्त्ता स्यादिति कर्त्रन्तराणामभावान्न समाख्या विनियोजिकेति पूर्वप्रमाणैः सह तत्समाख्याविरोधाविरोधविचारोऽनर्थक एवेति ।

अथ वा "स्वर्गकामो यजेत" इत्यत्र धातुः प्रधानकर्ममात्रवाची । ततः परवर्त्तिना च प्रत्ययेन प्रधानकर्त्तुरेवोपादानात्तस्यैव स्वर्गफलं नियम्यते । तेन फलं प्रधानकर्त्तुरेव । न च

कर्तृत्वं प्रधानकर्तुरेवेति नियमः। शक्तौ स्वयमेव करोत्यशक्तावन्यद्वारेणापि। तस्माद्देवतोद्देशत्यागरूपस्य यागस्य प्रधानत्वात्तन्मात्र एव फलार्थी यजमानः कर्ता शेषभूताङ्गकारिषु न प्रधानस्य यः कर्ता स एवाङ्गे स्यात्तस्मादन्यो वेत्यनियमः। तथाचोक्तम्— 'उत्सर्गे तु प्रधानत्वाच्छेषकारी प्रधानस्य तस्मादन्यः स्वयं वा स्यात्' ( जै. सू., ३. ७. १९. ) इति। नियमेन कर्त्रन्तराणामभावात् न समाख्या विनियोजिकेत्यत्रापि पक्षे व्यर्थ एव समाख्याविरोधाविरोधविचार इति। एवं प्राप्तेऽभिधीयते—

अन्यो वा स्यात्परिक्रयाम्नानाद्विप्रतिषेधात्प्रत्यगात्मनि ॥ ३. ७. २० ॥

( सिद्धान्तः )

अयमभिप्रायः—भवेदेवं यदि "ऋत्विजो वृणीते" इति विधानं "द्वादशशतं दक्षिणा" इत्यादिभिरणविधानं च न स्यात्। न चैतद्दृष्टार्थं, तत्कर्मसंयुक्तानामृत्विजां त्वपेक्षितानतीनां सम्बन्धित्वेन श्रवणात्। न च दृष्टे कर्मकारित्वे सम्भवत्यदृष्टं कल्पयितुमुचितम्। तेनर्त्विक्परिक्रयार्थोऽयं वरणभरणादिः। यदि तु यजमानः स्वयमेवाङ्गान्यपि कुर्यात्, तदा परिक्रयस्यात्मन्यसम्भवात्परिक्रयविधिबाधः स्यात्। अथान्योऽपि पक्षे कुर्यात्, तथापि नित्यवदाम्नानं विरुध्यात्। नित्यपरिक्रयस्य नित्यतां

कर्त्तुमवश्यं परिक्रयार्हाणि कर्त्रन्तराणि उपादातव्यानि। अतो यजमानस्य प्रधानहविरुत्सर्गे साक्षात्कर्तृत्वमङ्गेषु तु प्रयुक्तिद्वारेण। तेनायमधिकारवाक्यगताख्याताभिहिता भावना गृहीतकर्तृपरिक्रये प्रयोगे फलार्थिकर्तृत्वमाकाङ्क्षन्ती साक्षात्प्रयुक्तिद्वारेण यथोक्तमेव कर्तृत्वमाक्षिपतीति न विरोधः। एवमात्मनेपदस्यापि परिक्रयवर्ती भावनामाश्रित्यास्येदृशेनैव कर्तृत्वेन फलोपभोगः समानकर्तृक इति स्वर्गकामसामानाधिकरण्यं विरोत्स्यत इति न किञ्चिदनुपपन्नम्।

प्रयोजनम्—पक्षोक्तम्। सूत्रन्तु—अङ्गेष्वन्य एव कर्त्ता स्यात् क्रयविधानात्। तस्य परिक्रयस्य प्रत्यगात्मनि विरोधादिति॥

इत्यष्टमं यजमानभिन्नकर्त्रन्तरप्रतिपादनाधिकरणम्॥ ८॥

अथ नवममृत्विक्संख्यानियमाधिकरणम्

तत्रार्थात्कर्तृपरिमाणं स्यादनियमोऽविशेषात्॥३.७.२१॥

( संशयसङ्गती )

अत्र भाष्यकारेण व्यक्तत्वात्सन्देहो न प्रदर्शितः। तेनायमेवात्र सन्देहः—किमनियमेनर्त्विजः क्रेतव्याः? उत नियमेन

षोडशैवेति । यजमानव्यतिरिक्ता अन्येऽपि क्रयोपात्ताः कर्त्तारो यतस्सन्ति ततस्तेषां परिमाणमिदानीं प्रसङ्गान्निरूप्यते ।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षः—परिक्रयविध्यर्थवत्त्वाय खलु कर्त्रन्तर-प्रवेशः । तदर्थवत्त्वञ्चैकस्य द्वयोर्वोपादानेन भवतीति नियमेन षोडशोपादानं न सम्भवति । अथ "स्वर्गकामो यजेत" इत्यत्र सामानाधिकरण्यादात्मनेपदार्थकृत्स्नप्रयोगफलार्थिनः कर्त्तृत्वेऽवगते यावन्मात्रमबाधित्वा परिक्रयविधेरशक्यसमाधानं तावन्मात्रमेव बाधितव्यम् । यजमानव्यतिरिक्तैककर्तृप्रवेशेनैव परिक्रयविधिरुप-पन्न इत्येक एवर्त्विक् परिक्रेतव्यः । तेन परिक्रयविधिसामर्थ्या-त्कर्तृपरिमाणमनियतम् । एको द्वौ त्रयो वाङ्गेषु कर्त्तारः, एक एव वा परिक्रेतव्य इति यथावार्त्तिकमेवेति । एवं प्राप्तेऽभिधीयते—

अपि वा श्रुतिभेदात्प्रतिनामधेयं स्युः ॥ ३. ७. २२ ॥

( सिद्धान्तः )

अयमभिप्रायः—भवेदेवं यद्यत्राङ्गानि भिन्नकर्माणि श्रूयेरन् । तथाहि—"तान् पुरोऽध्वर्युर्विभजति, प्रतिप्रस्थाता मन्थिनं जुहोति, नेष्टा पत्नीमभ्युदानयति" इत्यादिवाक्यैस्तत्तदङ्गसम्बन्धित्वेन षोड-शैव कर्त्तारो ज्योतिष्टोमे श्रूयन्ते । प्रयोगविधिना च सकर्तृकाण्ये-वाङ्गत्वेन गृहीतानि । तेषामङ्गानां तत्तत्कर्तृसम्बन्धार्थं तावन्त एव

कर्त्तार उपादातव्याः यावत्समाख्यं कर्तृभेदः। प्रधानैकत्वे कर्तुस्तत्र कर्मसम्बन्ध एवेति बाध एवाध्वर्य्वादिसमाख्याभेदो भविष्यति, किं कर्तृभेदाभ्युपगमेन ? तदुक्तम्—'एकस्य कर्मभेदादिति चेत्' इति। उच्यते—यदि कर्मानुष्ठानवेलायां तदुत्तरकालं वा समाख्याः श्रुयेरन्। तथाच लावकादिसमाख्यावदेकस्मिन्नपि भवेयुः प्रागेव तत्तत्कर्मसम्बन्धाद्वरणवेलायामेव प्रयुज्यन्ते। 'अध्वर्युं वृणीत' इत्याद्याम्नानेन वरणानि भिन्नान्येव। पुनः श्रुतेरभ्यासादेव भिन्नानि। तेन यावद्वरणं वाक्यभेदः। न चैकस्यैव पुरुषस्य नानावरणानि भविष्यन्तीति वाच्यम्। यस्मात् दृष्टार्थं वरणमानतिद्वारेण कर्मार्थमुपादानं प्रयोजनम्। न चैकेन वरणेनोपात्तस्य कृतकरत्वात्पुनरुपादानं सम्भवति। ननु लोके नानाकर्मकरणाय एकस्यापि कर्तुः विभिन्नैरुपादानैर्विभिन्नानतिद्वारेण पुनरुपादानं दृश्यत एव। एवमत्रापि भिन्नैर्वरणैर्भिन्नानतिद्वारेणैकस्यापि पुनः पुनरुपादानं भविष्यति। मैवम्; स्यादेवं यदि लोकवदाध्वर्य्वादिकर्मकरणार्थमत्र वरणं भवेत्। किन्तु ज्योतिष्टोमप्रयोगविधिपरिगृहीतस्य वरणस्य "ऋत्विजो वृणीते" इति ऋत्विग्द्वारेण ज्योतिष्टोमार्थत्वम्। अतः कर्मार्थद्वारेण। तत्र ह्येकस्य कर्तुर्वरणेन ज्योतिष्टोमार्थमुपादानं जातमेवेति वरणान्तरेण पुनरुपादानं कर्तव्यमेवेति। किञ्च ऋत्विजामेता

आध्वर्यवादिसंज्ञाः, उत्पत्तिसंयोगात्। तेन यथा 'संज्ञा चोत्पत्तिसंयोगात्' इत्यनेन कर्मणां भेदः तथा कर्तृणामपीति। तदुक्तं सूत्रकृता—'नोत्पत्तौ' इति। तस्मात्समाख्यया षोडशैवर्त्विजो ज्योतिष्टोम उपादातव्या इति सिद्धम्।

प्रयोजनम्—पक्षोक्तम्। सूत्रन्तु—आध्वर्यवादिश्रुतिभेदात्प्रतिनामधेयं भिन्ना एव कर्त्तारो भवेयुरिति॥

इति नवममृत्विक्संख्यानियमाधिकरणम्॥ ९॥

अथ दशमं चमसाध्वर्युभेदाधिकरणम्

चमसाध्वर्यवश्च तैर्व्यपदेशात्॥ ३. ७. २५॥

(विषयसंशयसङ्गतयः)

सन्ति ज्योतिष्टोमे चमसाध्वर्यवः "चमसाध्वर्यून् वृणीते" इति। तेषु सन्देहः—किमेत एवोच्यन्ते? उतैभ्योऽन्ये? इति। इदमनुप्रसङ्गाद्विचार्यते।

(पूर्वपक्षः)

अत्रायं पूर्वपक्षः—'अध्वर्युं वृणीते' इत्यादिष्वाध्वर्यवादिशब्दानां प्राक्प्रसिद्धार्थत्वाद्यावत्समाख्यं भवतु कर्त्तृभेदः। चमसाध्वर्यव इत्यत्राध्वर्युपुरुषाणामेव चमससम्बन्धमात्रातिरेकः,

न तु कर्तृभेदः। वरणञ्च तेषां भेदेन ऋत्विजामाज्ञाकरणार्थं यजमानेन क्रियते, न तु क्रियाज्ञाकरणार्था। तदर्थं पूर्वमेव तेषां वृतत्वात्। तस्मात्षोडशानामेवाऽन्यतमाश्चमसाध्वर्यव इति। एवं प्राप्ते—

(सिद्धान्तः)

अभिधीयते—भवेदेवं यदि तत्रोपादानं भवेत्। तथाहि—"मध्यतः कारिणां चमसाध्वर्यवो होत्रकाणां चमसाध्वर्यवः" इति तेषूपदिश्यन्ते। षोडशसु मध्ये चत्वारो मध्यतः कारिणो वेदनिबन्धनश्च षष्ठ्यन्तव्यपदेशः। तेन दशानामेव सम्बन्धित्वेन व्यपदेशा भवन्ति। तेषां मध्ये प्रतिसम्बन्धिनश्चमसाध्वर्यवः। न चावसित एव षट्चमसाध्वर्यव इति वाच्यम्। दशचमसम्बन्धेन दशत्वस्य वक्ष्यमाणत्वात्।

प्रयोजनम्—पक्षोक्तम्। सूत्रन्तु—चमसाध्वर्यवोऽप्यन्य एव दशभिश्चमसैः सम्बन्धित्वेन व्यपदेशादिति॥

इति दशमं चमसाध्वर्युभेदाधिकरणम्॥ १०॥

अथैकादशं चमसाध्वर्यूणां बहुत्वाधिकरणम्

उत्पत्तौ तु बहुश्रुतेः ॥ ३. ७. २६ ॥

तेष्वेव सन्देहः—किमनियमः, एको द्वौ बहवः ? उत बहव एवेति । एतदप्यनुप्रसङ्गेन विचार्यते ।

( पूर्वपक्षसिद्धान्तौ )

अत्रायं पूर्वपक्षः—चमसाध्वर्यूणामुद्देश्यत्वादुद्देश्यगतसंख्याया ग्रहैकत्ववदविवक्षितत्वात्संख्यान्तरानपेक्षित्वाद्बहुत्वविवक्षा । इह तु चमसाध्वर्यूणां प्रागनवगतसंख्याकत्वात्संख्यायाश्चावश्यापेक्षणीयत्वाच्छ्रुतत्वेनैव बहुत्वमेव परिगृह्यते । तस्माद्बहव एव चमसाध्वर्यव उपादातव्या इति । अत्र च प्राप्तोद्देश्यविशेषणां विवक्षितमित्येतदेव व्युत्पाद्यत इति वक्तव्यम् । अनन्तराधिकरण एव दशत्वसिद्धेरनर्थकमिदमधिकरणमिति ।

प्रयोजनम्—पक्षोक्तम् । सूत्रन्तु—उत्पत्तौ प्रथमं ज्ञातमेव "चमसाध्वर्यून् वृणीते" इति बहुत्वश्रुतेर्बहव एवेति ॥

इत्येकादशं चमसाध्वर्यूणां बहुत्वाधिकरणम् ॥ ११ ॥

## अथ द्वादशं चमसाध्वर्यूणामियत्ताधिकरणम्

### दशत्वं लिङ्गदर्शनात् ॥ ३. ७. २७ ॥

( विषयसंशयौ )

ज्योतिष्टोमे सन्ति चमसाध्वर्यवः । ते च बहव इत्युक्तम् । कियन्तः पुनस्ते बहवः ? इति सन्देहः । एतदप्यनुप्रसङ्गादेव विचार्यते ।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षः—"चमसाध्वर्यून् वृणीते" इति बहुत्वमात्रं श्रूयते । तच्च 'प्रथमं वा नियम्येत' ( जै. सू. ११. १. ४२ ) इति कपिञ्जलन्यायेन त्रिष्वेव चरितार्थमिति त्रय एव चमसाध्वर्यव इति । एवं प्राप्ते—

( सिद्धान्तः )

अभिधीयते—भवेदेवं यदि दशत्वप्रतिपादकं प्रमाणं न भवेत् । तत्र हि मध्यतःकारिणो होत्रकाश्च ऋत्विजश्चमसाध्वर्यूणां स्वामिन इत्युक्तमेव । तेन प्रतिनियता दशैव चमसाध्वर्यवः, तथा चमसाध्वर्यूणां व्यापारविषयाश्च दशैव चमसाः । न च त्रयाणां दश स्वामिनः सम्भवन्ति । न चैकदा त्रयाणां व्यापारविषयाश्च दश चमसाः सम्भवन्ति । तथा ज्योतिष्टोमविकारे दशपेययागे दश चमसाध्वर्यवः "दश दशैकैकं चमसमनुप्रसर्पन्ति" इति । स चानु-

वादः, प्रकृतौ चमसाध्वर्यूणां दशत्वे सति सम्भवेत्। अनुवाद-लिङ्गदर्शनादपि दशैव चमसाध्वर्यव इति सिद्धम्।

प्रयोजनम्—पत्तोक्तम्। सूत्रन्तु—दश चमसाध्वर्यवो न तु बहुत्वं त्रित्वे, दशत्वमेव चमसाध्वर्यूणामिति लिङ्गदर्शनादिति॥

इति द्वादशं चमसाध्वर्यूणामियत्ताधिकरणम्॥ १२॥

अथ त्रयोदशं शमितुरपृथक्त्वाधिकरणम्

शमिता च शब्दभेदात्॥ ३. ७. २८॥

( विषयसंशयसङ्गतयः )

अस्ति शमिता "शमिता पशुं नयति" इति। स किं कीर्त्ति-तानामन्यतमः? उतान्यस्तेभ्यः? इति। इदानीं पूर्वापवादः क्रियते।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षः—औत्पत्तिको हि संज्ञपने संज्ञिभेदः प्रकृतप्रवेशसम्भवेन बलवता क्वचिदपोह्येतापि। यथा दाक्षायण-सङ्क्रमयज्ञादौ। न चेह प्रकृतप्रवेशः सम्भवति। एवं हि श्रूयते—"क्रोमा चार्द्धं वैकर्तनञ्च शमितुः तद्ब्राह्मणाय दद्यात्, यद्यब्राह्मणः स्यात्" इति। न च ऋत्विजां मध्ये कश्चिदब्राह्मणोऽस्ति यथा-वत्पशोर्वपाद्युद्धरणरूपकार्यकर्तृत्वेन शमितेत्युच्यते। षोडशानामेव-

र्त्विजां ब्राह्मणत्वनियमात् शमितेति संज्ञाभेदात् प्रकृतेभ्योऽन्य एव पशोः शमितेति । एवं प्राप्तेऽभिधीयते—

प्रकरणाद्वोत्पत्त्यसंयोगात् ॥३. ७. २९ ॥

( सिद्धान्तः )

अयमभिप्रायः—भवेदेवं यदीयमुत्पत्तियोगिनी संज्ञा भवेत् । यदि "चमसाध्वर्यून् वृणीते" इतिवत् 'शमितारं वृणीते' इति श्रूयेत, तदा वरणभेदे सति वृतस्य वरणासम्भवादुत्पत्तावेव भिन्नकर्तृसम्बन्धिनी (?) देशात् । अथवा होत्रकाणां चमसाध्वर्येव इतिवद्व्यपदेशभेदो भवेत् । न चैवमस्ति । किन्तर्हि ? सिद्धवत् "शमिता पशुमुपनयति" इति श्रूयते । शक्नोति चाध्वर्युवदेव विहितत्वेन शमनयोगाच्छमितृशब्दो वर्त्तितुम् । न च "शमिता पशुं गृह्णाति" इति श्रवणादध्वर्योश्च व्यापारान्तरनिविष्टत्वात्कर्त्तृभेद इति वाच्यम् । यतोऽध्वर्योर्व्यापृतत्वेनापि तत्प्रतिपुरुषाणां कर्त्तृत्वं सम्भवति, "इतरमन्यस्तेषां यतो विशेषः स्यात्" इति न्यायात् । यत्तु "यद्यब्राह्मणः स्यात्" इति लिङ्गदर्शनं, तदयुक्तम् ; प्रापकप्रमाणाभावे सति यजमानविषयत्वेन तदुपपत्तेः त्रैवर्णिकस्याधिकाराद-ब्राह्मणोऽपि भवत्येव । तेनायमर्थः—यद्यब्राह्मणो यजमानः स्यात्, तदा होमार्थं ब्राह्मणाय दद्यादिति । तस्मात्प्रकृतानामेवान्यतमः शमितेति सिद्धम् ।

प्रयोजनम्—पक्षोक्तम् । सूत्रन्तु—प्रकृतानामेवान्यतमः शमिता । प्रकरणाच्छमितृसंज्ञाया अध्वर्य्वादिसंज्ञानामिवोत्पत्तिसंयोगाभावादिति ॥

इति त्रयोदशं शमितुरपृथक्त्वाधिकरणम् ॥ १३ ॥

अथ चतुर्दशमुपगातृणामपृथक्त्वाधिकरणम्

उपगाश्च लिङ्गदर्शनात् ॥ ३. ७. ३० ॥

( विषयसंशयौ )

ज्योतिष्टोमे—सन्त्युपगा नामर्त्विजः । ते किमध्वर्यादिभ्योऽन्ये ? उतान्यतम इति । पूर्वन्याय एवाधिकाशङ्कानिराकरणार्थं चकारेणातिदिश्यते ।

( पूर्वपक्षः )

अयं पूर्वपक्षः—भवतु होत्रकाणां चमसाध्वर्यव इतिवन्मुख्यशमितेति प्रकृतसम्बन्धित्वेन व्यपदेशाभावाच्छमितुः प्रकृतेष्वेवान्तर्भावः । इह तु उप समीपे गायन्तीत्युपगाः प्रकृतप्रतिसम्बन्ध्यपेक्षाः । ततश्चमसाध्वर्युवत्तेनोपदेशभेदात्प्रकृतेभ्योऽन्य एवोपगा इति । एवं प्राप्ते—

( सिद्धान्तः )

अभिधीयते—भवेदेवं यद्युपगाः प्रकृतेभ्योऽन्यत्वमन्तरेण नोपपद्येरन् । गायन्तमृत्विजमुपगायन्तीत्युपगाः । अयञ्च व्यपदेशः

प्रकृतमपि गायन्तमृत्विजमित्युपपद्यते । तथा लिङ्गदर्शनमपि विनिगमनाप्रमाणम् "नाध्वर्युरुपगायेत्" इति प्रकृतानामुपगान-प्रसक्तावध्वर्योर्निषेध उपपद्यते । अतः प्रकृतानामेवान्यतम उपगा इति सिद्धम् ।

प्रयोजनम्—पक्षोक्तम् । सूत्रन्तु—यथा शमिता तथोपगाः प्रकृतानामेवान्यतमे, अध्वर्युप्रतिषेधरूपलिङ्गदर्शनात् ॥

इति चतुर्दशमुपगातॄणामपृथक्त्वाधिकरणम् ॥ १४ ॥

अथ पञ्चदशं सोमविक्रेतुः पृथक्त्वाधिकरणम्

विक्रयी त्वन्यः कर्मणोऽचोदितत्वात् ॥ ३. ७. ३१ ॥

( विषयसंशयौ )

अस्ति सोमविक्रयी । तत्र सन्देहः—किमध्वर्य्वादीनाम-न्यतमः ? उतैभ्योऽन्य एवेति । पूर्वापवादेनायं विचारः ।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षः—यद्यपि सोमविक्रयी साक्षात्तदङ्गत्वेनो-विहितः । न च विक्रयं विना क्रयो भवति । तेन क्रयविधिनैवार्था-क्षिप्तो विक्रयविधिरिति सोऽपि कर्माङ्गकर्त्ता । स च प्रकृत एवोपात्त इति प्रकृतानामेवान्यतमः सोमविक्रयीति । एवं प्राप्ते—

( सिद्धान्तः )

अभिधीयते—भवेदेवं यदि क्रयविधिर्विक्रयविधिमपेक्षेत । स तु रागप्राप्तलोकसिद्धविक्रयप्राप्त्यैवोपपद्यते । न तु तद्विधिमप्याक्षिपति । तेन विक्रयस्यानङ्गत्वेन प्रकृतर्त्विक्कर्तृकत्वमिति भवति प्रकृतेभ्योऽन्य एव सोमविक्रयीति सिद्धम् ।

प्रयोजनम्—पक्षोक्तम् । सूत्रन्तु—सोमविक्रयी पुनः प्रकृतेभ्योऽन्य एव विक्रयस्य कर्माङ्गत्वेनाचोदितत्वादिति ॥

इति पञ्चदशं सोमविक्रेतुः पृथक्त्वाधिकरणम् ॥१५॥

अथ षोडशं सर्वेषामृत्विक्छब्दावाचिताधिकरणम्

कर्मकार्यात्सर्वेषामृत्विक्त्वमविशेषात् ॥ ३. ७. ३२ ॥

( विषयसंशयसङ्गतयः )

य एते पुरुषा ज्योतिष्टोमस्य श्रूयन्ते, ते किं सर्व एवर्त्विजः ? उत केचिदेषामिति । बहवस्तावज्ज्योतिष्टोमस्य कर्त्तार इति निरूपितम् । इदानीं किं ते सर्व एवर्त्विजः ? उत केचिदेवेति प्रसङ्गान्निरूप्यते ।

( पूर्वपक्षः )

पूर्वपक्षस्तु—यौगिकोऽयमृत्विक्छब्द ऋतुयजनयोगनिमित्तः ।

प्रयोजनम्—पूर्वपक्षे सर्वेषामेवर्त्विक्त्वसम्बन्धः। सिद्धान्ते तु सप्तदशानामेवेति। सूत्रन्तु—न सर्वेषां, किन्तु स्वामिसप्तदशानामेव। परिसंख्यानात्परिगणनादिति॥

इति षोडशं सर्वेषामृत्विच्छब्दावाचिताधिकरणम्॥ १६॥

अथ सप्तदशमृत्विङ्नियमाधिकरणम्

नियमस्तु दक्षिणाभिः श्रुतिसंयोगात्॥ ३. ७. ३६॥

सप्तदशर्त्विज इति समधिगतम्। कथं सप्तदशेतीदानीमनुप्रसङ्गान्निरूप्यते।

( पूर्वपक्षः )

पूर्वपक्षस्तु—सौम्यस्याध्वरस्य सप्तदशर्त्विजस्तथापि प्रकृतेषु मध्ये के ते सप्तदशेति निर्द्धारणकारणाभावादनियमेन केचिदिति। एवं प्राप्ते—

( सिद्धान्तः )

अभिधीयते—भवेदेवं यद्यत्र निर्द्धारणकारणाभावः स्यात्। तथाहि—"ऋत्विग्भ्यो ददाति" इति निर्दिश्य दक्षिणादानक्रमपरे वाक्ये श्रूयते—"प्रथममग्नीधे ददाति" इति। ततो ब्रह्मणे ततोऽमुष्मै चेति षोडशैव दक्षिणासंयोगेन परिपाठिताः। तेन य एवाग्नीदा-

प्रयोजनम्—पूर्वपक्षे सर्वेषामेवर्त्विक्त्वसम्बन्धः। सिद्धान्ते तु सप्तदशानामेवेति। सूत्रन्तु—न सर्वेषां, किन्तु स्वामिसप्तदशानामेव। परिसंख्यानात्परिगणनादिति॥

इति षोडशं सर्वेषामृत्विच्छब्दावाचिताधिकरणम्॥ १६॥

अथ सप्तदशमृत्विङ्नियमाधिकरणम्

नियमस्तु दक्षिणाभिः श्रुतिसंयोगात्॥ ३. ७. ३६॥

सप्तदशर्त्विज इति समधिगतम्। कथं सप्तदशेतीदानीमनुप्रसङ्गन्निरूप्यते।

( पूर्वपक्षः )

पूर्वपक्षस्तु—सौम्यस्याध्वरस्य सप्तदशर्त्विजस्तथापि प्रकृतेषु मध्ये के ते सप्तदशेति निर्द्धारणकारणाभावादनियमेन केचिदिति। एवं प्राप्ते—

( सिद्धान्तः )

अभिधीयते—भवेदेवं यद्यत्र निर्द्धारणकारणाभावः स्यात्। तथाहि—"ऋत्विग्भ्यो ददाति" इति निर्दिश्य दक्षिणादानक्रमपरे वाक्ये श्रूयते—"प्रथममग्नीधे ददाति" इति। ततो ब्रह्मणे ततोऽमुष्मै चेति षोडशैव दक्षिणासंयोगेन परिपाठिताः। तेन य एवाग्नीदा-

दयः त एवर्त्विजः प्राक्प्रसिद्धदक्षिणादानक्रमपरे वाक्ये वेदेनाभ्यनुज्ञानादिति भवति निर्द्धारणम् । तथा सत्रे 'ये यजमानास्त ऋत्विज' इति यजमानर्त्विक्छब्दयोः समानविषययोर्निर्दिश्य दीक्षाक्रमपरे वाक्ये यजमानसंस्कारदीक्षा ब्रह्मादिषु दर्शयति । एतत्तदैवोपपत्स्यते, यदि ब्रह्मादय ऋत्विज इति । तथा यौगिकोऽयमृत्विक्छब्दः । यजनयोगश्चमसाध्वर्युसाधारणः । अतः कथं समाने प्रवृत्तिनिमित्ते न चमसाध्वर्यव ऋत्विज इति । उच्यते—प्रत्येकशश्शक्तिवैलक्षण्येनैव व्यवस्थोपपत्तेः । तथाहि—गच्छतीत्यत्र प्रत्ययः समानपदोपात्तधात्वर्थविशेषितामेव भावनामभिधत्ते । पचतीत्यत्र तु तण्डुलाश्रयपाकरूपधात्वर्थविशेषितामेव भावनामभिधत्ते । तथा ऋतुयाजिपदपरत्वेनाक्षिप्तप्रत्ययः ब्रह्माद्यव्यभिचारियष्टव्यार्थविशेषे कर्त्तरि साधुरिति प्रयोगदर्शननियमादवधार्यते । तेन यौगिकोऽप्ययं सप्तदशत्वेन नियत इति ।

अथवा योगरूढोऽयमृत्विक्छब्दः ये ऋतुयजनसमर्था यजमानार्थकारिणः, त एवर्त्विजः । तेष्वेव ऋत्विक्जातेषु ऋत्विक्छब्दप्रसिद्धेः । ऋतुयजनसमर्थाश्च ब्रह्मादय एव । तेषामेव स्मृतितो यजिनियमात् । न चैवं सति चमसाध्वर्यवेष्वपि प्रसङ्गः । तेषां सत्यप्यवयवार्थत्वे ऋत्विगर्थकर्मकारित्वेन वृतानां यजमानार्थकर्मकरस्वरूपसमुदायार्थाभावात् । न चैवं सति वक्ष्य-

माणयजनऋत्विक्त्वानुपपत्तिः । तस्यापि स्वार्थमेव ऋतुयजनक-रणात् । येषान्तु वरणोत्पाद्यमृत्विक्त्वं, तेषामेव च ऋतौ यजन-नियमविधानान्न रूढं तत्त्वणादिवदवयवार्थवशेन योगापन्नानामृ-त्विजामिति वरणाद्युत्पाद्यमलौकिकमृत्विक्त्वमाश्रितं भविष्यति यथावस्थितवचनव्यक्तिविपर्यासेन वचनव्यक्तित्रर्णनं भविष्यति । तस्माद्ब्रह्मादय एव सप्तदशर्त्विजो न चमसाध्वर्यव इति सिद्धम् ।

प्रयोजनम्—पूर्वपक्षे येषु केषुचित्सप्तदशर्त्विक्षु कर्मसम्बन्धः। सिद्धान्ते तु ब्रह्मादिष्वेवेति । सूत्रन्तु—ब्रह्मादीनामेवर्त्विक्त्व-नियमः । तेषामेवाहत्य दीक्षादक्षिणासम्बन्धादिति ॥

इति सप्तदशमृत्विङ्नियमाधिकरणम् ॥ १७ ॥

## अथाष्टादशं यजमानसप्तदशत्वाधिकरणम्

स्वामिसप्तदशाः कर्मसामान्यात् ॥ ३. ७. २८ ॥

( संशयः )

एतदुक्तं सप्तदशर्त्विज इति । ते च ब्रह्मादयः। तत्र सन्देहः—किं तेषां सदस्यः सप्तदशः ? उत गृहपतिरिति । इदमप्यनुप्रसङ्गादेव निरूप्यते ।

( पूर्वपक्षः )

अयं पूर्वपक्षः—ब्रह्मादिषोडशातिरिक्ताश्चमसाध्वर्य्युसदस्ययजमानाः सन्ति। तत्र न तावच्चमसाध्वर्यूणां मध्ये कश्चिदन्यतमः। तेषां बहुत्वेनान्यतमनिर्द्धारणकारणाभावात्। सदस्ययजमानयोस्तु मध्ये परार्थकर्मपरत्वसामान्यात्समर्थप्रवृत्तित्वात्सदस्य एव सप्तदश इति। न चास्य ऋतुयजनकर्त्तृत्वं नास्ति। मन्त्रावेक्षणेनैव कर्त्तृत्वात्। तेन सदस्यसप्तदशा एवर्त्विज इति। एवं प्राप्ते—

( सिद्धान्तः )

अभिधीयते—भवेदेवं यदि सदस्यस्य ऋतुयजनकर्त्तृत्वं भवेत्। न चावेक्षणं नामाङ्गप्रधानयोर्मध्ये कश्चित्पदार्थो यज्ञे वृतोऽस्ति, येन कर्त्तृत्वं भवेत्। नापि ब्रह्मादीनामिव दीक्षा दक्षिणयोर्वास्य सङ्कीर्त्तनमस्ति। किन्त्ववेक्षणमात्रमस्यास्ति। न चैतावता कर्तृत्वमस्ति। चमसाध्वर्युष्वेव व्यभिचारात्। यजमानस्य तु यजनं तावदस्ति। तथा दीक्षावाक्येषु "अध्वर्युर्गृहपतिं दीक्षयित्वा" इत्यत्र सङ्कीर्तनमस्ति। दक्षिणावाक्ये त्वसङ्कीर्तनं स्वार्थे कर्मणि दक्षिणाया अभावादेवोपपन्नं नर्त्विक्त्वं व्यावर्तयितुमलम्। यजमानार्थयजनकर्तृत्वं स्वयमेव यजमानत्वादस्त्येवेति पूर्वाधिकरण एवोक्तम्। तेन यजमानसप्तदशा एवर्त्विज इति सिद्धम्।

अत्र भाष्यकारेण सिद्धान्तहेतुतया ब्रह्मातिरिक्तसदस्यो नास्तीत्युक्तम्, न तत्तथादर्तव्यम्। "सदस्यं वृणीते" इत्युत्पत्तिशिष्टवरणसम्बन्धादेवाध्वर्य्वादिवत्सदस्यस्यापि भेदसिद्धेः। तदुक्तम्-

ऋत्विक्त्वेन नैवेह सदस्यस्य निराक्रिया।
चमसाध्वर्युवत्त्वेष नर्त्विगित्यभिधीयते॥ इति।

(तं. वा., पृ. ११०२)

प्रयोजनम्—पूर्वपक्षे सदस्यस्याप्यृत्विग्धर्माः कर्तव्याः। सिद्धान्ते तु नेति। सूत्रन्तु—स्वामिसप्तदशा ऋत्विजो यजमानकर्मकरणसामान्यादिति॥

इत्यष्टादशं यजमानसप्तदशत्वाधिकरणम् ॥१८॥

अथैकोनविंशमृत्विजां नियतपदार्थकर्तृत्वाधिकरणम्

ते सर्वार्थाः प्रयुक्तत्वादग्नयश्च स्वकालत्वात्॥३.७.२१॥

(संशयसङ्गती)

स्वामिसप्तदशा ज्योतिष्टोमस्यर्त्विजः समधिगताः। अथेदानीं सन्दिह्यते—किं सर्वं पुरुषकार्यं तैः कार्यम्, अग्निभिश्च गार्हपत्यादिभिः सर्वाग्निकार्यम्? उत काचिद्व्यवस्थेति। अत्र यद्यपि विचारद्वयं पूर्वपक्षसूत्रमिदमभिप्रेत्य भाष्यकारेण न विवेचितम्। स्वकालत्वादित्यस्य पूर्वपक्षे हेतुत्वासम्भवात्सिद्धान्तान्तरानभिधानात्

पूर्वपक्षेऽभिमतविचारसिद्धमुत्तरसूत्रमिति विवेक्तव्यम् । तत्रोत्पाद्यानुभूतं कर्तृभेदप्रसङ्गं प्रतिपाद्येदानीं प्रकृतसमाख्यायाः श्रुत्यादिभिः सह विरोधाविरोधविचारः क्रियते । अत्र यद्यपि भाष्यकारेण सर्वं पुरुषकार्यं सर्वैः कर्तव्यमित्यविशेषेणोक्तम्, तथापि "पुराध्वर्युर्विभजति" इति "मैत्रावरुणं प्रेष्यति चान्वाह" इत्यादौ वाक्य एव कर्तृविशेषसम्बन्धः प्रतीयते । तत्र शीघ्रप्रवृत्तेनाप्यवरुद्धविषये समाख्याया विनियोजकत्वासम्भवात्समाख्याविषयकार्यगोचर एवायं विचारः ।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षः— यत्र प्रकरणे वाचनिक एव कर्तृविशेषसम्बन्धस्तत्र कर्तृगताकाङ्क्षाविरहेण लिङ्गप्रकरणयोर्व्यापाराद्वाचनिक्येव कर्तृव्यवस्था । समाख्यायास्तु व्यपदेशमात्रपरत्वम् । व्यपदेशश्चानेककर्तृसम्बन्धिनान्यतरेणापि सम्भवत्येव । (१) यथादिंविषयोर्मतादिककस्यमानेति व्यपदिश्यते । न च प्रकरणेऽपि समाख्या श्रूयते । येनोत्पत्तावेव यथाकथञ्चित्कर्तृसम्बन्धप्रतिपादनेनापि पदार्थेषु नैराकाङ्क्ष्यमापादयेत् । तेन लिङ्गप्रकरणाभ्यां समाख्यां बाधित्वा सर्व एव कर्त्तारः सर्वेष्वेव पदार्थेषु विनियुज्यन्ते । सर्वपदार्थकरणार्थमेव तेषां कर्त्रन्तरेण प्रयुक्तत्वादिति । एवं प्राप्तेऽभिधीयते—

तत्संयोगे तु कर्मणो व्यवस्था स्यात्संयोगस्यार्थवत्त्वात्
॥ ३. ७. ४० ॥

( सिद्धान्तः )

अयमभिप्रायः—भवेदेवं यदि समाख्यायाः कर्तृविशेषसम्बन्धमन्तरेणार्थवत्त्वं भवेत्। तथाहि—वेदप्रयुक्तेयं होत्रादिसमाख्या सान्येनापि कर्त्रन्तरेण नियमेन हौत्रमिति होतृकर्तृत्वेनैव व्यपदिश्यते। लोके तु प्रमाणान्तरप्राप्तिमात्रोपयोगित्वाद्व्यपदेशस्य भवत्यन्यतरेणापि व्यपदेशः। तन्मात्रेणापि तदुपपत्तेः। वेदे तु समाख्यायाः कर्तृविशेषसम्बन्धप्रतिपादनमन्तरेण नान्यत्प्रयोजनमस्तीति समाख्यान्यथानुपपत्त्या होत्रैव तत्कर्तव्यमिति श्रुतिरनुमीयते। न च लिङ्गप्रकरणाभ्यां विरोधः? विनियोगस्य व्यवस्थितविकल्पपरिहारार्थं ताभ्यामेव समाख्याया अपेक्षितत्वात्। तस्माद्यथासमाख्यमेव कर्तृभिः पदार्थोऽनुष्ठातव्य इति सिद्धम्।

प्रयोजनम्—पक्षोक्तम्। सूत्रन्तु—समाख्यया तत्कर्तृसम्बन्धात्कर्मणः कर्तृव्यवस्था स्यात् समाख्यावगतकर्तृसम्बन्धस्यार्थवत्त्वादिति ॥

इत्येकोनविंशमृत्विजां नियतपदार्थकर्तृत्वाधिकरणम् ॥ १९ ॥

अथ विंशमग्नीनां सर्वार्थत्वाधिकरणम् ।

( संशयः )

इदानीं प्रसङ्गादग्निषु विचार्यते—किमग्नयः प्रकृत्यर्था एव ? उत प्रकृतिविकृत्यर्थाः ? इति । तत्राधानाधिकरणपूर्वपक्षसूत्रमेव 'तत्प्रकृत्यर्थं यथान्येनारभ्यवादा' इति पूर्वपक्षे हेतुतयानुमातव्यम् ।

( पूर्वपक्षः )

तत्रायं पूर्वपक्षः—भवत्वाधानस्यानारभ्यश्रुतत्वेनालौकिकाग्न्यर्थत्वेन क्रत्वङ्गत्वाभावादप्रकृत्यर्थत्वम् । अग्नीनान्तु क्रत्वङ्गत्वेन खादिरत्वादिवत् 'प्रकृतौ वाद्विरुक्तत्वात्' इत्यनेन न्यायेन केवलप्रकृत्यर्थत्वमेवेति । एवं प्राप्तेऽभिधीयते—

अग्नयश्च स्वकालत्वात् ॥ ३. ७. ३९ ॥

अयमभिप्रायः—भवेदेवं यदि खादिरत्वादिष्विवात्र द्विरुक्तिदोषो भवेत् । तथाहि–होमद्वारेण हि प्रकृतिष्वाहवनीयप्राप्तिः । तद्द्वारं विकृतिष्वप्युपदिष्टमेव होमरूपमस्ति । अग्न्युद्देशेन हि विकृतौ द्वारलाभः खादिरत्वादौ तु द्विरुक्तिदोषो भवति । न चोपदिष्टे होमे सति विकृतिष्वतिदेशेन होमद्वारप्राप्तिः । तेनोपदिष्टहोमैर्यावत्प्रकृतिविकृत्यर्थत्वमेवाग्नीनामिति । ननु यजत्युत्पत्तिष्वपि विकृतिषु होमरूपद्वारस्यातिदेशादेव लभ्यमानत्वादिति ।

तदुक्तम्—

द्वारं येषु पराधीनं तेषु तत्प्राप्त्यपेक्षया ।
प्राप्नुवन्तीदृशा भावा न स्वतन्त्राः कदाचन ॥
शास्त्रेण चोदिता ये हि दर्विहोमाः स्वरूपतः ।
तेष्वेवाहवनीयः स्यान्न यागेष्वप्यचोदनात् ॥ इति ।

(तं. वा., पृ. ११०४)

प्रयोजनम्—पूर्वपक्षेऽग्नित्रये गुणकामः श्रूयते । तस्य विकृतिष्वप्रवृत्तिः । सिद्धान्ते तु प्रवृत्तिरिति । सूत्रन्तु—अग्नयश्चेति चकारोऽयं तुशब्दार्थः । तेनायमर्थः—अग्नयः प्रकृतिविकृतिसर्वकामार्थाः स्वकालत्वात् । अनारभ्यविहितत्वादित्यर्थः । तेनैतत्सूत्रं न्यायप्रदर्शनार्थमेवेति सिद्धम् ॥

इति विंशमग्नीनां सर्वार्थत्वाधिकरणम् ॥ २० ॥

अथैकविंशं विशेषसमाख्यया सामान्यसमाख्याबाधाधिकरणम्

तस्योपदेशसमाख्यानेन निर्देशः ॥ ३. ७. ४१ ॥

(विषयसंशयौ)

किमेष एवोत्सर्गः सर्वं समाख्यातं समाख्यातैः पुरुषैः कर्त्तव्यमिति । नेति ब्रूमः । अत्र पूर्वपक्षस्य तुच्छत्वाद्भाष्यकारेण किमेष एवोत्सर्ग इति प्रश्नेनैवोपक्रम्य नेति ब्रूम इति सिद्धान्तो

वर्णितः । तेनात्रेयं विषयशुद्धिः—आध्वर्यवमिति समाख्याते पदार्थसमूहे नेष्ट्रीयमिति पदार्थविशेषसमाख्या, तथा हौत्रमिति समाख्याते अस्ति पोत्रीयमिति पदार्थविशेषसमाख्या । तत्र किं विशेषसमाख्यया सामान्यसमाख्याया विकल्पः ? अथ विशेषसमाख्यया सामान्यसमाख्याया बाध इति । पूर्वापवादत्वेनैवं विचार्यते ।

( पूर्वपक्षः )

पूर्वपक्षस्तु—समान्यविषयं हि प्रमाणं विशेषविषयेण शीघ्रप्रवृत्तेन बाध्यते । समाख्या तु यौगिकत्वात्सर्वत्र विशेषविषया । अतस्तुल्यबलत्वात्समाख्याया विकल्पेनैव कर्तृसम्बन्ध इति । एवं प्राप्ते—

( सिद्धान्तः )

अभिधीयते—भवेदेवं यदि सामान्यसमाख्याविशेषसमाख्ययोस्तुल्यबलत्वं भवेत् । तथाहि—यद्यपि सामान्यसमाख्या यौगिकत्वेन विशेषविषयिणी, तथाप्यनेकविशेषविषयतया सामान्यश्रुतिकल्पनया विलम्बिनी । विशेषसमाख्या तु नियतैकपदार्थगोचरत्वेन विनियोजकश्रुतिकल्पनया शीघ्रभाविनी । तेन बलवत्वाद्विशेषश्रुतेरेव सामान्यसमाख्याबाध एवेति न कर्तृविकल्पः । यद्व्यपदेशग्रहणं सूत्रे तद्दृष्टान्तः । बलाबलाधिकरण एवोपदेशतः

समाख्याबाधस्य वर्णितत्वात् । तेनायमर्थः—यथोपदेशेन शीघ्रप्रवृत्तेन सामान्यसमाख्या बाध्यते, तथा विशेषसमाख्ययापीति । अथवोत्तरविचारप्रस्तावनार्थं पूर्वोक्त एवोपदेशतः समाख्याबाधः स्मारितः ।

प्रयोजनम्—पत्तोक्तम् सूत्रन्तु—सामान्यसमाख्याप्रतिपादितस्य विशेषसमाख्याया निर्देशादुपदेशेनापवाद इति ॥

इत्येकविंशं सामान्यसमाख्याबाधाधिकरणम् ॥ २१ ॥

अथ द्वाविंशं प्रैषानुवचनस्य मैत्रावरुणकर्तृताधिकरणम्

प्रैषानुवचनं मैत्रावरुणस्योपदेशात् ॥ ३. ७. ४३ ॥

( विषयसंशयसङ्गतयः )

अस्ति ज्योतिष्टोमे पशुरग्नीषोमीयः—"यो दीक्षितो यदग्नीषोमीयं पशुमालभते" इति । तत्रेदमामनन्ति—"तस्मात्मैत्रावरुणः प्रेष्यति चान्वाह" इति । तत्र संशयः—किं सर्वानुवचनेषु प्रैषेषु च मैत्रावरुणः स्यात् ? उत यत्रानुवचनं तत्र प्रैषः ? इति । सामान्यसमाख्याया विशेषसमाख्यया बाधे निरूपिते इदानीं यत्र वचनेन सामान्यसमाख्याया बाधः स किं सर्वविषयः ? उतैकदेशविषय इति प्रसङ्गान्निरूप्यते ।

( पूर्वपक्षः )

पूर्वपक्षस्तु—सर्वप्रैषाणामाध्वर्यवसमाख्ययाध्वर्युकर्त्तृकत्वम्। सर्वानुवचनानाञ्च हौत्रसमाख्यया होतृकर्त्तृत्वम्। एवञ्च सति प्रैषेषु वचनानि तान्युभयकर्त्तृकाणि प्राप्नुवन्ति। विशेषेण च प्रैषो वचनत उपदेशेन मैत्रावरुणोपादानं प्रतीयते। तत्र यद्यपि "प्रेष्यति चान्वाह" इति चशब्दात्समुच्चयोऽवगम्यते, तथाप्युद्देशगतत्वेनाविवक्षितत्वात्सकलप्रैषानुवचनमात्रोद्देशेनैव मैत्रावरुणो-विधीयत इति। एवंप्राप्तेऽभिधीयते—

पुरोनुवाक्याधिकारो वा प्रैषसन्निधानात्॥ ३. ७. ४४॥

( सिद्धान्तः )

अयमभिप्रायः—भवेदेवं यद्यत्र विशेषो नावगम्यते। तथाहि—वेदे पुरोनुवाक्याविधितः सप्रैषमनुवचनं प्रतीयते। तच्चैकपदार्थरूपत्वादेकेन कर्त्तव्यम्। न चानुवचनकर्त्ता होता प्रैषितुमर्हति। न चाध्वर्युरनुवचनं कर्त्तुमर्हति। प्रैषकर्त्ता हि प्रेषते। तेनैव पुरोनुवाक्यानुरूपं प्रैषानुवचनं कर्तृसापेक्षम्। तत्सन्निधौ च "मैत्रावरुणः प्रेष्यति चान्वाह" इति श्रूयमाणमपेक्षितविधानात्सन्निहितविषयमवधार्यते। किञ्च साहचर्यवशादपि यत्रैवापेक्षितं तत्र मैत्रावरुणविधानमुचितम्। "मैत्रावरुणः प्रेष्यति चान्वाह" इत्यत्र सहचरित एव प्रैषानुवचनः प्रतीयते, पुरोनु-

वाक्यया च तयोः साहचर्यमवगम्यते । एवं प्रथमं प्रतीयते । तेन मैत्रावरुणविधिर्न केवलेष्वनुवचनेष्विति न सर्वत्र सामान्यसमाख्याबाध इति सिद्धम् ।

प्रयोजनम्—पक्षोक्तम् । सूत्रन्तु—पुरोनुवाक्यास्वेव मैत्रावरुणविधिः सम्प्रैषानुवचनत्वेन तासामेव सन्निधानात् ॥

इति द्वाविंशं प्रैषानुवचनस्य मैत्रावरुणकर्तृताधिकरणम् ॥२२॥

अथ त्रयोविंशं चमसहोमेष्वध्वर्युकर्तृत्वाधिकरणम्

चमसांश्चमसाध्वर्यवस्समाख्यानात् ॥३. ७. ४६॥

( विषयसंशयौ )

सन्ति चमसाध्वर्यवः । तेषु सन्देहः—किं चमसाध्वर्यवश्चमसाञ्जुहुयुः उताध्वर्युरिति ।

( पूर्वपक्षः )

पूर्वपक्षस्तु—चमसाध्वर्युरिति विशेषसमाख्येयम्—चमसाध्वर्योर्व्यापारं करोतीति । चमसाध्वर्युव्यापारश्चात्र होमादिः । तेन च यद्यन्ये चमसेन प्रणयनासादनहोमादि कुर्युस्तदैव चमसाध्वर्यवो भवेयुः । आध्वर्यवसमाख्या तु समान्यरूपा ग्रहचमसादिनानापदार्थविषया । अतः सामान्यरूपाध्वर्यवसमाख्यां बाधित्वा

चमसेषु चमसाध्वर्युणैव विशेषसमाख्यानाद्धोमादि कर्त्तव्यमिति। एवं प्राप्तेऽभिधीयते—

अध्वर्युर्वा तन्यायत्वात् ॥ ३. ७. ४७ ॥

( सिद्धान्तः )

अयमभिप्रायः—भवेदेवं यदायं विशेषसमाख्या सामान्यसमाख्यां बाधितुमर्हति। सा खलु विशेषसमाख्या सामान्यसमाख्यां बाधते, या तन्निरपेक्षा प्रवर्त्तते। "चमसाध्वर्यवो भवेयुः" इति वचनमध्वर्युं तत्प्रवृत्तिञ्च प्रतिपादयति। तद्यथाध्वर्युरेव चमसैर्न जुहोति कथं ते चमसैर्होमं कुर्युरिति चमसाध्वर्यवो भवेयुः। न च ग्रहगताध्वर्युव्यापारापेक्षयैव चमसेष्वध्वर्युर्भवतीति चमसाध्वर्यव इति वक्तव्यम्। सामानाधिकरण्येनैव व्यापारप्रतीतौ सत्यां व्यधिकरणव्यापारप्रतीत्ययोगात्। अतोऽत्र चमसेषु सामान्यसमाख्याप्राप्तोऽध्वर्युर्विशेषसमाख्यया न बाध्यते। चमसाध्वर्युसमाख्या चैषामध्वर्योरशक्तौ चमसेषु होमादिकरणाद्भविष्यति।

प्रयोजनम्—पक्षोक्तम्। सूत्रन्तु—अध्वर्युश्चमसेषु जुहुयात्तस्यैवोक्तप्रकारेण न्याय्यत्वादिति ॥

इति त्रयोविंशं चमसहोमेष्वध्वर्युकर्तृत्वाधिकरणम् ॥२३॥

अथ चतुर्विंशं श्येनादेरनेककर्तृत्वाधिकरणम्

वेदोपदेशात्पूर्ववद्वेदान्यत्वे यथोपदेशं स्युः॥३.७.५०॥

( विषयसंशयसङ्गतयः )

अस्त्यौद्गात्रे समाम्नातः श्येनः, आध्वर्यवे वाजपेयः। तत्र सन्देहः—किं श्येने उद्गातृभिरेव पदार्थाः कर्त्तव्याः वाजपेयेऽध्वर्युभिः ? उतोभयत्र नानार्त्विग्भिः ? इति। इदानीं प्रसङ्गात्प्रकृतसमाख्ययोर्बाध्यबाधकभावो निरूप्यते।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षः—श्येनस्तावदौद्गात्रवेदे समाम्नातत्वेनास्य च ज्योतिष्टोमविकारत्वादतिदेशेन नानाकर्तृकाः पदार्थाः प्राप्ता इति। तेन यद्यपि साक्षादौद्गात्रप्रधानप्रायवचनेन साङ्गस्यैकस्य विधानात्तदन्तर्गताङ्गान्यपि विधीयन्त इति तान्यप्यौद्गात्राणि। अतो 'गुणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन वेदसंयोगः' इत्यनेन न्यायेनाङ्गेषूद्गातैव कर्त्तेति। किञ्च प्रकृतवेदाङ्गेषु सामाख्यानिकान्येव कर्त्रन्तराणि। तच्च समाख्यया विकृतिष्वध्वर्युणैव कर्त्तव्यमिति। एवं प्राप्तेऽभिधीयते—

तद्ग्रहणाद्वा स्वधर्मः स्यादधिकारसामर्थ्यात्सहाङ्गैरव्यक्तश्शेषे ॥ ३. ७. ५१ ॥

( सिद्धान्तः )

अयमभिप्रायः—भवेदेवं यदि प्रयोगवचनमतिदेशाद्दुर्बलं न भवेत् । तथाहि—प्रयोगवचनं तावत्प्राप्तानुवाद्यर्थानुपसंहरति । विकृतौ प्राकृतपदार्थानामतिदेशतः प्राप्तिर्वक्तव्या । अतिदेशाच्च प्राकृतसामाख्यानिककर्त्तृसहिता एव प्रथमं पदार्थाः प्राप्ता इति । तेन कर्त्रन्तरापेक्षाभावात्प्रयोगवचनेन तथाभूतमेव गृह्यते । तत्र किमौद्गात्रसमाख्या करिष्यति ? न च वैकृतसमाख्यायाः प्रत्यक्षत्वात्प्रकृतप्राप्तसामाख्यानिककर्त्तृबाधेन निविशत इति वाच्यम् । यतः प्राकृती समाख्या क्लृप्तश्रुतिमूला, वैकृती तु कल्पनीयेति न बाधितुमर्हति । अत एव नात्र गुणमुख्यव्यतिक्रमन्यायविषयत्वम् । प्राकृतकर्त्तॄणां समाख्यानुमितश्रुतिविषयत्वेन बलवत्त्वात् । किञ्च प्रधानस्य याजमानत्वेन समाख्यया कर्त्तृविनियोगाभावात्कुतस्तद्द्वारेणाङ्गेषु प्रधानकर्तृसम्बन्धः ? गुणमुख्यव्यतिक्रमे तु "उपांशु यजुषा क्रियते" इति प्रधानस्यापि यजुर्वेदविहितत्वेनोपांशुस्वरसम्बन्धात्तद्द्वारेणाङ्गसम्बन्धोऽपि । अतः प्राकृतकर्तृग्रहणेन नानाकर्तृक एव श्येनो वाजपेयश्चेति सिद्धम् । तेन यजुर्वेदे प्राकृतं यत्किञ्चिदप्याम्नायते, तत्रैव परं वैकृतसमाख्यानिबन्धनकर्त्ता, न त्वन्यत्रापीति ।

प्रयोजनम्—पक्षोक्तम् । सूत्रन्तु—तद्ग्रहणात्प्राकृतसमा-

ख्यानिककर्तृत्वात् अप्राकृतकर्तृग्रहणाच्छ्येनो वाजपेयश्च तेनैव स्वधर्मः स्यात् अधिकारसामर्थ्यात् । अव्यक्तश्च वैकृतसमाख्यानिककर्ता शेष अप्रकृते अङ्गैरिति ॥

यो नाम कश्चिदिह संविदितं प्रमेयं
ग्रन्थान्तरे लिखति वा वदति स्वयं वा ।
मत्कर्तृतामननुकीर्त्य स कीर्तिलोभात्
निस्सन्ततिर्जगति जन्मशतानि भूयात् ॥

इति चतुर्विंशं श्येनादेरनेककर्तृत्वाधिकरणम् ॥ २४ ॥

इति बालवलभीभुजङ्गापरनाम्नो भट्टभवदेवस्य कृतौ तौतातितमततिलके तृतीयस्य सप्तमः पादस्समाप्तः ॥

## अथ तृतीयाध्यायस्याष्टमः पादः

### तत्र प्रथमं दक्षिणादानस्य स्वामिकर्तृत्वाधिकरणम्

स्वामिकर्म परिक्रयः कर्मणस्तदर्थत्वात् ॥ ३. ८. १ ॥

( विषयसंशयसङ्गतयः )

अस्ति परिक्रयो ज्योतिष्टोमे द्वादशशतम्, दर्शपूर्णमासयोरन्वाहार्यम् । तत्र सन्देहः—किमध्वर्युणा परिक्रेतव्या ऋत्विजः ? उत स्वामिनेति । एतदपि समाख्यापवादत्वेन विचार्यते ।

(पूर्वपक्षः)

अत्रायं पूर्वपक्षिणोऽभिसन्धिः—आध्वर्यवे हि वेदे परिक्रय आम्नायते। तेन परिक्रयोऽप्याध्वर्यव एव। आध्वर्यवं यत्तदध्वर्युणा कर्तव्यम्। परिक्रयोऽप्यध्वर्युकर्तृक एव। ननु स्वीयद्रव्यदानेन परिक्रयो भवति। अध्वर्युश्च द्रव्यार्थमेव परार्थकर्मणे प्रवृत्तः। कथं स्वयं द्रव्येणान्यार्थं परिक्रयं करोतीति सम्भाव्यते। उच्यते—यजमानसहितेन परिक्रयः कर्त्तव्यः। अतो यजमानेनैव लौकिकोपायेन तस्य तथा कर्तव्यम्, यथा वाक्यश्रवणेनैव परिक्रयं कर्त्तुमुत्सहत इति समाख्यानुरोधादेव कल्पनीयम्। एतस्मादेवाध्वर्युणा परिक्रयः कर्त्तव्य इति। एवं प्राप्ते—

(सिद्धान्तः)

अभिधीयते—भवदेवं यद्यधिकारविधिः साङ्गप्रधानानुष्ठातुः फलसम्बन्धित्वं न प्रतिपादयेत्। फलार्थिनो हि फलसाधने कर्त्तृत्वम्। फलसाधनं साङ्गमेव प्रधानम्। तेन फलार्थिना यजमानेन साङ्गमेव प्रधानं कर्त्तव्यम्। तच्च यजमानकर्त्तृत्वं साङ्गप्रधाने साक्षात्, अङ्गेषु ऋत्विक्परिक्रयद्वारेणेति प्रतिपादितम्—"शास्त्रफलं प्रयोक्तरि तल्लक्षणत्वात्तस्मात्स्वयं प्रयोगे स्यात्" इत्यत्र। यदा हि परिक्रयमपि न कुर्यात् तदाधिकारविधिप्रतिपादितसाङ्गप्रधानकर्तृत्वमेवास्य विरुध्यते। न च लौकिकोपाय-

द्वारेण कारयिष्यतीति वाच्यम् । वेदविहितपरिक्रयपरित्यागेन कालवन्नियोगोपायाश्रयानुपपत्तेः । तच्च समाख्यानुराधादेव कल्पनीयमधिकारविधितस्तस्या दुर्बलत्वादन्यत्र च सावकाशत्वात् । तदुक्तम्—

लौकिकाश्रयणं तत्र यत्र नान्योऽस्ति वैदिकः ।
वैदिके दक्षिणादाने सति किं लौकिकाश्रयः ॥ इति ।

(तं. वा., पृ. १११२)

तस्मादधिकारविधिबोधितसाङ्गप्रधानगतयजमानकर्तृत्वसामर्थ्याद्यजमानेनैव परिक्रयः कर्तव्यः । अस्मिंश्चाधिकरणे यजमानकर्तृत्वप्रसाधनात्परिक्रये 'अन्यो वा स्यात् परिक्रयाम्नानात्प्रतिषेधात् प्रत्यगात्मनि' (जै. सू., ३. ७. २०) इत्यत्र इह सिद्धवत्परिक्रयस्य यजमानमाश्रित्याङ्गेष्वन्य एव कर्तेति सिद्धान्तितम् । तेनेदमधिकरणं तस्मात्पूर्वं द्रष्टव्यम् ।

प्रयोजनम्—पक्षोक्तम् । सूत्रन्तु—स्वामिन एव परिक्रयः कर्म, नाध्वर्योः समस्तस्यैव कर्मणः स्वाम्यर्थत्वादधिकारविधिबलेन यजमानकर्तृत्वादिति ॥

इति प्रथमं दक्षिणादानस्य स्वामिकर्तृकत्वाधिकरणम् ॥ १ ॥

## अथ द्वितीयं वपनादीनां याजमानताधिकरणम्

### संस्कारास्तु पुरुषसामर्थ्ये यथावेदं कर्मवद् व्यतिष्ठेरन् ॥ ३. ८. ३. ॥

( विषयसंशयौ )

ज्योतिष्टोमे श्रूयते—"केशश्मश्रु वपते, दतो धावते, नखानि निकृन्तते, स्नाति" इति । तत्र सन्देहः—किमेवञ्जातीयका अध्वर्युणा कर्तव्याः ? उत यजमानेनेति । इदानीमुदाहरणान्तरे लिङ्गेन समाख्याबाधोऽधिकाशङ्कानिराकरणेन प्रतिपाद्यते ।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षः—भवत्वधिकारविधिबोधितसाङ्गप्रधानगत-यजमानकर्तृत्वबलात्समाख्याबाधेन परिक्रयस्य याजमानत्वम् । इह तु दन्तधावनादीनामङ्गानां परिक्रीताध्वर्युकर्तृत्वे तेनैव यजमानकर्तृत्वोपपत्तेः आध्वर्यवसमाख्यया अध्वर्युकर्तृकत्वमेव । न चाध्वर्युगतसंस्कारोऽनर्थक इति वाच्यम् । "ऋत्विज उपवसन्ति" इत्यादिवत्कर्तृबलाददृष्टार्थत्वेनोपपत्तेः । ननु 'फलसंयोगात्स्वामियुक्तं प्रधानस्य' इत्यत्र स्थित एव याजमानत्वे दन्तधावनादीनां कर्तृसंस्कारकत्वं प्रतिपादितमेव । अतः कथमध्वर्युकर्तृकत्वमाश्रीयते ? उच्यते—इहत्यमेव याजमानत्वमङ्गीकृत्य तथा विचारितम् । तेनेदमधिकरणमर्थतस्तस्मात्पूर्वं द्रष्टव्यम् । अतः समा-

ख्यानुग्रहादध्वर्युकर्तृकाण्येव दन्तधावनादीनि। एवं प्राप्तेऽभिधीयते—

याजमानास्तु तत्प्राधानत्वात्कर्मवत् ॥ ३. ८. ४ ॥

(सिद्धान्तः)

अयमभिप्रायः—भवेदेवं यद्यत्राप्यधिकारविधिसामर्थ्यावगतं साङ्गप्रधानकर्तृत्वं यजमानस्योपपद्यते। तथाहि—दन्तधावनस्य संस्कारेषु पाठान्नाध्वर्युकर्तृत्वम्। तद्यदि स्वयमपि न कुर्यात् तदाधिकारसामर्थ्यावगतं संस्कारेषु कर्तृत्वमेव यजमानस्य न स्यात्। तेन यत्रैव कर्म प्रति कर्तॄणां गुणभावः, तत्रानेकेषु गुणभूतेषु अनेककर्मनिर्वृत्त्यर्थमुपात्तेषु केन किं कर्त्तव्यमित्यपेक्षायां भवति समाख्या नियामिका, न त्वत्रापाततो वस्तुगुणत्वे तस्या निर्द्धारणमिति। न चेयं समाख्या निरोधिका। यजमानस्य दन्तधावनं केशश्मश्रुवपनं नखनिकृन्तनञ्चाध्वर्युः करिष्यतीति न वाच्यम्। यतो यथालोकसिद्धानामेव पदार्थानां वाक्यार्थान्वयोऽवगम्यते। लोके च दन्तधावनस्य स्वकर्तृकत्वान्नखक्षालनादीनाञ्च नापितकर्तृकत्वान्नाध्वर्युकर्तृकत्वं लोकाचारविरोधादिति। "ऋत्विज उपवसन्ति" इत्यत्र प्रत्यक्षवचनवशादुपवाससंस्कृतानामेवर्त्त्विजां कर्माङ्गत्वावगमादुपवाससंस्कृतर्त्विकर्तृकपदार्थसिद्ध्यर्थमेवाचरणमिति कल्प्यते। इह तु समाख्याया अधिकारविधिसामर्थ्यरूपाल्लिङ्गा-

दुर्दुर्बलत्वादधिकारविधिसामर्थ्येन च यजमानकर्तृत्वावगमात् साक्षादेव समाख्याबोधितदन्तधावनादीनां यजमानकर्तृत्वमिति सिद्धम् ।

प्रयोजनम्—पक्षोक्तम् । सूत्रन्तु—दन्तधावनादयो यजमानकर्तृका एवेत्यवगमादिति ॥

इति द्वितीयं वपनादीनां याजमानताधिकरणम् ॥ २ ॥

अथ तृतीयं तपसो याजमानताधिकरणम्

तपश्च फलसिद्धत्वाल्लोकवत् ॥ ३. ८. ६ ॥

( विषयसंशयौ )

तपः श्रूयते—"त्र्यहं नाश्नाति" इति । तत्र सन्देहः—किमार्त्विजं याजमानं वेति । इदानीमुदाहरणान्तरेऽधिकाशङ्कां निवर्तयितुं चशब्देन स एव न्यायोऽतिदिश्यते ।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षः—भवतु दन्तधावनादिसंस्कारेषु कर्तृप्रधानत्वादविनियोजकत्वं समाख्यायाः । इह त्र्यहानशनरूपतपसो दुष्करत्वेन कर्तृप्रतिकूलत्वात्तदनुग्राहकत्वरूपं कर्तृगुणत्वं नास्तीति । कर्तृत्वञ्च गुणभूतम् । तत्र समाख्या नियामिकेति यथासमाख्यमेव तपसि कर्तेति । एवं प्राप्ते—

( सिद्धान्तः )

अभिधीयते—भवेदेवं यदि दन्तधावनादिवत्तपसोऽप्यनुकूल-भावेन गुणभावो न भवेत्। तथाहि—द्विविधं कर्तरि कर्मणोऽनुकूलत्वं भवति—फलोत्पत्त्यनुकूलगुणान्तरेण वा यजमानेन वा फलोत्पत्तिप्रतिबन्धकपापापनयनेन वा। कर्तुरपि फलं यजमानीयमपेक्षते। तेन यथा दन्तधावनादीनां फलोत्पत्त्यनुकूलं (?) कर्तृगुणान्तरयजमानेनानुकूलत्वात्कर्तृगुणत्वम्, तथेहापि यज्ञजन्यफलापूर्वोत्पत्तिप्रतिबन्धकपापापनयेन वा कर्तुरनुकूलत्वात्कर्त्तारं प्रति फलत्वमविरुद्धमिति। न च कथमेतदवगम्यत इति वाच्यम्। यतस्तपसस्तावत्प्रकरणश्रुतस्यावश्यं कथञ्चित्कर्तारं प्रत्युपकारकत्वं कल्पनीयम्। अस्ति च क्रतौ प्रतिबन्धकपापक्षयापेक्षा। शक्नोति च तपो दुःखहेतुत्वादधर्मस्य दुःखफलत्वेन दुःखविनाश्यत्वात्सन्निधानाकाङ्क्षायोग्यत्वैरपनेतुम्। यथैव 'प्रायश्चित्ताचरणाद्दुःखेनाल्पेनापि महते दुःखान्तराय प्रवृत्तस्सन्नधर्मो विनाश्यते' इति वचनाद्गम्यते, तथेहाप्येतावतैव दुःखेन समस्तस्यापि कर्त्रात्मफलप्रतिबन्धहेतोः पापस्य विनाश इति निश्चीयते। तस्य च फलप्रतिबन्धहेतोः पापस्य क्षयात्फलार्थिनो यजमानस्यैवापेक्ष्यत इति तपसो याजमानत्वमेवेति सिद्धम्। यत्र पुनः प्रत्यक्षश्रुतं वचनमस्ति, यथा "सर्वे ऋत्विज उपवसन्ति" इति

तत्र वचनबलादृत्विक्कर्तृकमपि भवतीति पूर्वमेवोक्तम्। तथाच सूत्रम्—'वचनादितरेषां स्यात्' इति। तेन यत्र कर्मणि कर्तुर्गुणाभावः, तत्रैव समाख्यया कर्तृविनियोगः। यथा याज्ञिकं बार्हस्पत्यं ज्योतिष्टोमादि। तत्र कर्तृनियमो नान्यत्रेति। तथाच सूत्रम्—'गुणत्वाच्च वेदेन न व्यवस्था स्यात्' (जै. सू., ३. ८. १२) इति।

प्रयोजनम्—पक्षोक्तम्। सूत्रन्तु—तपोऽपि याजमानमेव लोकवत्प्रतिपत्तिव्युदासेन फलसिद्धावनुकूलत्वादिति॥

इति तृतीयं तपसो याजमानताधिकरणम्॥ ३॥

### अथ चतुर्थं हिरण्यमालित्वाद्यधिकरणम्

### (विषयसंशयौ)

एवं वा—श्येने श्रूयते—"लोहितोष्णीषा ऋत्विजः प्रचरन्ति" इति। वाजपेये च "हिरण्यमालिन ऋत्विजः प्रचरन्ति" इति। तत्र सन्देहः—किं श्येने उद्गातृभिर्लोहितोष्णीषता कर्त्तव्या? वाजपेये चाध्वर्युभिर्हिरण्यमालित्वम्? उत सर्वैः ऋत्विग्भिः? इति। 'गुणत्वाद्वेदेन न व्यवस्था स्यात्' इति सूत्रं पूर्वाधिकरणशेषतया व्याख्यातम्। यत्र कर्त्ता गुणभूतः, तत्र समाख्या नियामिका। इह तूपवासस्य कर्तृगुणत्वान्न समाख्याहेतुभूतेन वेदेन व्यवस्था स्यादिति। एतच्च व्याख्यानं 'गुणत्वेन तस्य निर्देशः' इत्यनेनैव

पूर्वाधिकरणसूत्रेण गतत्वादनतिप्रयोजनमित्युदाहरणान्तरेऽधिकाशङ्कानिरासार्थमन्यथा व्याख्यायते ।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षः—'वचनादितरेषां स्यात्' इत्यत्र येषां संस्काराणां वचनादृत्विक्सम्बन्धः, तत्र ऋत्विग्भिः कर्त्तव्या इति प्रतिपादितम् । यदि च लोहितोष्णीषत्वमुद्गातृभिर्हिरण्यमालित्वमध्वर्युभिः क्रियते, तत्रापि तत्सकर्तृकत्वमविरुद्धमेव । न हि दुर्बलतया बाध्यते, अपि तर्हि विरोधेन । न चात्र समाख्याविषयकर्तृकपरिग्रहे ऋत्विक्छब्दस्य कश्चिद्विरोधः । तेन यथा "बर्हिषि हवींष्यासादयति" इति वाक्यं प्रकरणानुरोधेन दार्शपौर्णमासिकहविर्विशेषविषयं व्यवस्थापितम्, तथा "लोहितोष्णीषा ऋत्विजः प्रचरन्ति" इत्यपि वाक्यं समाख्यानुरोधेनोद्गातृविषयमेव व्यवस्थास्यते, हिरण्यमालिवाक्यं चाध्वर्युविषयमेव व्यवस्थास्यत इति । एवं प्राप्तेऽभिधीयते—

गुणत्वाच्च वेदेन न व्यवस्था स्यात् ॥ ३. ८. १२ ॥

( सिद्धान्तः )

अयमभिप्रायः—भवेदेवं यद्यत्र समाख्यावकाशो भवेत् । तथाहि—यत्रानेकानि कर्माणि प्रधानभूतानि कर्त्तारश्चानेके

गुणभूताः तत्रैकेनैव कर्त्रा एकस्मिन् कर्मणि निर्वर्त्तिते प्रधानत्वात्कर्मणां गुणभूतकर्त्रनुरोधेन पुनरावृत्त्यसम्भवात्प्रतिकर्म भवत्यपेक्षा—किं केन कर्तव्यमिति । तत्रापेक्षायां भवति समाख्याया नियामकत्वम् । इह त्वृत्विजां प्रधानत्वाल्लोहितोष्णीषताया हिरण्यमालितायाश्च प्रतिप्रधानगुणावृत्तिन्यायेन सर्वर्त्विक्सम्बन्धोपपत्तेः केन कर्तव्येत्यपेक्षाभावात् अविहितप्रसरमेव वाक्यं न समाख्यया नियन्तुं शक्यते । तदुक्तम्—

संस्कारत्वादतिक्रान्ते समाख्यागोचरे सति ।
वचनेनर्त्विजां तेनैवान्येष्वपि स्थिताः ॥ इति ।

(तं. वा., पृ. १११७)

"बर्हिषि हवींष्यासादयति" इत्यत्र हविःस्वरूपमात्रे बर्हिर्विधानानर्थक्यादवश्यमपूर्वसाधनलक्षणार्थं वाक्येन प्रकरणमपेक्षणीयमिति युक्तं व्यवस्थेति । न चेह तथा समाख्येति वाक्यबलाज्ज्योतिष्टोमे वाजपेये च लोहितोष्णीषत्वं हिरण्यमालित्वञ्च सर्वर्त्विग्भिरेव कर्त्तव्यमिति ।

प्रयोजनम्—पक्षोक्तम् । सूत्रन्तु—गुणत्वाल्लोहितोष्णीषताया हिरण्यमालितायाश्च वेदेन समाख्याद्वारा न व्यवस्था स्यादिति ॥

इति चतुर्थं हिरण्यमालित्वाद्यधिकरणम् ॥ ४ ॥

अथ पञ्चमं गुणकामानां याजमानत्वाधिकरणम्

तथा कामोऽर्थसंयोगात् ॥ ३. ८. १३ ॥

( विषयसंशयसङ्गतयः )

ज्योतिष्टोमे श्रूयते—"यदि कामयेत 'वर्षुकः पर्जन्यः स्यादिति नीचैः सदो मिनुयात" इति । तत्र सन्देहः—किमार्त्विजः कामः ? उत याजमानः ? इति । पूर्वत्र 'वेदेन न व्यवस्था स्यात' इति सूत्रं पूर्वाधिकरणशेषभूतं मन्यमानस्तमेव न्यायमुदाहरणान्तरेऽधिकाशङ्कानिरासार्थं तथाशब्देनातिदिशति ।

( पूर्वपक्षः )

पूर्वपक्षस्तु—सदोमानं तावत्समाख्यानियतमध्वर्युकर्तृकं यदि कामयेत सदो मिनुयादिति । अत्र च कामनायाः सदोमानसामानाधिकरण्यं प्रतीयते । तेन कामोऽप्याध्वर्यव एव, न तु याजमान इति । आत्मनेपदवशात्साङ्गस्यैव यागस्य फलं यजमानगतमेव । न च काम्यमानं फलं भवति । तेन यजमानेनैव कामयितव्यमिति कथमध्वर्योः कामनाशङ्का ? उच्यते—साङ्गस्य यागस्य फलं यजमानेनैव नीचमानाश्रितम् (?) । स्वयं न यागो नापि यागाङ्गम्, पुरुषार्थत्वात् । तेनाविरुद्धत्वात्सामानाधिकरण्यमुपदेशात् । तथाहि—"स्वर्गकामो यजेत" इत्यत्रात्मनेपदा-

त्कृत्स्नप्रयोगगतं फलं यजमानस्यैव प्रतीयते । सदोमानञ्च क्रत्वङ्गम् । नीचैस्त्वञ्च पुरुषार्थत्वाद्यद्यपि न प्रकृतक्रतत्वङ्गम्, तथापि क्रत्वङ्गसदोमानाश्रितत्वात्प्रकृतप्रयोगान्तर्गतमेव । प्रयोगफलञ्च यजमानस्येति नीचैस्त्वस्यापि फलं यजमानगतमेव । किञ्च "नीचैस्सदो मिनुयात्" इति परस्मैपदं दृश्यते । अध्वर्युगतत्वे च कर्त्रभिप्रेतक्रियाफलत्वान्मिन्वीतेत्यात्मनेपदं स्यात्, ञित्वात् । अतस्तदेतदात्मनेपदपरस्मैपदश्रुतिविरोधाद्वाक्यगम्यसामानाधिकरण्यं बाध्यत एवेति वैयधिकरण्येनैवात्रान्वयः—यदि पर्जन्यो वर्षेदिति यजमानः कामयेत्तदाध्वर्युर्नीचैः सदो मिनुयादिति । यत्र पुनः स्पष्टमेव वचने ऋत्विक्सम्बद्धे फलप्रतिपादकत्वमस्ति, यथा "उद्गातात्मने च यजमानाय च यं कामं कामयते तं कामयेत" इति, तत्रोद्गातुरेव फलमिति स्थितिः ।

प्रयोजनम्—पत्तोक्तम् । सूत्रन्तु—यथा तपो याजमानं तथा गुणकामोऽपि याजमान एव, अर्थसंयोगात् यजमानस्यैव प्रयोगगतप्रयोजनसम्बन्धादिति ।

इति पञ्चमं गुणकामानां याजमानताधिकरणम् ॥ ५ ॥

अथ षष्ठं प्रोत्साहनमन्त्राणां याजमानताधिकरणम्

मन्त्राश्चाकर्मकरणास्तद्वत् ॥ ३. ८. १५ ॥

( विषयसंशयौ )

इहैवञ्जातीयका मन्त्रा उदाहरणम्—"आयुर्दा अग्नेऽस्यायुर्मे देहि, वर्चोधा अग्नेऽसि वर्चो मे देहि, चक्षुर्दा अग्नेऽसि चक्षुर्मे देहि" इति। तेषु सन्देहः—किमार्त्विजाः ? उत याजमानाः ? इति। इहाप्याधिकाशङ्कानिरासार्थं पूर्वोक्तन्यायस्तद्वच्छब्देनातिदिश्यते।

( पूर्वपक्षः )

पूर्वपक्षस्तु—भवतु फलाय विधीयमानस्य नीचैस्त्वादेः प्रकृतप्रयोगान्तर्गतत्वात्फलम्, याजमानत्वेन कामनाया अपि याजमानत्वम्। आयुर्दादिमन्त्राणां त्वविधायकत्वेन यथाप्राप्तफलानुवादकत्वम्। फलञ्च प्रकृते कर्मणि यथा यजमानस्य स्वर्गादिरूपमस्ति, तथर्त्विजामपि दक्षिणारूपमस्त्येव। यजमानफलानुवादकत्वेन मन्त्रपदानां मुख्यत्वम्। स्वर्गस्य फलस्यायुरादिपदैरनभिधानात्। यथा च लक्षणया तदनुवादकत्वं, तथर्त्विक्फलानुवादकमपि सम्भवत्येव। तेन समाख्यावगताध्वर्युकर्तृकत्वानुरोधेनाध्वर्योरेव दक्षिणालाभात्मकफलमायुरादिरूपेणोत्साहनार्थमाशास्यते। तस्मादध्वर्युणैवञ्जातीयका मन्त्राः प्रयोक्तव्या इति। एवं प्राप्ते—

( सिद्धान्तः )

अभिधीयते—भवेदेवं यद्यृत्विजां फलमग्नेः सकाशादाशासनमर्हेत् । तद्धयग्नितः फलमेतदाशास्महे । यजमानस्य च फलं कर्मद्वारेणाग्निसम्बन्धिना । ऋत्विक्फलन्तु नाग्नितः प्रार्थनीयम् । यजमानादेव तस्य लभ्यमानत्वेनाग्निसम्बन्धाभावात् । किञ्चोत्साहजननार्थमिदमाशासनम् यजमानफलं चात्यन्तादृष्टं यथाचोदितानुष्ठानसाध्यम् । तदाशास्यमानमुत्साहजननं यथाचोदितप्रयोगसम्पत्तिहेतुर्भूत्वा सिध्यतीति तदेवाशासनीयम् । ऋत्विक्फलन्तु यजमानव्यापारकरणादेव सिद्धमाशासनं प्रयुङ्क्ते । अतो यजमानस्यैवाशासनयोग्यरूपं लिङ्गेन समाख्याया बाधितत्वाद्यजमानेनैवाशीर्मन्त्राः प्रयोक्तव्या इति सिद्धम् ।

प्रयोजनम्—पक्षोक्तम् । सूत्रन्तु—मन्त्राश्चाकर्मकरणा यैर्मन्त्रैः कर्म न क्रियते, तेऽपि याजमानाः तद्वद्गुणाकामवदिति ॥

इति षष्ठं प्रोत्साहनमन्त्राणां याजमानताधिकरणम् ॥ ६ ॥

अथ सप्तमं दुव्याम्नातानामुभयार्थताधिकरणम्

द्व्याम्नातेषूभौ द्व्याम्नानास्यार्थवत्वात् ॥ ३. ८. १७ ॥

( विषयसंशयसङ्गतयः )

स्तो दर्शपूर्णमासौ । तत्र दुव्याम्नाता मन्त्राः आध्वर्यवे काण्डे

याजमाने च। आज्यं यैर्गृह्यते "पञ्चानां त्वा वातानां यन्त्राय धर्त्राय गृह्णामि" इत्येवमादयः। तथा स्रुग्व्यूहने—"वाजस्य मा प्रसवेनोद्ग्राभेणोदग्रभीत्" इति। तत्र सन्देहः—किं त उभाभ्यामपि कर्तव्याः? उताध्वर्युणैवेति। इदानीं तत्र समाख्यानिबन्धनैककर्तृकतापवादः क्रियते।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षः—यद्यपि सामान्यसमाख्यातो विशेषसमाख्या बलीयसी, तथापि मन्त्राणामनुष्ठेयप्रकाशनेनार्थवत्वात्कर्मणश्च समाख्यया अध्वर्युकर्तृकत्वाद्येनैव कर्म कर्तव्यम्, तस्यैव कर्मप्रकाशनार्थं मन्त्रप्रयोगोऽपेक्षित इत्यपेक्षातारतम्यात्समान्यसमाख्यैव बलीयसीत्यध्वर्युणैव मन्त्राः प्रयोक्तव्याः। तेन यदेतद्याजमानकाण्डे समाम्नातं तत्स्वरूपज्ञानार्थम्। तस्याध्वर्युकर्तृविनियोगार्थत्वमिति। एवं प्राप्ते—

( सिद्धान्तः )

अभिधीयते—भवेदेवं याजमाने समाम्नानमन्यथा यद्युपपद्येत। तथाहि—न तावन्मन्त्रस्वरूपज्ञानार्थम्, तस्याध्वर्यवे पाठमात्रसिद्धत्वात्। तेन याजमाने काण्डेऽपि समाम्नाते अन्यप्रयोजनत्वाद्यजमानप्रयोगार्थमेव। न च यजमानप्रयोगो निष्प्रयोजनः। यथाहि अध्वर्युणा पदार्थाः कर्तव्यास्तथा यजमानेन प्रदानार्थं

प्रत्यवेक्षितव्यम् । तेनोभाभ्यामेव मन्त्रप्रयोगस्यापेक्षितत्वादुभाभ्यामेव प्रयोक्तव्यमिति । यत्र तु याजमाने समाम्नानं नास्ति तत्रोपायान्तरेण प्रत्यवेक्षिष्यते । इह तु विद्यमानत्वादाशासनमन्त्रैरेवेति सिद्धम् ।

प्रयोजनम्—पक्षोक्तम् । सूत्रन्तु—द्व्याम्नाते उभावप्यध्वर्युयजमानौ प्रयोजकौ । एवं सन्निध्याम्नानस्यार्थवत्वं भवतीति ॥

इति सप्तमं द्व्याम्नातानामुभयार्थत्वाधिकरणम् ॥ ७ ॥

## अथाष्टममभिज्ञवाचनाधिकरणम्

ज्ञाते च वाचनं न ह्यविद्वान्विहितोऽस्ति ॥३. ८. १८॥

( विषयसंशयौ )

वाजपेये श्रूयते—"क्लृप्तीर्यजमानं वाचयति । उज्जितीर्यजमानं वाचयति" इति । तत्र सन्देहः—किं ज्ञश्चाज्ञश्च सर्वो वाचयितव्यः ? उत ज्ञ एवेति । इदानीं समाख्यया वाचनस्याध्वर्युकर्तृकत्वे सिद्धे वाचयितव्यविशेषः प्रसङ्गान्निरूप्यते ।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षः—"क्लृप्तीर्यजमानं वाचयति" इत्यत्र यजमानविशेषो न श्रूयते । तथाच मन्त्रज्ञो यजमानोऽमुं मन्त्रं पठेदिति

प्रयुङ्क्ते मन्त्रेण वोच्यते । तथैव मन्त्रज्ञोऽपि प्रतिपदमुच्चार्य वाचयितव्यः । (१)अतएव न द्वौ वाचयितव्यौ । अथवा यो मन्त्रज्ञः स प्रयुक्तिमन्तरेणापि स्वत एव मन्त्रमुच्चारयत्येव । तेन वाचनविधानार्थवत्त्वायाविद्वानेव वाचयितव्य इति । एवं प्राप्ते—

( सिद्धान्तः )

अभिधीयते—भवेदेवं यदि कामश्रुतिपरिगृहीतमध्ययनं भवेत् । तदा ह्यमन्त्रज्ञोऽपि प्रयोगकाले पादं वा खण्डशो वा वाचयति । किन्त्वेतावदेव श्रूयते—"स्वाध्यायोऽध्येतव्यः" इति । तथाच सत्यन्यथोपलब्धविद्यमेवाधिकरिणमध्येतव्य इत्यासाद्य क्रतुविधयश्चरितार्थाः न प्रयोगे शाब्दमन्त्रशिक्षणां प्रयुञ्जते, अनारभ्यश्रुताधानसिद्धमग्निं प्राप्य लब्धविधयो यथा प्रयोगकाले नाधानं प्रयुञ्जते । यत्तु मन्त्रज्ञस्य वाचनमनर्थकमिति अमन्त्रज्ञ एव वाचयितव्य इत्युक्तम्, सत्यपि ज्ञाने नाप्रयुक्तो नियमेन ब्रूते । नाग्निना विहरेदिति प्रैषवचनं मन्त्रज्ञेऽपि वचनस्यार्थवत्त्वान्नाज्ञ एव वाचयितव्य इति । किञ्च वाचयतीति वचने नियुञ्जीतेति विध्यर्थमशिक्षितस्य वाचनाशक्तेः शिक्षयाक्षेप्तव्या । सा चाध्ययनविधिनाध्ययनोपायेनैव कर्मविधिपरिगृहीतेनाध्वर्युणा प्रयोगे शब्दतः कर्त्तव्येति । अतो मन्त्रस्यैवाधिकारान्मन्त्रज्ञ एव वाचयितव्य इति सिद्धम् ।

प्रयोजनम्—पत्तोक्तम्। सूत्रन्तु—ज्ञातमन्त्रस्यैव यजमानस्य वाचनममन्त्रज्ञस्याधिकाराभावादिति।

इत्यष्टममभिज्ञवाचनाधिकरणम् ॥ ८ ॥

अथ नवमं द्वादशद्वन्द्वानामाध्वर्यवत्वाधिकरणम्

याजमाने समाख्यानात्कर्माणि याजमानं स्युः ॥३.८.१९॥

( विषयसंशयसङ्गतयः )

स्तो दर्शपूर्णमासौ। तत्र याजमाने कर्माण्याम्नातानि द्वादश द्वन्द्वानि—"वत्सञ्चोपावसृजत्युखां चाधिश्रयति, अव च हन्ति, दृषदुपुले च समाहन्ति, अधि च वपते, कपालानि चोपदधाति, पुरोडाशञ्चाधिश्रयति आज्यञ्च, स्तम्बयजुश्च हरति, अभि च गृह्णाति, वेदिञ्च परिगृह्णाति, पत्नीं सन्नह्यति, प्रोक्षणीश्चासादयति, आज्यञ्चैव एतानि वै द्वादशद्वन्द्वानि दर्शपूर्णमासयोः" इति। तत्र सन्देहः—किमेतान्यध्वर्योः कर्माणि ? उत यजमानस्येति। इदानीं सामान्यसमाख्यया विशेषसमाख्याया बाधः प्रसङ्गात्प्रतिपाद्यते।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षः—उखाधिश्रयणावहन्त्यादीनि द्वादशकर्मद्वन्द्वानि अध्वर्युवेदे याजमाने काण्डे समाम्नातानि। न च तानि आम्नातमन्त्रेण तदुभाभ्यां कर्तुं शक्यन्ते। तत्र हि मन्त्रैकत्वेऽपि

पाठद्वयं स्यात् (१) दानविधिसमर्पितस्य विधियोगतः सामर्थ्ये प्रयोगः। तयोश्च प्रयोगविधिपरिगृहीतत्वात्कर्तृद्वयं सावकाशम्। उखाधिश्रयणादिकर्मणान्त्वनुष्ठानद्वयेन केनचित्समर्पितमिति सकृदेव प्रयोगवचनगृहीतानि सकृदेव कर्त्तव्यानि। न च द्वादशकर्मणां द्वन्द्वभूतानां स्वरूपमात्रेणाध्वर्युवेदाम्नानं द्वन्द्वरूपेण याजमानकाण्डे समाख्यातसामान्यरूपं द्वन्द्वं यजमानेन कर्त्तव्यं, कर्माणि चाध्वर्युणेति सम्भवति, सामीप्यस्याकर्मत्वेन कर्तृभेदासम्भवात्। तेनैतच्छ्रूयमाणानां कर्मणां न समाख्यासामान्येन कर्त्रन्तरप्रयुक्तिः। तेनैककर्तृत्वे सति अध्वर्युवेदसमाख्यातो याजमानकाण्डसमाख्याया विशेषरूपत्वेन बलीयस्त्वाद्विशेषसमाख्यावशात्सामान्यसमाख्यां बाधित्वा यजमानेनैव कर्माणि कर्त्तव्यानि। आम्नानञ्चोत्पत्तिविनियोगाभ्यासेनैवोपपन्नमिति। एवं प्राप्तेऽभिधीयते—

अध्वर्युर्वा तदर्थो हि न्यायपूर्वं समाख्यानम् ॥३.८.२०॥

( सिद्धान्तः )

अयमभिप्रायः—भवेदेवं यदि कर्मणां विधानं याजमानकाण्डे भवेत्। किन्त्वध्वर्युवेदविहितानामेव कर्मणां द्वन्द्वतामात्रं याजमाने विधीयते। "एतानि वै द्वादश द्वन्द्वानि दर्शपूर्णमासयोः" इति याजमानकाण्डे श्रवणात्। न तु द्वन्द्वतारूपगुणानुरोधेन कर्मणामपि प्रधानभूतानां याजमानत्वं सम्भवति। अङ्गगुण-

विरोधन्यायविरोधात् । तेन कर्मणामाध्वर्यवसमाख्यया अध्वर्युकर्तृकत्वात्तदनुरोधेन द्वन्द्वानामपि कर्मणामन्योन्यसामीप्यरूपमध्वर्युकर्तृकत्वमेव । याजमानकाण्डे तु द्वन्द्वताविधानं न्यायात्तु विस्तारेण याजमानस्य स्मारकमेवेति सिद्धम् ।

प्रयोजनम्—पक्षोक्तम् । सूत्रन्तु—अध्वर्युरेव द्वन्द्वेषु कर्मसु कर्त्ता कर्मा मेव तस्यानुवादकत्वाद्याजमानसमाख्यानं तत्स्मृतिमात्रप्रयोजनं न्यायवशादिति ॥

इति नवमं द्वादशद्वन्द्वानामाध्वर्यवत्वाधिकरणम् ॥९॥

अथ दशमं होतुः करणमन्त्रानुष्ठातृत्वाधिकरणम्

विप्रतिषेधेन करणः समवायविशेषादितरमन्यस्तेषां यतो विशेषः स्यात ॥ ३. ८. २१ ॥

( विषयसंशयसङ्गतयः )

अस्ति ज्योतिष्टोमे अग्नीषोमीयः पशुः । तस्य यूपस्य परिव्याणे मन्त्रौ—एक आध्वर्यवः "परिवीरसि" इति करणः, अपरो होतुः "युवा सुवासाः" इति क्रियमाणानुवादः । तयोश्चोदकपरम्परया कुण्डपायिनामयनं प्राप्तयोर्भवति सन्देहः । कः पुनरसौ ? तत्र ऋत्विक्समास आम्नातः—"यो होता सोऽध्वर्युः" इति ।

किं करणमात्रमाध्वर्यवं होता कुर्यात् ? किं वा हौत्रं क्रियमाणानुवादिनमिति । इदमपि प्रसङ्गादनन्तरं निरूप्यते ।

( पूर्वपक्षसिद्धान्तौ )

अत्रायं पूर्वपक्षः—"परिवीरसि युवा सुवासाः" इत्येतयोः करणक्रियमाणानुवादिनोरध्वर्युणा होत्रा च प्रकृतौ युगपत्प्रयुक्तयोः कौण्डपायिनामयने "यो होता सोऽध्वर्युः" इति वचनेन होत्रध्वर्युकर्मणोरेककर्तृकत्वमेवावगम्यते । तत्रापि प्रथमोपनिपतितमनुपजातविरोधं होतृशब्दमेव मुख्यार्थं परिगृह्य चरमोपनिपतितो विरोधदशां प्राप्तोऽध्वर्युशब्दः कार्यलक्षणार्थो वर्णनीयः । तेन होत्रैव करणक्रियमाणार्थानुवादिनौ मन्त्रौ प्रयोक्तव्याविति प्राप्नोति । न चोभयमन्त्रप्रयोगं कर्तुं युगपदेकः शक्नोतीत्यनियमेन कदाचित्करणमन्त्रस्य कदाचित्क्रियमाणानुवादिनो मन्त्रस्य होत्रा प्रयोगः कर्त्तव्य इति । अथवा "यो होता सोऽध्वर्युः" इत्यजहत्स्वकार्यस्यैव होतुराध्वर्यवविधानात् स्वतन्त्रं क्रियमाणानुवादी होत्रा प्रयोक्तव्यः । आध्वर्यवः करणमन्त्रः ।

प्रयोगान्वयस्तु "यो होता सोऽध्वर्युः" इत्येतस्मादुपदेशात् । अतिदेशाच्चोपदेशो बलवानिति करणमन्त्र एव होत्रा प्रयोक्तव्यः । यत्त्वजहत्स्वकार्य एव होता आध्वर्यवेण सम्बध्यत इत्युक्तम्, न हि होत्रा योगाद्धौत्रम् । अपि तर्हि होतुः

कर्म हौत्रम् । यथा राज्ञः कर्म राज्यम्, न तु राज्ययोगाद्राजेति । तेनर्ग्वेदाध्ययनमात्रेणैव योग्यतया होत्रान्वयसिद्धेः परित्यक्तस्वकार्यस्यापि होतुराध्वर्यवे विधानोपपत्तेः, उपदेशसामर्थ्यात् होत्रा करण एव मन्त्रः प्रयोक्तव्यः । होतृप्रतिपुरुषेण क्रियमाणानुवादी मन्त्रः प्रयोक्तव्य इति । ननु करणस्य 'मन्त्रान्तेन कर्मादिसन्निपातः' ( जै. सू. १२. ३. २० ) इत्यनेन न्यायेन परिव्याणात्प्रागेव करणमन्त्रस्य प्रयोगः प्राप्नोति, क्रियमाणानुवादिनस्तु क्रियमाण एव परिव्याणे प्रयोगः । तेन भिन्नकालयोर्मन्त्रयोरेकेनापि होत्रा प्रयुज्यमानयोर्न कश्चिद्विरोधः । तदुक्तम्—

एककालप्रयोगो हि विरोधो मन्त्रयोर्भवेत् ।
करणः प्राक् क्रियातस्तु परतश्चेतरः स्थितः ॥ इति ।

(तं. वा., पृ. ११२५)

उच्यते—क्रियमाणता हि परिव्याणस्याद्यपरिस्पन्दात्प्रभृतिसमाप्तिपर्यन्तम् । तेनाद्यपरिस्पन्दात्प्रभृत्येव क्रियमाणानुवादिनः कालः । "युवा सुवासाः परिवीरसि" इति मन्त्रेऽपि असीत्यनेन सन्निहितो यूपो निर्दिश्यते । रशनाच्छादनाय परिव्याणाय यूपमुपस्थितस्यासौ यूपः सन्निहितो भवति । तत एवाद्यपरिस्पन्दात्प्रभृतिपरिव्याणवर्त्तमानत्वम् । अतः समकालत्वाद्भवति विरोधः । एवञ्च सत्युपदेशात् होतृप्रतिपुरुषेणैव प्रयोक्तव्यः ।

प्रतिपुरुषेषु मध्ये यस्मिन्विशेषो गृह्यते प्राधान्येन वा कार्यतान्वयग्रतया वा तेनैव प्रयोक्तव्य इति ।

इति दशमं होतुः करणमन्त्रानुष्ठातृत्वाधिकरणम् ॥ १० ॥

अथैकादशं प्रैषप्रैषार्थयोर्भिन्नकर्तृकत्वाधिकरणम्

प्रैषेषु च पराधिकारात् ॥ ३. ८. २२ ॥

( विषयसंशयसङ्गतयः )

स्तो दर्शपूर्णमासौ । तत्र प्रैषः समाम्नातः—"प्रोक्षणीरासादय, इध्माबर्हिरुपसादय, स्रुवञ्च स्रुचश्च सम्मृड्ढि, पत्नीं सन्नह्याज्येनोदेहि" इति । तत्र सन्देहः—किं य एव प्रैषे स एव प्रैषार्थे ? उतान्य इति । प्रासङ्गिकं समाप्येदानीं प्रकृत एव समाख्याया लिङ्गेन विरोधश्चिन्त्यते ।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षः—प्रोक्षणीरासदय" इत्यादिप्रैषमन्त्रस्य प्रोक्षणासादनादिरूपस्य प्रैषार्थस्य समाख्यया अध्वर्युकर्तृकत्वमेव गम्यते । तेन द्वयोरेक एवाध्वर्युः कर्त्ता । न चात्मनि प्रैषासम्भवेन प्रैषरूपलिङ्गविरोधादेक एवाध्वर्यवसमाख्याबाधेन भिन्नकर्तृकत्वमिति वाच्यम् । यतो नैवायं प्रैषः, किन्तर्हि ? प्राप्तकालतायामयं लोट्प्रत्ययः । तत्रापि लोट्प्रत्ययानुशास-

नात्तस्य चात्र प्रसम्भवात् । ततः "प्रोक्षणीरासादय" इति प्रोक्षण्यासादनरूपायाः प्राप्तकाल इत्यर्थो भवति । तथा च सत्येक एवाध्वर्युः प्राप्तकालतां निर्दिश्य प्रोक्षण्यासादनं करिष्यति । भवतु प्रैषार्थत्वं तथाप्येक एवाध्वर्युः शरीरिशरीरयो-रर्थान्तरत्वात् भेदमाश्रित्य प्रैषकः प्रैषश्च भविष्यतीत्येककर्तृकत्व-मेवेति । एवं प्राप्ते—

( सिद्धान्तः )

अभिधीयते—भवेदेवं यदि प्राप्तकालतायामत्र लोट्-प्रत्यय उपपद्यते । तथाहि—"प्रोक्षणीरासादय" इति मध्यम-पुरुषनिर्देशोऽयम् । अधमश्च प्रैष्यो वक्तव्यः । स चान्तर्भावित-युष्मदर्थत्वात्पुरोवर्त्तिकर्तृविषय एव परं भवति । यथा 'माणवक समिधमाहर' इति । प्राप्तकालायाश्च क्रियायाः प्राप्त-कालता वक्तव्या । न च तत्र युष्मदर्थः कथञ्चिदपि सम्भवति, असन्निधानात् अचेतनत्वाच्च । न च प्राप्तकाल इति क्रियाया निर्देशस्सम्भवेत् । तेन प्राप्तकालतेयं प्रथमपुरुष एव कथञ्चि-त्सम्भवति, न तु मध्यमोत्तमपुरुषयोः सम्भवति । सम्भवति तु प्रैषार्थत्वे सन्निहितस्य पुरुषान्तरस्य युष्मदर्थत्वोपपत्तेः । तेन प्रैषाभिधायकमन्त्रलिङ्गविरोधात्प्रैषार्थयोर्भिन्नकर्तृकत्वमेव । यत्तु शरीरिशरीरयोरर्थान्तराणां चाभेदे सत्येकस्यैव प्रैषकत्वं प्रेष्यत्वञ्च

भविष्यतीत्युक्तम्, तदयुक्तम्; प्रैषस्यादृष्टार्थत्वप्रसङ्गात्। विनापि प्रैषं शरीरिप्रयत्नादेव शरीरचेष्टोत्पत्तेः गौणत्वप्रसङ्गाच्च। श्रुत्यविरोधे मुख्यार्थत्वमेव मन्त्राणां न गौणत्वमित्यवधारितं गुणमुख्याधिकरणे। तस्मादेवमपि नैककर्तृकत्वं प्रैषप्रैषार्थयोः, किन्तु भिन्नकर्तृकत्वमेवेति सिद्धम्।

प्रयोजनम्—पक्षोक्तम्। सूत्रन्तु—प्रैषेषु यः कर्ता ततोऽन्यः प्रैषार्थः प्रैषस्य स्वभावतोऽन्यविषयत्वादिति॥

इत्येकादशं प्रैषप्रैषार्थयोर्भिन्नकर्तृकत्वाधिकरणम्॥ ११॥

अथ द्वादशं प्रैषस्याध्वर्यवत्वाधिकरणम्

अध्वर्युस्तु दर्शनात्॥ ३. ८. २३॥

( संशयशङ्गती )

अथैवं गते इदं सन्दिह्यते—किमध्वर्युरग्नीधं प्रेष्यति? उताग्नीदध्वर्युमिति। इदं प्रसङ्गान्निरूप्यते।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षः—द्वयोस्तावत्प्रैषप्रैषार्थयोः पूर्वोक्तेन न्यायेनैककर्तृकत्वासम्भवादवश्यमेकत्र प्रैषसामाख्याप्राप्तकर्तृसम्बन्धो बाधनीयः। तत्र प्रैषार्थस्य प्रधानत्वात्प्रैषस्य तदर्थत्वेन तद्गुणत्वे सद्धन्तर्भूतत्वात् 'अङ्गगुणविरोधे च तादर्थ्यात्' (जै. सू. १२. २. २७)

इति न्यायेनाङ्गभूते प्रैष एवाध्वर्युकर्तृकत्वबाधो न तु प्रधानभूते प्रैषार्थे। किञ्च बहवो हि प्रैषार्थाः प्रैषश्चैक एव निगदत्वेन, 'भूयसां स्यात्सधर्मत्वम्' (जै. सू., १२. २. २४.) इत्यनेन न्यायेन प्रैष एवाध्वर्युबाधो युक्तो न तु प्रैषार्थेषु बहुषु। तथा लिङ्गदर्शनादप्यमुमेवाध्वर्युकर्तृकत्वं दर्शयति। एवं हि श्रूयते—"यदन्वञ्चं धारयेद्वज्रो वै स्फ्यः, वज्रेणाध्वर्युं क्षिणुवीत" इति। स्फ्यस्य धारणं तावदेकान्तेनाग्नीध्रकर्तृकं, तस्यैव तदानीमध्येयत्वात्। यस्य च हस्ते स्फ्यः स एव प्रेष्यतीत्युचितम्। यतो लोके यः कर्मकरं प्रेष्यति, सोऽवश्यमभिहितार्थं सङ्कल्प्य दृढीकरणार्थञ्च किञ्चिद्दण्डादिकं धारयति। अध्वर्यु......श्चेति अध्वर्युगतदुःखावगमात् अग्नीध एव प्रैषार्थत्वमध्वर्युणैव कर्त्तव्यमिति। एवं प्राप्तेऽभिधीयते—

गौणो वा कर्मसामान्यात् ॥ ३. ८. २४ ॥

(सिद्धान्तः)

अयमभिप्रायः—भवेदेवं यदि मुख्यः प्रैषो न भवेत्। तथाहि—समाख्यया तावत्प्रैषप्रैषार्थयोरध्वर्युकर्तृकत्वमवगम्यते। प्रथमश्चैव प्रैषः कर्त्तव्यः। तदनन्तरञ्च प्रैषार्थ इत्यपि व्यवस्थितम्। प्रैषाधीनत्वात्प्रैषार्थानुष्ठानस्य। तत्रान्यतरस्याध्वर्युकर्तृकत्वपरिग्रहे 'मुख्यं वा पूर्वचोदनाल्लोकवत्' (जै. सू. १२. २. २४) इत्यनेन

न्यायेन प्रैष एव मुख्यभूतेऽध्वर्युकर्तृकत्वं न्याय्यम्। न हि तयोः कश्चिद्विरोधोऽस्ति, यस्मिन्नध्वर्युणा कृते प्रैषार्थे विरोधादन्यः कर्त्ता भवति। स च मन्त्रलिङ्गादाग्नीध्रः। न चास्याङ्गगुणविरोधन्यायविषयत्वम्। प्रैषद्वारेणैव प्रयोजनकस्याध्वर्योः प्रैषत्वेऽपि प्रयोजकव्यापारे कर्तृत्वविरोधात्। अध्वर्योस्तु प्रैषार्थकरणे प्रैषे (?) अन्तमेवाध्वर्युकर्तृकत्वस्य। यतो न हि तेनासौ कृतः कारितो वा। न च प्रैषार्थस्य बहुत्वादध्वर्युकर्तृकत्वानुग्रहः, प्रैषाणामपि बहुत्वात्। अथ प्रैषाणां निगदत्वेनैककर्तृता, तदा प्रैषार्थानामङ्गत्वेनैककर्तृत्वान्न विरोधः। यत्त्वध्वर्युः स्तीर्येतेति लिङ्गदर्शनम्, तदयुक्तम्; तत्प्रापकप्रमाणानुसारित्वेनाध्वर्युकर्मकारित्वेनाग्नीध्रमेवाध्वर्युशब्दः प्रतिपादयिष्यतीति तदप्युपपन्नमेवेति। तस्मादध्वर्युप्रेषितोऽग्नीदादिः प्रैषार्थं कुर्यादिति सिद्धम्।

प्रयोजनम्—पक्षोक्तम्। सूत्रन्तु—अग्नीध एव गौणोऽध्वर्युशब्दः कर्मसामान्यात् समानकर्मकारित्वादिति॥

इति द्वादशं प्रैषस्याध्वर्यवत्वाधिकरणम् ॥१२॥

अथ त्रयोदशं करणमन्त्रफलस्य याजमानताधिकरणम्

ऋत्विक्फलं करणेष्वर्थवत्वात् ॥ ३. ८. २५ ॥

( विषयसंशयसङ्गतयः )

दर्शपूर्णमासयोस्समामनन्ति—"ममाग्ने वर्चो विहवेष्वस्त्विति पूर्वमग्निं परिगृह्णाति" इति। तत्र सन्देहः—किमृत्विजः फलमाशासितव्यम् ? उत यजमानस्येति। इदमपि मन्त्रप्रसङ्गान्निरूप्यते।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षः—दर्शपूर्णमासप्रकरणेऽग्न्यन्वाधाने "ममाग्ने वर्चो विहवेष्वस्त्विति पूर्वमग्निं गृह्णाति" इति करणमन्त्रोऽयं विधीयते। अस्य चायमर्थः—हे अग्ने मम वर्चो मम तेजो विहवेषु स्पर्धास्थानेष्वस्तु भवत्विति। अग्न्यन्वाधानञ्च आहितस्याग्नेः कर्मानुष्ठानार्थः पुनरारोपणम्। तच्च समाख्यया अध्वर्युकर्तृकमिति व्यवस्थितम्। करणमन्त्रप्रयोगेऽप्ययं प्रधानसमानकर्तृकत्वानुरोधेनाध्वर्युकर्तृक एव। न च यजमानगामि फलमध्वर्युणा ममेति स्वसम्बन्धितया निर्देष्टुं शक्यते। अस्ति चाध्वर्योरपि तद्भावभावितया सम्यक्कर्मानुष्ठानस्वरूपम्। अतस्तदेवाध्वर्युप्रोत्साहनार्थं मन्त्रेण प्रकाश्यते। तेन करणमन्त्रेषु ममेति मन्त्रलिङ्गस्यार्थवत्वादेवाध्वर्युगतमेव फलमाशासितव्यमिति। एवं प्राप्तेऽभिधीयते—

स्वामिनो वा तदर्थत्वात् ॥ ३. ८. २६ ॥

( सिद्धान्तः )

अयमभिप्रायः—भवेदेवं यद्यग्न्यन्वाधानाङ्गं मन्त्रो न भवेत्। तथाहि—करणमन्त्रोऽयमग्न्यन्वाधानाङ्गमिति स्थितम्। तदङ्गता च तत्प्रकाशनेन तत्सम्बन्धिप्रकाशनेन वोदितं मन्त्रकरणत्वान्यथानुपपत्त्या यदनेन मन्त्रेण फलं प्रकाश्यते, तदग्न्यन्वाधानस्यैव फलमिति कल्प्यते। अग्न्यन्वाधानस्य फलं यजमानगतमेव, "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इत्यधिकारवाक्यगतात्मनेपदश्रुतिबलेन साङ्गप्रधानफलस्यैव यजमानगामित्वावधारणात्। एवञ्च सत्यात्मनेपदश्रुतिविरोधान्न ममेति पदावगतं मन्त्रलिङ्गमन्यार्थं वर्णनीयम्। मम यजमानस्यैवेत्यध्याहारेण वा मद्रूपस्य यजमानस्येति गौणत्वेन वा। तस्मात्करणमन्त्रप्रकाश्यं फलं यजमानगतमेवेति सिद्धम्।

लिङ्गमप्येतमेवार्थं दर्शयति— "यां वै काञ्चन यज्ञे ऋत्विज आशिषमाशासते यजमानस्यैव सा" इति। यत्र पुनः करणमन्त्रप्रकाश्यमपि फलं प्रकृतप्रयोगोपयोगितया ऋत्विग्गतत्वेनैव यजमानस्यापेक्षितम्, तत्र तथाभूतस्यैव क्रियाफलस्य यजमानकर्त्रभिप्रेतत्वेनात्मनेपदश्रुत्यविरोधादृत्विग्गामित्वमेव। यथा— "अग्नाविष्णू मा वामवक्रमिषं विजिहाथां मा मा सन्ताप्तम्" इति। अत्र ऋत्विग्गतमप्यसन्तापरूपं यजमानस्यापेक्षितम्—असन्तप्तो-

ऽध्वर्युः सुखं कर्म करोतीति। तदुक्तं सूत्रे— 'कर्मार्थन्तु फलं तेषां स्वामिनं प्रत्यर्थवत्वात्' प्रयोजनवत्वादिति। तथा यत्राध्वर्युयजमानयोः फलसम्बन्धः तत्राध्वर्योरपि भवत्यार्त्विजमपि फलम्। तथाहि दक्षिणहविर्द्धानस्याधस्ताश्चत्वारः प्रादेशा उपरवाः प्रादेशान्तरालाः, तत्र हस्तौ प्रवेश्याध्वर्युर्यजमानमाह—किमत्रेति? भद्रमिति स प्रत्याह। अध्वर्युराह नौ सह इति। तद्भद्रमावयोः सहितयोरित्यर्थः। अत्राप्यध्वर्योर्भद्रं कल्पितं प्रकृतप्रयोगसामर्थ्यार्थं यजमानस्यापेक्षितमेवेति। अत्रापि यजमानाभिप्रेतत्वात्क्रियाफलस्यात्मनेपदश्रुत्या मन्त्रलिङ्गस्याविरोध इत्यृत्विग्गतमपि फलमिति। तदुक्तं सूत्रे—'व्यपदेशाच्च' इति। अध्वर्योः साम्राज्यस्य क्रतुसाहित्यव्यपदेशादित्यर्थः। तेनैतत्सूत्रद्वयं प्रत्युदाहरणत्वेन पूर्वाधिकरणशेषभूतमेवेति नाधिकरणान्तरमिति भ्रमितव्यम्।

प्रयोजनम्—पूर्वपक्षे वर्चो विहवेष्विति यजमानफलकामना न कर्त्तव्या। सिद्धान्ते तु कर्त्तव्येति। सूत्रन्तु—स्वामिन एव फलम्, तदर्थत्वात्साङ्गप्रधानफलस्येति॥

इति त्रयोदशं करणमन्त्रफलस्य याजमानताधिकरणम्॥ १३॥

अथ चतुर्दशं धर्माणां प्राकृतकार्यार्थत्वाधिकरणम्

द्रव्यसंस्कारः प्रकरणाविशेषात्सर्वकर्मणाम् ॥३.८.३०.॥

( विषयसंशयसङ्गतयः )

दर्शपूर्णमासयोर्बर्हिर्धर्माः श्रूयन्ते । तेषु सन्देहः—किमङ्ग-प्रधानार्था एते ? उत प्रधानार्थाः ? इति । 'सर्वेषां वा शेषत्वस्या-तत्प्रयुक्तत्वात्' ( जै. सू., ३. ७. २. ) इत्यनेन न्यायेन बर्हिरा-द्यधर्माणामङ्गप्रधानबर्हिराद्यर्थत्वं सिद्धमेवेत्युत्तराधिकरणविवक्षार्थं प्रसिसूत्रमेतदिति भाष्यकारेण पूर्वपक्षयित्वा व्याख्यातम् । "बर्हिषा यूपावटमवस्तृणाति" "आज्येन यूपमनक्ति" इति पूर्वपक्ष-सूत्रमेवैतदिति यथावार्त्तिकमेवाधिकरणं प्रस्तूयते—'द्रव्यसंस्कारः प्रकरणाविशेषात्सर्वकर्मणाम्'। ज्योतिष्टोमे पशुरग्नीषोमीयः—"यो दीक्षितो यदग्नीषोमीयं पशुमालभते" इति । तत्र श्रूयते—"बर्हिषा यूपावटमवस्तृणाति" "आज्येन यूपमनक्ति" इति । तत्र सन्देहः—किमेतयोराज्यबर्हिषोराज्यबर्हिर्धर्माः प्राकृताः कर्त्तव्याः ? उत नेति । समाख्यायाः श्रुत्यादिभिः सह विरोधाविरोधविचारं परिसमाप्येदानीं यदेतत् 'सर्वेषां वा शेषत्वस्य तत्प्रयुक्तत्वात्' इत्य-नेन बर्हिरादिधर्माणामङ्गप्रधानार्थत्वमुक्तम्, तत्किं प्रकृतिवद्विकृति-ष्वपि ? उत प्रकृतावेवेति प्रसङ्गान्निरूप्यते ।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षः—प्रकृतिवद्विकृतिः कर्त्तव्येत्यनेन शास्त्रेण विकृतावपि भावनायामाज्यधर्मा बर्हिर्धर्माश्च प्राप्ता एव। यथा च ते प्रकृतौ बर्हिरादिद्रव्यसंस्काराः सर्वेषामेवाविशेषादङ्गप्रधान-कर्मसम्बन्धिनां बर्हिरादीनामतिदेशतो बर्हिर्धर्माश्चाज्यधर्माश्च कर्त्तव्या इति। एवं प्राप्तेऽभिधायते—

निर्देशात्तु विकृतावपूर्वस्यानधिकारः॥ ३. ८. ३१॥

( सिद्धान्तः )

अयमभिप्रायः—भवेदेवं यद्यङ्गोपदेश एवानुषङ्गरूपेण प्रकृतिविकृतिसाधरणो भवेत्, अथवा शास्त्रमेवातिदिशेत्। तथा सति प्रकृतिवद्विकृतावपि कल्प्यमानः शास्त्रार्थः सर्वार्थत्वे-नावधार्येते, न त्वेतदुभयमप्यस्ति। व्यवधानेनानुषङ्गाभावाद्वै-कृतप्रधानापूर्वानपेक्षितत्वेन शास्त्रातिदेशस्यानाशङ्कनीयत्वात्। यतो महोपकाराकाङ्क्षिणी विकृतिभावना महोपकारमेव प्राकृतं गृह्णाति। उपकारसिध्यर्थं चात्रावघातजन्यानि नियमादृष्टद्वारभूतानि दृष्टानि वैतुष्यादीनि, अदृष्टानि च मोक्षणप्रयाजादिजन्यावान्तर-कार्याणि गृह्णाति। तानि च ज्ञानपरिमाणान्येव प्राप्नुवन्ति। तैश्चात्मसिध्यर्थं पदार्थाः प्रत्यात्मनियता एव प्राप्यन्ते। न च प्रकृतौ यूपावटस्तरणं नाम बर्हिःकार्यं विज्ञातम्। तेन विकृतौ

तद्वारेण यूपावटास्तरणे बर्हिर्धर्मा भवेयुः । किञ्चापूर्वमेवेदं विकृतौ यूपावटास्तरणार्थं बर्हिः । अतो नास्य प्राकृतकार्यसम्बन्धाभावात्प्राकृतधर्मग्रहणमिति । एवं "आज्येन यूपमनक्ति" इत्यत्रापि यूपजन्यसाधनस्याज्यस्य न प्राकृतस्वधर्मग्रहणमिति । ननु मा नाम वैकृतभावनागतमहोपकाराकाङ्क्षाद्वारेण यूमावटास्तरणबर्हिः प्राकृतबर्हिर्धर्मान् गृह्णातु, यूपाञ्जनाद्यर्थमाज्यमाज्यधर्मान्, तथापि स्वाकाङ्क्षयैव वैकृतं बर्हिर्बर्हिर्धर्मान् वैकृतश्चाज्यमाज्यधर्मान् प्रग्रहीष्यति, यथा च फलचमसः सोमधर्मानिति । मैवम्; अपेक्षावशेन हि सर्वत्रातिदेशाद्धर्मग्रहणं भवति । तत्र फलचमसेन यजेतेत्यत्र किं सोमवद्द्रवीभूतेनाभिषवस्वरूपेण वेत्यपेक्षायां सोमस्थानीयद्रव्येणातिदेशाद्धर्मग्रहणम् । "बर्हिषा यूपावटमवस्तृणाति" इत्यत्र तु स्वरूपेणैव बर्हिषस्स्तरणसाधनत्वम् । तस्य लोकसिद्धत्वान्नास्त्यपेक्षेति नातिदेशाद्धर्मलाभ इति वैषम्यम् ।

प्रयोजनम्—पक्षोक्तम् । सूत्रन्तु—निर्देशात्प्राकृतकार्यसम्बन्धेनैव धर्माणां निर्देशात् । प्राकृतकार्यापन्नस्य बर्हिष आज्यस्य च धर्मसम्बन्धः नाधिकारः स्यादिति ॥

इति चतुर्दशं धर्माणां प्राकृतकार्यार्थत्वाधिकरणम् ॥ १४ ॥

## अथ पञ्चदशं लवनस्यासर्वार्थत्वाधिकरणम्

## विरोधे च श्रुतिविशेषादव्यक्तः शेषे ॥ ३. ८. ३२ ॥

( विषयसंशयसङ्गतयः )

दर्शपूर्णमासयोरामनन्ति—"समावप्रच्छिन्नाग्रौ दर्भौ प्रादेशमात्रे पवित्रे कुरुते" तथा—"अरत्निमात्रे विधृती करोति" इति। तत्र संशयः—किं वेदिस्तरणार्थस्य बर्हिषो विधृती पवित्रे? उतान्यतः? इति। इदानीं प्रकृतावपि बर्हिर्धर्माणां न सर्वबर्हिरर्थत्वमिति प्रसङ्गान्निरूप्यते।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षः—"बर्हिर्लुनाति" इति लवनविधौ प्रयोजनविशेषाश्रवणाद्यावत्प्रकरणवर्त्तिबर्हिःकार्यार्थमेव लवनमवधार्यते। विधृती पवित्रे अपि बर्हिःकार्ये। तेन तदर्थमपि लवनमिति। एवं प्राप्ते—

( सिद्धान्तः )

अभिधीयते—भवेदेवं यद्यत्र विशेषो न गृह्येत। तथाहि—लूनं बर्हिस्तृणातीति धातुशब्देन स्तरणमभिधीयते। तेन लूनस्य बर्हिषः सकलस्यैव वेदिस्तरणार्थत्वान्नान्यत्र विनियोगः सम्भवतीति। अतोऽसर्वार्थत्वं बर्हिषः, विधृतिपवित्रार्थं दर्भग्रहणमिति सिद्धम्।

प्रयोजनम्—पक्षोक्तम् । सूत्रन्तु—लूनस्य कृत्स्नस्यैव बर्हिषः श्रुतिविशेषाद्वेदिस्तरणे विनियोगाद्विधृतिपवित्रार्थं न तत्र ग्रहणे विरोधादव्यक्तः सामान्यभूतो विधृतिपवित्रार्थदर्भविधिः शेषे परिभोजनीयाभिधाने बर्हिषीति ॥

इति पञ्चदशं लवनस्यासर्वार्थत्वाधिकरणम् ॥ १५ ॥

अथ षोडशं शेषनिधानाधिकरणम्

अपनयश्चैकदेशस्य विद्यमानसंयोगात् ॥३.८.२३॥

( विषयसंशयसङ्गतयः )

ज्योतिष्टोमे श्रूयते—"पुरोडाशशकलमैन्द्रवायवपात्रे निदधाति, धाना आश्विनपात्रे पयस्यां मैत्रावरुणपात्रे" इति । तत्र सन्देहः— किमन्यत एषां क्रिया ? उत प्रकृतेभ्यः ? इति । पूर्वापवादार्थमिदमारभ्यते ।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षः—पुरोडाशशकलादीनामैन्द्रवायवादिपात्रे निधानं पात्रसंस्कारार्थम् । न च प्रकृतानां सवनीययागे विनियुक्तानां पात्रसंस्कारार्थत्वं सम्भवतीति अन्यत एवैन्द्रवायवादिपात्रनिधानार्थं पुरोडाशशकलादय उत्पादयितव्या इति ।

एवं प्राप्ते—

( सिद्धान्तः )

अभिधीयते—भवेदेवं यद्ययं पात्रसंस्कारो भवेत् । किन्तर्हि ? द्वितीयानिर्देशात्कृतप्रयोजनपुरोडाशशकलादिसंस्कार एवायम् । अतोऽत्र संस्कारपक्षे शक्तुवद्विनियोगभङ्गोपपत्तेः सवनीययागार्थपुरोडाशादिशेषाः प्रतिपत्त्यपेक्षिणः । अतस्तेषामेवैन्द्रवायवादिपात्रनिधानमिति सिद्धम् ।

प्रयोजनम्—पक्षोक्तम् । सूत्रन्तु—प्रकृतपुरोडाशद्रव्यादेरेवैकदेशस्यैन्द्रवायवादिग्रहणां विद्यमानसम्बन्धस्यैव द्वितीयाश्रुतिबलेन न्याय्यत्वादिति ॥

इति षोडशं शेषनिधानाधिकरणम् ॥ १६ ॥

अथ सप्तदशमुपांशुत्वस्य प्रधानार्थत्वाधिकरणम्

विकृतौ सर्वार्थः शेषः प्रकृतिवत् ॥ ३. ८. ३४ ॥

( विषयसंशयसङ्गतयः )

इदं समामनन्ति—"यज्ञाथर्वणं वै काम्या इष्टयः ता उपांशु कर्त्तव्याः" इति । तत्र संशयः—किमङ्गप्रधानार्थमुपांशुत्वम् ? उत प्रधानार्थमिति । पूर्वं विकृतावतिदेशात्प्राप्तानां बर्हिराज्यधर्माणामङ्गप्रधानार्थत्वं प्रसङ्गात्सापवादं निरूप्येदानीं विकृतावेवोपदिष्ट-

धर्माणां किमङ्गप्रधानार्थत्वमुत केवलप्रधानार्थत्वमिति प्रसङ्गान्निरूप्यते ।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षः—प्रकृतौ विधीयमानाः साङ्गप्रधानार्थाः । अतः विकृतावप्युपांशुत्वादयो धर्माः साङ्गप्रधानार्था एव । न च काम्या इष्टय इत्यनेन प्रधानमात्रोपादानमिति वक्तव्यम् । साङ्गस्यैव प्रधानस्य कामसाधकत्वात् । अङ्गानामपि काम्यत्वेनोपादानाविशेषात् । तस्माद्विकृतावपि यथाप्राप्तकृत्स्नकार्ये एवोपांशुत्वविधिरिति । एवं प्राप्तेऽभिधीयते—

मुख्यार्थो वाङ्गस्याचोदितत्वात् ॥ ३. ८. ३५ ॥

( सिद्धान्तः )

अयमभिप्रायः—भवेदेवं यदि प्राकृतबर्हिर्धर्मविधितुल्यत्वमस्य भवेत् । तत्र हि प्रकरणात्प्रधानार्थत्वे प्राप्ते बलीयस्त्वादङ्गप्रधानार्थत्वं धर्माणामवधारितम् । इह तु काम्या इष्टय इति श्रवणाद्वाक्यमेव प्रधानार्थत्वं प्रतिपादयति । न च साङ्गस्य कामोपायत्वेनाङ्गानामपि काम्यशब्दवाच्यत्वमिति वक्तव्यम् । यतोऽङ्गानां खलु प्रधानोपकारद्वारेण परम्परया प्रधानोपायत्वम्, प्रधानस्य तु साक्षादेव । न तु साक्षात्सम्भवे परम्पराश्रयणमुचितमिति प्रधानेष्टीनामेव मुख्यकाम्यशब्दवाच्यत्वात्तासामेवोपांशुत्वमिति सिद्धम् ।

प्रयोजनम्—पूर्वपक्षे अङ्गमन्त्रेष्वप्युपांशुत्वं कर्त्तव्यम् । सिद्धान्ते तु प्रधानमन्त्रेष्वेव । सूत्रन्तु—मुख्यार्थ एवायमुपांशुत्वविधिरङ्गस्य कृते अचोदितत्वादिति ॥

इति सप्तदशमुपांशुत्वस्य प्रधानार्थत्वाधिकरणम् ॥ १७ ॥

अथाष्टादशं दृतिनवनीताज्याधिकरणम्

सन्निधानाविशेषादसम्भवादङ्गानाम् ॥ ३. ८. ३६ ॥

( विषयसंशयसङ्गतयः )

श्येने श्रूयते—"दृतिनवनीतमाज्यम्" इति । तत्र सन्देहः—किं नवनीतं प्रधानस्य ? उताङ्गानामिति । पूर्वापवादार्थमिदमारभ्यते ।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षः—दृतौ नवनीतमिति मुख्यसामानाधिकरण्यासम्भवादवश्यमत्राज्यशब्दो विरोधाल्लक्षणावृत्तौ वक्तव्यः । स किं कार्यलक्षणार्थो वा ? संस्कारलक्षणार्थो वा ? प्रकरणानुरोधात्संस्कारलक्षणार्थत्वमेव युक्तम् । तेन यत्र विलापनोत्पवनादिसंस्कारैराज्यशक्तितै (?) विशिष्टं नवनीतम् । आतिदेशिकसमवायित्वस्य (?) तेनैव सम्बध्यते । कार्यलक्षणायान्त्वङ्गार्थत्वात्प्रधा-

नसन्निधानलक्षणां बाध्यते । तस्मात्प्रधानार्थ एव दृतिनवनीतविधिरिति । एवं प्राप्ते—

( सिद्धान्तः )

अभिधीयते—भवेदेवं यद्यत्र द्रव्यस्य विशेषणविधानमुपपद्येत। तथाहि—क्रिया खलु विशिष्टा विधीयते, न द्रव्यम् । कारकाणां परस्परासम्बन्धेन क्रियाविषयत्वादेव विशिष्टविधिः । किञ्च सर्वत्र विशिष्टविधिगौरवभयादप्येकार्थपरत्वमेव । आज्यशब्दस्य कार्यलक्षणायां तदनुवादेनैकदैव समासार्थभूतो दृतिनवनीतपदार्थो विधीयते । न च विशिष्टद्रव्यविषयत्वेन गौरवं विधेरन्याय्यमाश्रितं भविष्यति । तस्मान्नानाशास्त्रविहितातिदेशसन्निधापितसमस्ताज्यकार्यानुवादेनैव दृतिनवनीतविधिरिति सिद्धम् ।

प्रयोजनम्—पक्षोक्तम् । सूत्रन्तु—प्रधानसम्बन्धासम्भवे तदङ्गानामेव दृतिनवनीतविधिः । तेषां सन्निधानविशेषादिति ॥

इत्यष्टादशं दृतिनवनीताज्याधिकरणम् ॥ १८ ॥

## अथैकोनविंशं श्येनाङ्गानां दृतिनवनीताज्यताधिकरणम्

### तत्काले च लिङ्गदर्शनात् ॥

### ( संशयसङ्गती )

इदानीं सन्दिह्यते—किं सुत्याकालानामङ्गानां नवनीतम्[१] उत सर्वेषामिति । नवनीतविधौ सिद्धे तद्विशेषः प्रसङ्गान्निरूप्यते ।

### ( पूर्वपक्षः )

अत्रायं पूर्वपक्षिणोऽभिसन्धिः—अविशेषश्रुतस्य तिनवनीतविधेरौत्सर्गिकं प्रधानगामित्वं न्यायतः परित्यज्य भवत्वङ्गगामित्वम् । प्रधानसन्निधिपरित्यागे तु न कारणमस्ति । सन्निधिकालानुष्ठेयस्य प्रधानस्य मुख्यकालीनान्यङ्गानि भवन्ति सन्निहितानि । अतः प्रधानसम्बन्धानुरोधात्तत्कालीनाङ्गानामेवाज्यकार्ये नवनीतविधिरिति । किञ्च श्येने यद्विशेषविहितं मुख्यकालीनमेव दृष्टम्, यथा "सह प नालभत" इति पशूनां सहालम्भः, तथैतदपि ।

### ( सिद्धान्तः )

अयमभिप्रायः—भवेदेवं यदि सन्निधानाद्वाक्यं बलवन्न भवेत् । तथाहि—दृतिनवनीतमाज्येनेति 'सर्वेषां वा शेषत्वस्यातत्प्रयुक्तत्वात्'

---

१ अत्र ग्रन्थपातः । आधिकरणसमाप्तिग्रन्थोऽशुद्धोऽनन्वितश्च ।

इत्यनेन न्यायेनाङ्गप्रधानार्थत्वप्रसक्तौ प्रधानस्य सोमद्रव्यकत्वेनाज्यकार्याभावात्तत्र मा भवतु दृतिनवनीतविधानम्, श्येनसम्बन्धिसकलाङ्गसम्बन्धे तु न प्रमाणमस्तीति वाक्यबलीयस्त्वात्सकलाङ्गसम्बन्धित्वमेवेति नवनीतविधेरिति सिद्धम् । यत्तु लिङ्गदर्शनं तन्न्यायशास्त्रं यदि त्रयाणां पशूनां श्रुत्या सहभावः श्रुत्या काले श्रूयते तदा सर्वेषामेव पशू.....................नातिक्रमो भवेत् । अग्नीषोमीये तु (?) आनुबध्यायास्तु स्थाने सहारम्भे क्रियमाणेऽन्यतरस्य सुत्यैककालीनसवनीयनान्तरीयकत्वादन्यतरमेव व्यवधानं भवेत् । तथाच सूत्रम्—'न्यायोक्ते लिङ्गदर्शनम्' इति । सूत्रन्तु—श्रुत्या दृतिनवनीतं सम्भवतीति न तस्य सवनीयकालाङ्गार्थत्वमिति प्रयोजनाविशेषात्सवनीयसम्बन्धो नैवास्य चोदित इति ।

इत्येकोनविंशं श्येनाङ्गानां दृतिनवनीताधिकरणम् ॥ १९ ॥

### अथ विंशं सवनीयहविषां मांसमयत्वाधिकरणम्

## मांसन्तु सवनीयानां चोदनाविशेषात्स्यात् ॥३.८.४२॥

शाक्यानामयनं षट्त्रिंशत्संवत्सरम् । तत्रेदं समामनन्ति—"संस्थिते संस्थितेऽहनि गृहपतिर्मृगयां याति, स तत्र यान् मृगान् हन्ति तेषां तरसाः पुरोडाशाः सवनीया भवन्ति" इति । तत्र

सन्देहः—किं सवनीयानामन्येषाञ्च सम्भवतां पुरोडाशानां स्थाने तरसाः ? उत सवनीयानामेवेति। पूर्वापवादेनेदमारभ्यते।

( पूर्वपक्षः )

अत्रायं पूर्वपक्षः—"सवनीया भवन्ति" इति श्रूयते। तत्र सवनीयत्वविशिष्टपुरोडाशोद्देशेन तरसविधिः सम्भवति। उद्दिश्यमानविशेषणाविवक्षायां वाक्यभेदप्रसङ्गात्। अन्यतरोद्देशेन च तरसविधौ सन्निकर्षविशेषात्पुरोडाशोद्देशेनैव युक्तः न तु व्यवहितसवनीयोद्देशः। सवनीयपदं तु लक्षणया सवनीयपुरोडाशानुवादक्रमवयुत्यानुवादो वेति। तेन षट्त्रिंशत्संवत्सराख्यायां विकृतौ मांसविधिरयं सवनीयपुरोडाशविषय एवेति। एवं प्राप्ते—

( सिद्धान्तः )

अभिधीयते—भवेदेवं यदि सवनीयशब्दः प्रमादपाठो भवेत्। तथाहि—यदा पुरोडाशोद्देशेन मांसविधानं तदा सवनीयशब्दः सवनीयपुरोडाशेषु लाक्षणिको वक्तव्यः। लक्षणा च सम्बन्धविधिना। न च सवनीयपुरोडाशानां सवनीयशब्दोपात्तैः पुरोडाशधानादिभिः कश्चित्सम्बन्धोऽस्ति, येन लक्षणा भवेत्। तथाच श्रुत्यनुवादत्वं सवनीयशब्दस्य पुरोडाशाः सवनीया इति सामानाधिकरण्यानुपपत्तेः। जातिगुणावयव-

द्वारेण समानविषययोर्हि शब्दयोः सामानाधिकरण्यं भवति। यथा गौः शुक्ला इति, न तु गावः शुक्ल इति नानाजातीया वा पुरुषा ब्राह्मणा इति। सवनीयोद्देशेन तरसविधौ पुरोडाशस्य धानादेश्च सवनीयत्वं न सम्भवतीति छत्रिन्यायेन पुरोडाशशब्दस्य सवनीयशब्दोपात्तेषु पुरोडाशधानादिषु लक्षणया वृत्तिरिति। न च पूर्वपक्षे सवनीयपदस्यानुवादप्रयोजनमप्यस्ति। सिद्धान्ते तु हविर्व्यतिरिक्तानामान्येषामपि सवनीयत्वात् हविःपरत्वज्ञापनार्थो युक्तः पुरोडाशपदेनानुवाद इति। किञ्च प्रकृतौ "पुरोडाशानलङ्कुरु" इति प्रैषे पुरोडाशशब्दस्य लक्षणावृत्तत्वं दृष्टम्। अतो जघन्यत्वात्पुरोडाशशब्दस्यैव लाक्षणिकत्वमुचितम्। न त्वप्रतीतलक्षणामुचितम्। न च प्रतीतलक्षणादृते (?) सवनीयशब्दस्य नैकसवनीयवर्त्तिनां पुरोडाशधानादीनां स्थाने तरसविधिरिति सिद्धम्।

प्रयोजनम्—पूर्वपक्षे सवनीयपुरोडाशानामेव कार्यं मांसेन कर्तव्यम्। सिद्धान्ते त्वेकस्यैव सवनीयस्य पुरोडाशस्य धानादीनां वेति। सूत्रन्तु—सवनीयपुरोडाशादीनां कार्ये मांसचोदनाविशेषादिति॥

इति विंशं सवनीयहविषां मांसमयत्वाधिकरणम्॥ २०॥

यो नाम कश्चिदिह संविदितं प्रमेयं
ग्रन्थान्तरे लिखति वा वदति स्वयं वा।
मत्कर्तृतामननुकीर्त्य स कीर्त्तिलोभात्
निस्सन्ततिर्जगति जन्मशतानि भूयात् ॥

इह सकलतन्त्रटीकारहस्यमाकृष्य ईषदन्तरवचनैः पञ्चशताधिकदशभिः सहस्रैर्निबद्धमिति (?) ॥

इति बालबलभीभुजङ्गापरनाम्नो भट्टभवदेवस्य कृतौ
तौताततिमततिलके तृतीयस्याध्यायस्याष्टमः पादः ॥

समाप्तश्चायं तृतीयोऽध्यायः

ग्रन्थोऽप्यत्रैव परिसमाप्तः ॥



# एतद्ग्रन्थोदाहृतविषयवाक्यानामुद्धृतवाक्यानाञ्च

# आकरसूची


| | | |
|---|---|---|
| अकथितञ्च | पा. सू. १. ४. ५१ | २५६ |
| *अक्ताः शर्कराः | तै. ब्रा. ३. १२. ५. | २६. ९४. २१२. २१५. ६३०. ६३१. |
| अक्षरैरेव बुध्यन्ते | तं. वा. पृ. ३४४. | १८६. |
| अक्षैर्दीव्यति | मै. सं. ४. ५. ६. | २७३. |
| अखण्डामकृष्णलाञ्च | | ७६४. |
| अगत्या लक्षणावृत्तिः | तं. वा. पृ. ७२८. | ५३३. |
| अङ्गं वा समभिव्याहारात् | का. श्रौ. ४. २९. | ७१. |
| अङ्गगुणविरोधे च | जै. सू. १२. २. २७. | ६३७. ८५१. |
| अङ्गद्वारः प्रधानेषु | | ४. |
| अङ्गानि वेदाश्चत्वारः | | ८१. |
| अग्न आयाहि वीतये | ऋ. सं. ५. ४. २२. | ६००. |
| *अग्नये पवमानाय | तै. सं. २. २. ४. | ७४१. ७४७. |
| *अग्नये वैश्वानराय | मै. सं. | ५९४. |
| अग्नाइ पत्नीवन् | तै. सं. १. ४. २७. | ६१४. |
| अग्नाविष्णू मा वाम् | तै. सं. १. १. १२. | ८५५. |
| अग्निः पूर्वेभिः | ऋ. सं. १. १. २. | २८९. २९०. |
| *अग्निं चिनुते | तै. सं. ५. ६. ३. | ४४९. ४५१. ४५३. ५९०. |
| अग्निमनीकम् | तै. सं. ६. २. ३. | ३०२. |
| अग्निमनुयजति | | ४५२. |
| अग्निमुपनिधाय | तां. ब्रा. २१. २. ९. | १५९. १६३. ३०३. |
| अग्निरिदं हविरजुषत | तै. ब्रा. ३. ५. १० | |
| अग्निर्ज्योतिर्ज्योतिः | तै. ब्रा. २. १. ९. | १६८. |
| अग्निष्टोमसाम कृत्वा | तां ब्रा. १७. ६. १. | ३९९. |
| अग्निष्टोमान्यमात्रे हि | तं. वा. पृ. ८७५. | ६७६. |


*एतच्चिह्नाङ्कितानि विषयवाक्यानि, चिह्नरहितानि चोद्धृतवाक्यानीति द्रष्टव्यम्।

| | | |
|---|---|---|
| *अग्निष्टोमेनाग्निम् | | ४५०. |
| *अग्निष्टोमे प्रवृणक्ति | | ६८०. ६८१. |
| *अग्निहोत्रं जुहुयात् | | १६५. ४७१. ७९५. |
| *अग्निहोत्रं जुहोति | तै. सं, १. ५. ९. | १६५. १६९. ३२७. ३४९. ३५१. ३५३. ४७१. ५६२. |
| अग्निहोत्रादिशब्देन | तं. वा. पृ. ६१३. | ४५४. |
| *अग्नीदग्नीन् विहर | श. ब्रा.. ४. २. ४. ११. | २९५. |
| अग्नीधे स्रुचौ प्रदाय | आप. श्रौ. ३. १६. १७. | ६९३. |
| *अग्नीनादधीत | तै. ब्रा. १. १. २. | ५२२. |
| *अग्नीन् सम्मार्ष्टि | | २५१. |
| अग्नीषोमाविदं | तै. ब्रा. ३. ५. १०. | ५९०. |
| *अग्नीषोमीयमेकादश | | ४६२. |
| *अग्नेस्तृणान्यपचिनोति | | २४८. ५१८. |
| अग्नेस्तोत्रम् | ता. ब्रा. ६. ३. ५. | ४५१. ४५३. |
| अजोऽग्नीषोमीयः | | १६१. |
| अण्व्या धारया गृह्णाति | आप. श्रौ. | ३६७. |
| अतश्च पदमेवैतत् | तं. वा. पृ. ६८०. | ५१४. |
| अतिरात्रश्चतुर्विंशं | तां. ब्रा. २५. १. १. | ४५९. |
| अत्यन्तरूढशब्दत्वात् | तं. वा. पृ. ६११. | ४५२. |
| अत्राप्याधारनिर्देशात् | तं. वा. पृ. ५४२. | ३९९. |
| अदृष्टः प्रकृतावर्थः | तं. वा. पृ. ४५३. | ३०४. |
| अथ च स्मरन्ति | शा.भा. १. ३. १. पृ४४, | ६१. |
| अथ यत्रेति सन्दिग्धे | तं. वा. पृ. ३५८. | २१७. |
| *अथातोऽग्निम् | | ४९०. |
| अथातो धर्मजिज्ञासा | जै. सू. १. १. १. | १४. |
| अथेदानीं यत्र न वैदिकम् | शा. भा. १. ३. १. पृ. ४४. | ६१. |
| *अथैतेन सहस्रदक्षिणेन | | ३८२. |
| *अथैषग्वाऽभिचरन् | षड्विं. ब्रा. ३. ८. | १७१. |
| *अथैष गौः | तां. ब्रा. १६. ३. १. | ३८२. |

| | | |
|---|---|---|
| *अथैष ज्योतिः | तां. ब्रा. १६. ८. १. | ३८०. ४०५. ४२८. ४५०. ५१२. |
| *अथैष श्येनेनाभिचरन् | षड्वि. ब्रा. ३. ८. | १७१. |
| *अथैष विश्वज्योतिः | तां ब्रा. १६. १०. १. | ३८०. |
| *अथैष सन्दंशेन | षड्विं. ब्रा. ३. १०. | १७१. |
| *अथैष सर्वज्योतिः | तां. ब्रा. १६. ९. १. | ३८०. |
| अदितिमोदनेन | | १०२. १०६. |
| अधीत्य स्नायात् | बौ. गृ. सू. ६. १. | ७१. |
| अध्वर्युर्गृहपतिं | श. ब्रा. १२. १. १. १०. | ८१४. |
| अध्वर्युं वृणीते | | ८०१. |
| अध्यायेन द्वितीयेन | शालिकनाथः | ३१२. |
| अनधीयाना व्रात्या भवन्ति | | १७. |
| अनन्तरस्य वाक्यस्य | तं. वा. पृ. ४५७. | ३०७. |
| अनन्तरेण सम्बन्धः | तं. वा. पृ. ४५५. | ३०५. |
| अनन्तरेण सम्बध्य | तं. वा. पृ. ४५७. | ३०६. |
| अनन्तरोपविष्टेन | तं. वा. पृ. ५३२. | ३८४. |
| अनपायो हि कालस्य | जै. सू. १०. ८. ६९. | ३४८. |
| अनभ्यस्ते त्वपेक्षन्ते | श्लो. वा. १. १. ५. पृ. ४१५. | १४१. |
| अनवानं यजति | शां. श्रौ. ३. ८. २३. | ७२२. |
| अनुपकारिणि हि | तं. वा. पृ. १०७६. | ७८२. |
| अनुष्ठाने पदार्थानाम् | तं. वा. पृ. ४३३. | २८०. |
| अनुवाक्यामन्वाह | | ५६४. |
| *अन्नाद्यकामं याजयेत् | | ४६६. |
| अन्य एव हि सम्बन्धः | तं. वा. पृ. ८३४. | ६६०. |
| अन्यवेश्मस्थितात् | तं. वा. पृ. २४४. | १२१. |
| अन्यायश्चानेकार्थत्वम् | | ५८७. |
| अन्याय्यश्चानेकशब्दत्वम् | जै. सू. १. ३. २६. | ३८१. |
| अन्यो वा स्यात्परिक्रय० | जै. सू. ३. ७. २०. | ८२९. |
| अपरेण वेदिं | | ७९४. |
| *अपशवो वा अन्ये | तै. सं. ५. २. ९. | २०६. २०७. |

| | | |
|---|---|---|
| अपि वा कर्तृसामान्यात् | जै. सू. १. ३. २. | ८०. ९९. |
| अपूर्वत्वाद्विधानस्य | तं. वा. पृ. ४८९. | ३३७. |
| अपेक्षितत्वात् | आचार्यः | ४९३. |
| अप्राप्ते शास्त्रमर्थवत् | जै. सू. | १५. |
| *अभिक्रामञ्जुहोति | तै सं २. ६. १. | ४७३.४७५.५३५.५३७. |
| अभितः सामिधेनीनां | तं. वा. पृ. ७३३. | ५४४. |
| अभिधेयाविनाभूते | तं. वा. पृ. ३५४. | १४३. २०५. २५४. |
| अभियुक्ततरा ये ये | तं. वा. पृ. २२०. | ९८. |
| *अमावास्यायामपराह्णे | | ५३. |
| अमावास्यायाममावास्यया | | ३२७ ३३१. ७५७. |
| अमावास्यायां पूर्वेद्युर्वेदिं | | ६७३ |
| अयज्ञो वा एष योऽसामा | तै. सं. १. ५. ७. | २०६. |
| अयनेषु चोदनान्तरं | जै. सू. २. ३. ५. | ६९२. |
| अरत्निमात्रे विधृती | | ८६०. |
| *अरुणयापिङ्गाक्ष्यैकहायन्या | तै. सं. ६. १. ६. | १७७. ३१५. ३८५. ५०३. ६४३. |
| अर्थवादकृताऽप्यत्र | तं. वा. पृ. २२३. | १०६. |
| अर्थादनेकमप्यर्थम् | तं. वा. पृ. ३३०. | १६१. |
| अर्थैकत्वादेकं वाक्यम् | जै. सू. २. १. ४६. | १९९. |
| अर्थोऽपि यादृशो यत्र | तं. वा. पृ. ४२१. | २७३. |
| *अर्धमन्तर्वेदि मिनोति | मै. सं. ३. ९. ४. | ७९०. ७९१. |
| अल्पं जुहोति | | ६९१. ७०१. ७०२. |
| अविच्छिन्ने कथंभावे | तं. वा. पृ. ८१७. | ६४५. |
| अव्यक्तासु तु सोमस्य | जै. सू. ८. १. १६. | १५३. |
| अव्यवस्थितवाच्यार्थ० | | ५. |
| *अष्टकाः कर्त्तव्याः | आश्व. गृ. | ५३. |
| *अष्टवर्षं ब्राह्मणं | | ५२०.५२१.५२२.५२४. |
| अष्टाचत्वारिंशतं वर्षाणि | बौ. सू. १. ३. १. | ६२. |
| अश्वमालभेत | | १२४. |
| *असत्रं वा एतद्यत् | तै. सं. ७. ४. २. | २०६. |
| असंयुक्तं प्रकरणात् | जै. सू. ३. ३. ११. | ३९२. ५५५. |

| | | |
|---|---|---|
| असत्स्ववयवार्थेषु | तं. वा. पृ. ३४४. | १८६. |
| असन्तृणे भवतः | तै. सं. ६. २. ११. | ६७४. |
| असाधकन्तु तादर्थ्यात् | जै. सू. ६. १. २. | २२८. |
| अस्तिर्भवन्तीपरः | महाभाष्य. | १५९. १६३. |
| अस्यामृधेद्धोत्रायां | आश्व. सू. १. ९. ९. | ५९०. |
| *अहे बुध्निय मन्त्रम् | तै. ब्रा. १. २. १. | २७९, २८३, २८९, २९०, २९५. |
| अह्नः खः क्रतौ | का. वा. ४. २. ४३. | ६६३, ६६४. |
| आकाङ्क्षातः प्रभृत्येके | तं. वा. पृ. ८३३. | ६५९. |
| आकाङ्क्षा सन्निधानञ्च | तं. वा. पृ. ४५५. | ३०५. |
| आकृतीनामभिव्यक्तिः | तं. वा. पृ. ४३८. | २८६. |
| आक्षेपे चापवादे च | शा. भा. पृ. ४३५. पू. सं. | २८२. |
| आख्यातप्रत्ययः पूर्वम् | तं. वा. पृ. ४६९. | ३२२. |
| आख्यातवर्ती धात्वर्थः | तं. वा. पृ. ३८८. | २२७. |
| आग्नावैष्णवमेकादश | *cf.* श. ब्रा. ३. १. ३. १. | २६९. |
| *आग्नीध्रमुपतिष्ठते | तै. सं. ३. १. ६. | ५९९. |
| *आग्नेयं चतुर्धा करोति | आप. श्रौ. ३. ३. २. | १८१, ४३५, ५६९, ५७०, ६८५, ६८९, |
| आग्नेयमजमग्निष्टोमे | आश्व. श्रौ. ५. ३. | ७५१, ७५४, ७५५. |
| *आग्नेयमष्टाकपालम् | *cf.* तै. सं. २. २. ३. | ४६२. |
| आग्नेयस्य मस्तकं विभज्य | *cf.* आप. श्रौ. ३. १. २. | ५७२. |
| आग्नेयेन यजेत | | ४९६. |
| *आग्नेयो वै ब्राह्मणः | तै. सं. २. ३. ३. | २०५. |
| *आग्नेयोऽष्टाकपालः | तै. सं. २. ६. ३. | ३११, ४६८, ५९८. |
| *अग्नेयोऽष्टाकपालो हिरण्यं | *cf.* तै. सं. १. ८. १९. | ४१७, ४६६. |
| *आग्नेय्याग्नीध्रं | *cf.* तै. सं. ३. १. ६. | ५९६, ५९८. |
| आग्रयणात्पात्नीवतं | तै. सं. ६. ५. ८. | ६१७. |
| आग्रयणादुपांशुपात्रेण | तै. सं. ६. ५. ८. | ६१२. |
| *आघारमाघारयति | तै. सं. २. ५. ११. | १६५, १६६, १७०, ३२५, ३४९, ३५१, ३५३. |
| *आचान्तेन कर्म कर्त्तव्यम् | | ५३, ७६. |

| | | |
|---|---|---|
| आचारात्तु स्मृतिम् | तं. वा. पृ. २२०. | १०१. |
| आचार्यवचः प्रमाणम् | शा. भा. १. ३. ७. | ११७. |
| *आज्यं विलापयति | आप. श्रौ. २. ६. १. | १८३. |
| आज्यभागाभ्याम् | आप. श्रौ. ३. १६. १७. | ४३०. |
| *आज्यभागौ यजति | तै. सं. १. ६. ९. | ३२५. |
| *आज्यान्युपदधाति | | २०९. |
| आज्येन यूपम् | श. ब्रा. ३. ५. ४. १०. | ८५७, ८५९. |
| आज्यैस्स्तुवते | | १५९, १६३, १७१, १७२, २७५. |
| आत्मना ह्यक्रियारूपैः | तं. वा. पृ. ५५६. | ४०१. |
| *आदित्यः प्रायणीयश्चरुः | *cf.* श. ब्रा. ४. ४. २. १. | १०२. |
| *आदित्यो यूपः | ऐ. ब्रा. ५. २७. | १०३, २०६. |
| आनन्तर्यात्प्रधानत्वात् | तं. वा. पृ. ७२७. | ५३१. |
| आनर्थक्यप्रतिहतानां | | ५७९, ७१३. |
| आमिक्षां देवतायुक्ताम् | तं. वा. पृ. ५३४. | ३८७. |
| आम्नायं कुर्वन्मौनमाचरेत् | | ५८१. |
| आयुर्दा अग्नेऽस्यायुः | तै. सं. १. ५. ५. | ८३९. |
| *आयुर्यज्ञेन कल्पताम् | तै. सं. १. ७. ९. | २९८. |
| आयुष्यं प्राङ्मुखो भुङ्क्ते | | १४६. |
| *आश्ववालः प्रस्तरः | *cf.* श. ब्रा. ३. ३. १७. | १०२, १०६. |
| आश्विनं ग्रहं गृहीत्वा | *cf.* श. ब्रा. ४. २. ४. १२. | ७५१, ७६०. |
| आश्विनो दशमो गृह्यते | कपि. सं. ४२. ५. | ३६१, ३६५. |
| आहवनीये जुहोति | तै. ब्रा. १. १. १०. | ४२५, ४४९, ७४३. |
| आहिताग्निराहवनीयः | | ४२३, ५६२. |

इ

| | | |
|---|---|---|
| इक्स्तिपौ धातुनिर्देशे | | १२६. |
| *इडान्तातिश्या सन्तिष्ठते | *cf.* श.ब्रा. ३.३.२.२६. | ४४३. |
| *इडो यजति | तै. सं. २. ६. १. | ३१९. |
| इत इन्द्र ऊर्ध्वो अध्वरः | | ३५१. |
| इतरमन्यस्तेषाम् | जै. सू. ३. ८. २१. | ८०६. |
| *इदं द्यावापृथिवी | तै. ब्रा. ३. ५. १. | ५९०. |

| | | |
|---|---|---|
| इदं हविरजुषत | तै. ब्रा. ३. ५. १०. | ५८७. |
| इन्द्र ऊर्ध्वो अध्वरः | | १७०. |
| इन्द्रपीतस्य भक्षयामि | तै. सं. ३. २. ५. | ६८७. |
| इन्द्रस्य नु वीर्याणि | ऋ. सं. | २७१, २७५. |
| *इन्द्राग्नी नवतिं पुरः | मै. सं. ४. ११. १. | ५९४. |
| *इन्द्राग्नी रोचनादिवः | मै. सं. ४. ११. १. | ५९४. |
| इन्द्राय त्वा वसुमते | मै. सं. ४. ५. ४. | ६०८, ६२०. |
| *इन्द्राय राथन्तराय | तै. सं. २. ३. ७. | ६९६. |
| इन्द्रेण यस्मिन्सवने | तं. वा. पृ. ८०२. | ६२६. |
| *इमामगृभ्णन् रशनामृतस्य | तै. सं. ५. १. २. | ४९. |
| *इयति शक्ष्यामहे | मै. सं. ३. ८. ४. | ७८४, ७९१. |
| इषे त्वेति शाखां छिनत्ति | आप. श्रौ. १. १. ११. | २९९, ३००. |
| *इषे त्वोर्जे त्वा | तै. सं. १. १. १. | २९८, २९९, ३०१. |
| *इष्टकाभिरग्निं चिनुते | तै. सं. ५. ६. ६. | २०८, ४५०. |
| *ईषामालभेत | आप. श्रौ. १. १७. ७. | ४३१, ४३७. |
| इहाम्नानादिनियमः | श्लो. वा. पृ. ३३. चौ. सं. | ७२. |
| उ | | |
| *उच्चैः ऋचा क्रियते | | ६२८, ६३०, ६३२, ६३४. |
| *उच्चैर्निगदेन | | २९३, २९४. |
| *उच्चैस्साम्ना क्रियते | | ६३५. |
| उच्छिनष्टि न सर्वं जुहोति | तै. ब्रा. | ६९४, ६९५. |
| उच्यते यो गुणः काम्यः | तं. वा. पृ. १०३५ | ७४०. |
| *उज्जितीर्यजमानं | | ८४२. |
| *उत यत्सुन्वन्ति | | ७९३. |
| *उत्तरार्धात् स्विष्टकृते | आप. श्रौ. २. २१. ३. | ६७९, ६९५. |
| उत्ताना वै देवगवा वहन्ति | | १३२, १३३. |
| *उत्तिष्ठन्नन्वाह | आप. श्रौ. १२.१७.२०. | ५८३, ५८४. |
| उत्पत्तौ येन संयुक्तं | | ५८८. |
| उत्सर्गे तु प्रधानत्वात् | जै. सू. ३. ७. १९. | ७९७. |
| उत्सादनदेशादवयति | | ६८४. |
| उद्गातात्मने च यजमानाय | | ८३८. |

| | | |
|---|---|---|
| उद्गातारं वृणीते | | ७०४. |
| *उद्भिदा यजेत | तां. ब्रा. १९. ७. २, ३. | १४५, १५१, ३२३. |
| उपक्रमोपसंहार | तं. वा. पृ. ६५५ | ४८६. |
| उपनिष्क्रम्य यूपं | *cf.* श. ब्रा. ३. ५. ४. २१. | ७६१. |
| उपनीय तु यश्शिष्यम् | मनु. २. १४०. | ११८. |
| *उपव्ययते देवलक्ष्ममेव | तै. सं. २. ५. ११. | ५४२. |
| *उपसद्भिश्चरित्वा | तां. ब्रा. २५. ४. १. | ४५५. |
| *उपस्तृणानभिघारयान् | तै. सं. २. ६. ३. | १७०. |
| उपहूत उपह्वयस्व | श. ब्रा. २. ४. १. २५. | ७१९. |
| उपादेयो गुणो यत्र | तं. वा. पृ. ६१५ | ४५८. |
| उपान्मन्त्रकरणे | पा. सू. १. ३. २५. | ५७७. |
| उपांशुपात्रेण पात्नीवतं | तै. सं. ६. ५. ८. | ६४१. |
| *उपांशु पौर्णमास्याम् | शां. ब्रा. ३. ६. | ३४२. |
| * उपांशु यजुषा | | २९३, २९४, ८२६. |
| *उपांशुयाजमन्तरा यजति | तै. सं. २. ६. ६. | ३४०, ३४२, ३४६. ३४५, ५७०. |
| उपास्मै गायता नर इति | तां. ब्रा. १६. ११. २. | ६६७. |
| उपोद्घातप्रसक्तात्तु | तं. वा. पृ. ४६१. | ३४१. |
| उपोप्तेऽन्ये ग्रहाः | तै. सं. ६. ५. २. | ७५८. |
| *उरु प्रथा उरु प्रथस्वेति | श. ब्रा. १. १. ६. ८. | ४१, ५०, २०९. |

ऊ

| | | |
|---|---|---|
| *ऊर्गित्यन्नाद्यकामाय | तां. ब्रा. ८. ८. १८. | ४०६. |
| ऊर्जेत्वेत्यनुमार्ष्टि | आप. श्रौ. १. १. ११. | ३००. |
| *ऊर्ध्वमाघारयति | *cf.* आप. श्रौ. २. १४. १. | ३४९. |
| ऊर्ध्वो अध्वरो दिवि | Do. | ३५५. |

ऋ

| | | |
|---|---|---|
| ऋग्भिः पूर्वाह्णे | | ६३३. |
| ऋच्यध्यूढं साम गायति | | २९१, ३७३, ६३४. |
| ऋजुमाघारयति | *cf.* आप. श्रौ. २. १२. ७. | ३४९. |
| ऋत्विग्भ्यो ददाति | | ८११. |
| ऋत्विज उपवसन्ति | | ८३०. |

| | | |
|---|---|---|
| ऋत्विजो वृणीते | | ७९७, ८००. |
| ऋद्धिकामाः सत्रमासीरन् | | ४६०. |
| ऋघ्नोत्येव | तै. सं. ५. ७. ४. | ४५०. |
| ए | | |
| एकं साम तृचे क्रियते | | ७१०. |
| एककपालं जुहोति | | २४५. |
| एककपालं सर्वहुतम् | | २०४. |
| एकखण्डेन शब्देन | तं. वा. पृ. ४४१. | २९१. |
| एकदेशो ऽपि यो दृष्टः | तं. वा. पृ. ३४३ | १८४, ४१८. |
| एकद्रव्ये च संस्काराणां | जै. सू. ११. ४. २. | ६९६. |
| एकवाक्यतया यावत् | तं. वा. पृ. ८२२. | ६५६. |
| एकविंशतिमनुब्रूयात् | तै. सं. २. ५. १०. | ५४५, ४४६. |
| एकस्मै वान्या इष्टयः | | ४६०. |
| एकस्य कर्मभेदादिति चेत् | जै. सू. ३. ७. २३. | ८००. |
| एकस्य तूभयत्वे संयोग० | जै. सू. ४. ३. ५. | ४२०, ७७३. |
| एकस्यैवं पुनः श्रुतिः | जै. सू. २. २. २. | ४७८. |
| एकहायन्या क्रीणाति | तै. सं. ६. १. ६. | ५९९. |
| एकादश प्रयाजान् यजति | *cf.* श. ब्रा. ३. ६. ५. १. | ३७८. |
| एका देया षड्देयाः | तै. ब्रा. | ११५, ६६३. |
| एकार्थत्वं पदस्य | तं. वा. पृ. ४४६ | २९७. |
| एकोऽपि बहुभिर्मन्त्रः | तं. वा. पृ. ४४९ | ३००. |
| एतयान्नाद्यकामं याजयेत् | | ४२०, ४२२. |
| *एतस्यैव रेवतीषु | तां. ब्रा. १७. ७. १. | ३९७. |
| *एतानि वै दश यज्ञायुधानि | तै. सं. १. ६. ८. | ५०१, ५०२, ५०३. |
| एतानि वै द्वादश | | ८४५. |
| एतेन राजपुरोहितौ | | ६६७. |
| *एतेन सहस्रदक्षिणेन | | ३८०. |
| *एष वाव प्रथमो यज्ञः | तां. ब्रा. १६. १. २. | ४५०, ६७८, ६७९. |
| *एषह वै हविषा हविर्यजते | तै. सं. ३. ३. ४. | ४४५. |
| ऐ | | |
| ऐकरूप्येण सम्बन्धः | तं. वा. पृ. ३७३ | २२३. |

| | | |
|---|---|---|
| *ऐन्द्रं दध्यमावास्यायाम् | तै. सं. २. ५. ४. १. | ३२५, ३८६, ७५६. |
| *ऐन्द्रं पयोऽमावास्यायां | | ३११, ७५६. |
| ऐन्द्रवायवं गृह्णाति | मै. सं. ४. ५. ८. | ३५७, ३६६. |
| *ऐन्द्रवायवाग्रान् ग्रहान् | आप. श्रौ. १२. १४. १. | ४१२. |
| *ऐन्द्राग्नं गृह्णाति | श. ब्रा. ४. ५. २. १२. | ६२०. |
| ऐन्द्राग्नमेकादशकपालं | मै. सं. २. १. १. | ५९४. |
| ऐन्द्रो राजन्यः | तां. ब्रा. १५. ५. ८. | २०५. |
| *ऐभिरग्ने सरथं याहि | | ६१६. |
| ऐन्द्र्या गार्हपत्यमुपतिष्ठते | मै. सं. ३. २. ४. | ४२, ६६, ६४३, ६९२, ६५४. |
| *ऐन्द्र्या सदः | तै. सं. ३. १. ६. | ५९६. |
| ऐरं कृत्वोद्गेयम् | तां. ब्रा. ८. ६. १०. | ४२५. |
| *औदुम्बरीं स्पृष्ट्वोद्गायेत् | | ६२. |
| *औदुम्बरो यूपो भवति | तै. सं. २. १. १. | २६, २८. |
| क | | |
| कःशेषः? केन हेतुना शेषः | शा. भा. ३. १. १. | ४८८. |
| *कदाचन स्तरीरसि | मै. सं. १. ५. ४. | ५७७, ६५२. |
| कदाचिच्छ्रुतिमूलत्वम् | तं. वा. पृ. १९६. | ६५. |
| करणानां व्यवस्था हि | तं. वा. पृ. ४५८. | ३०७. |
| करणेषूपदिष्टेषु | तं. वा. पृ. ३३७. | १७५. |
| कर्तरि कृत् | पा. सू. ३. ४. ६७. | ५८१. |
| कर्तुरीप्सिततमं कर्म | पा. सू. १. ४. ४९. | २५२, २५५. |
| कर्मस्थो हि कथंभावः | तं. वा. पृ. ६२४. | ४७२. |
| कर्माण्यपि जैमिनिः | जै. सू. ३. १. ४. | २२८. |
| कर्मार्थन्तु फलं तेषां | जै. सू. ३. ८. २८ | ८५६. |
| कवतीषु स्तुवते | | २७५. |
| कामन्तु योऽनूचानः | शां. ब्रा. ८. ३. | ६८१. |
| काम्यनैमित्तिकानां च | तं. वा. पृ. १०३३. | ७३९. |
| कारणादेकदेशे स्यात् | जै. सू. ३. ५. २६. | ७०५. |
| कार्पासमुपवीतम् | मनु. २. ४४. | १०३. |
| किन्त्वयं तद्धितान्तानाम् | तं. वा. पृ. ५२३. | ३७६. |

| | | |
|---|---|---|
| कृतार्थे मन्त्रपाठे तु | तं. वा. पृ. ७५० | ५७५. |
| कृत्तद्धितसमासेषु | | ५०४. |
| कृत्वाशब्दार्थमेवैकम् | तं. वा. पृ. ५५६. | ४०४. |
| *कृष्णकेशोऽग्नीनादधीत | | ६२. |
| *क्लृप्तीर्यजमानं वाचयति | cf. श. ब्रा. ५. १. ६. ४. | ३००, ३०१, ८४२. |
| केशश्मश्रु वपते | तै. सं. ६. १. १. | ८३०. |
| के शिष्टाः ये सदाचाराः | तं. वा. पृ. | ८९. |
| क्रतुकार्यविशेषोऽयं | तं. वा. पृ. ७७८. | ६००. |
| क्रतुमध्यप्रयोगो हि | तं. वा. पृ. ४८७. | ४२२. |
| क्रत्वङ्गत्वेन नैवेह | तं. वा. पृ. ११०२. | ८१५. |
| क्रत्वर्थाङ्गप्रहाणे हि | तं. वा. १०३४. | ७३८. |
| क्रयश्चावगतद्रव्य | तं. वा. पृ. ६९३. | ५१७. |
| क्रयापेक्षित एवायं | तं. वा. पृ. ६९४. | ५१७. |
| क्रियापदैकयोगित्वे | तं. वा. पृ. ४८८. | २७८, ३३३. |
| क्षोमा चार्धश्च वैकर्तनश्च | | ८०५. |
| क्षौमे वसानावग्निमादधीयातां | | ६६६. |
| **ग** | | |
| *गवाभिचरन् यजेत | | १७४. |
| *गवा यजेत | | १३५, २९१. |
| गवाश्वादिगतां पूर्वम् | तं. वा. पृ. ३६२. | २०७. |
| *गायत्रच्छन्दसः | तै. सं. ३. २. ५. | ६२३. |
| गुणत्वाद्वेदेन न व्यवस्था | जै. सू. ३. ८. १२. | ८३४. |
| गुणत्वेन तस्य निर्देशः | जै. सू. ३. ८. ६. | ८३४. |
| गुणमुख्यव्यतिक्रमे | जै. सू. ३. ३. ९. | ८२५. |
| गुणवचनानामाश्रयतः | | ५१०. |
| गुणवचनेभ्यश्च | पा. सू. ५. १. १२४. | ५०७. |
| गुणानाञ्च परार्थत्वात् | तं. वा. पृ. ७३९. | ५६४. |
| गुणानाञ्च परार्थत्वादसम्बन्धः | जै. सू. ३. १. २२. | ७४२. |
| गुणानां यत्र भूयस्त्वं | तं. वा. पृ. ८१५. | ६४०. |
| गुणान्तरावरुद्धत्वात् | तं. वा. पृ. ३४७. | १९३. |

| | | |
|---|---|---|
| गुणान्तरावरुद्धत्वात् | तं. वा. पृ. ५३२. | ३८९. |
| गुणार्थेन पुनः श्रुतिः | जै. सू. १. ४. ४१. | ४९. |
| गुणार्थौपवसथ्येऽह्नि | तं. वा. पृ. १०४४. | ७५५. |
| गुणे त्वन्याय्यकल्पना | जै. सू. ९. ३. ५. | ६३२, ७०४. |
| गुणे स्वरूपतो धर्मः | तं. वा. पृ. ८१०. | ६३६. |
| गुणो विधीयमानोऽपि | तं. वा. पृ. ३२३. | १५०. |
| *गोदोहनेन पशुकामस्य | तै. ब्रा. २. १. ५. ६. | २००, २२८, ७३७. |
| गौणत्वं यत्र नाम स्यात् | तं. वा. पृ. ७५३. | ५७८. |
| गौणे लाक्षणिकम् | तं. वा. पृ. २३२. | ९२. |
| ग्रन्थग्रहणमात्रे च | श्लो. वा. पृ. ३२. चौ. सं. | ७२. |
| *ग्रहं सम्मार्ष्टि | | ४७९, ५१९, ५२३, ५२५. ५५३, ५५९. |
| ग्रहणं नामधेयञ्च | तं. वा. पृ. ६०९. | ४४८. |
| ग्रहैकत्वे यदोद्दिश्य | तं. वा. पृ. ७०७. | ५२५. |
| ग्रहैर्जुहोति | | ५२०, ५२३, ५२४, २२५. |
| घ | | |
| घृतं प्रोक्षणं भवति | मै. सं. २. १. ५. | १८७. |
| घृतं मधु | | १३२. |
| च | | |
| चतुरवत्तं जुहोति | | ६९०, ६९१, ६९२. |
| चतुरो मुष्टीन्निर्वपति | आप. श्रौ. १. १८. २. | २४, ४३१. |
| चतुर्गृहीतं वा एतदभूत् | | ३९१, ३९९. |
| *चतुर्होत्रा पौर्णमासीं | आप. श्रौ. २. ११. ५. | २४२, ७८९. |
| चमसाध्वर्यवो भवेयुः | | ८२४. |
| *चमसाध्वर्यून्वृणते | | ८०१, ८०४. |
| चमसैर्जुहोति | | ६९०. |
| *चरुमुपदधाति | | ४४०. |
| चिकीर्षया च संयोगात् | जै. सू. ३. ७. ७. | २६७, ७९१, ७९२. |
| *चित्पतिस्त्वा पुनातु | तै. सं. १. २. १. | ३०९, ३०६. |
| चित्रत्वस्त्रीत्वयोगो हि | तं. वा. पृ. ३२८. | १६९. |
| *चित्रया यजेत पशुकामः | तै. सं. २. ४. ६. १. | १९४, २२१. |

| | | |
|---|---|---|
| चिन्निणीरुपदधाति | | ७६४. |
| चोदनार्थानुरोधेन | तं. वा. पृ. ७१६. | ६१७. |
| चोदनालक्षणोऽर्थो धर्मः | जै. सू. १. १. २. | २, ६९३. |
| चोदना वा गुणानाम् | जै. सू. २. २. ६. | ३३९. |
| चोदनेति क्रियायाः प्रवर्त्तकं | शा. भा. पृ. ३ पं. ९ | २. |
| चोदिते हि तदर्थत्वात् | जै. सू. २. २. ६. | ३९४. |
| छ | | |
| छागो वा मन्त्रवर्णात् | जै. सू. ६. ८. ३१. | २१९. |
| ज | | |
| जनिकर्तुः प्रकृतिः | पा. सू. १. ४. ३०. | १२६. |
| *जाघन्या पत्नीः | श. ब्रा. ३. ७. ६. १. | ६६९. |
| जाघन्युद्दिश्यमाना स्यात् | तं. वा. पृ. ८६९. | ६७१. |
| जातस्य हि व्यवस्थानात् | तं. वा. पृ. ८०४. | ६२९. |
| *जामि वा एतद्यज्ञस्य | तै. सं. २. ६. ६. | ३३१, ३४३. |
| जीवनादेर्निमित्तस्य | आचार्यः | ४७६. |
| जुह्वा जुहोति | | २६१. |
| ज्ञेयभेदे यथा ज्ञानम् | अजिता | २१६. |
| *ज्योतिष्टोमेन स्वर्गकामः | | ७७३, ७७९. ६१८, ३१९, ४११, ६३९, |
| तं चतुर्द्धा कृत्वा पुरोडाशं | श. ब्रा. १. ६. ३. ४० | ७०३, ७९८. ९७२. |
| त | | |
| तण्डुलान् पिनष्टि | *cf.* आप. श्रौ. १.१९.६. | ३६२. |
| ततश्चाप्रतिषिद्धत्वात् | तं. वा. पृ. २१२. | ८७. |
| तत्र नामविशेषेण | तं. वा. पृ. १०३७. | ७३९. |
| तत्र नित्यं परार्थत्वात् | तं. वा. पृ. ७४९. | ९७९. |
| तत्प्रकृतित्वं हि दर्शयति | जै. सू. ३. २. २९. | ६०८. |
| तत्प्रकृत्यर्थं यथान्ये | जै. सू. ३. ६. १४. | ८१८. |
| तत्प्रयोजको हेतुश्च | पा. सू. १. ४. ५५. | १२७. |
| तत्संयोगाद्बहुश्रुतेः | जै. सू. ३. ५. २५. | ७०४. |
| तथापि न्यायतुल्यत्वात् | तं. वा. पृ. २१९. | ९६. |

| | | |
|---|---|---|
| तथायुक्तं चानीप्सितम् | पा. सू. १. ४. ५०. | २५२, २५५. |
| तथा होमाः प्रयुज्यन्ते | तं. वा. पृ. ६५१. | ४८६. |
| तथैकबन्धनार्थत्वात् | तं. वा. पृ. ५१२. | ३६१. |
| तद्भूतानां क्रियार्थेन | जै. सू. १. १. २५. | १९. |
| तद्धितेन चतुर्थ्या वा | तं. वा. पृ. ५३३. | ३२१. |
| तद्वच्च देवतायां स्यात् | जै. सू. १०. ८. ४१. | ३४८. |
| तद्वानासामुपधानो मन्त्रः | पा. सू. ४. ४. १२५. | २०८. |
| *तप्ते पयसि दध्यानयति | | २४८, ३८३. |
| *तनूनपातं यजति | तै. सं. २. ६. १. | ३१९. |
| तनूनपाते स्वाहा | | ३२०. |
| तनूर्वर्षिष्ठा गह्वरेष्ठा | मै. सं. १. २. ७. | ३४२. |
| तन्त्रत्वमैक्यरूपेण | तं. वा. पृ. ३८८. | १७७. |
| तया तत्साधयेन्नित्यं | तं. वा. पृ. ६८०. | ५१४. |
| तस्मात्कृतत्वमात्रेण | तं. वा. पृ. ३१३. | २३१. |
| तस्मात्तदेवेति मते | तं. वा. पृ. ६४६. | ४८२. |
| तस्मात्पदेषु यावत्सु | तं. वा. पृ. ४४५. | २९८. |
| *तस्मात्पूषा प्रपिष्टभागः | तै. सं. २. ६. ८. | ६२८, ६८३, ६८६, ६८७, ६८८. |
| तस्मात्सोमो न | काठ. सं. ११. १. | ७१७. |
| *तस्मादग्नीषोमीये संस्थिते | मै. सं. ३. ७. ८. | ६२. |
| तस्माद्वारणो वै यज्ञावचरः | मै. सं. १. ६. ७. | ५४७, ५४८. |
| तस्मान्मैत्रावरुणः प्रेष्यति | | ८२१. |
| तस्मिन्सीद | तै. ब्रा. ३. ७. ५. | २९७. |
| *तस्य द्वादशशतं | तां. ब्रा. १६. १. ११. | ७८८. |
| तस्य भावस्त्वतलौ | पा. सू. ५. १. ११९. | १४३. |
| *तां चतुर्भिरादत्ते | तै. सं. ५. १. १. | ४९. |
| तादर्थ्यमपि नैवान्यत् | तं. वा. पृ. ६५६. | ४८८. |
| तानि द्वैधम् | जै. सू. २. १. ३. | २५१. |
| तान् पुरोऽध्वर्युर्विभजति | | ७९९. |
| तान्युत्पत्तिमपेक्षन्ते | तं. वा. पृ. ५४१. | ३९१. |

